# सिद्धान्तकौमुद्या वैदिकी प्रक्रियाया

# अष्टाध्याय्यां पाठविमर्शः

( तत्र शाङ्करी-टीका-विमर्शाख्या) विशिष्टव्याख्या
भावार्थ-संवलिता )

व्याख्याकारः

**डॉ. रामकिशोर शुक्लः**

(नव्यव्याकरणाचार्यः, प्राचीनव्याकरणाचार्यः, पी-एच.डी.)

प्राचार्यचरः

राष्ट्रियसंस्कृतसंस्थानस्य

मानितविश्वविद्यालयस्य जयपुरपरिसरस्य

त्रिवेणीनगरम्, जयपुरम् (राजस्थानम्)

# सिद्धान्तकौमुद्या वैदिकी प्रक्रियाया अष्टाध्याय्यां पाठविमर्शः

( तत्र शाङ्करी-तीर्था-विमर्शाख्या विशिष्टव्याख्या भावार्थ-संवलिता )

3.4

व्याख्याकारः
डॉ. रामकिशोर शुक्लः
(नव्यव्याकरणाचार्यः, प्राचीनव्याकरणाचार्यः, पी-एच.डी.)
प्राचार्यचरः
राष्ट्रियसंस्कृतसंस्थानस्य
मानितविश्वविद्यालयस्यजयपुरपरिसरस्य
त्रिवेणीनगरम्, जयपुरम् (राजस्थानम्)

## ॥ अथ वैदिकी प्रक्रिया ॥

## ॥ प्रथमोऽध्यायः ॥

नमस्कृत्य परां वाचं ब्रह्माद्वैतस्वरूपिणीम्।
गायत्रीं गणनाथञ्च भावयेऽभीष्टसिद्धये ॥
अन्नपूर्णाथविश्वेशौ जननीजनकाविव।
भवेतां जीवनेऽस्माकमज्ञानतिमिरापहौ ॥
तीर्थाख्यां जननीं पूज्यां श्रीरामदवराभिधम्।
जनकं तीर्थरूपञ्च प्रणमामि मुहुर्मुहुः ॥
गुरून् यागेश्वरान् वन्दे कारुण्यामृतसागरान्।
हृदये कौमुदी यस्य ह्याभादर्थप्रकाशिनी ॥
येषामाशीः प्रभावेण विद्यां वृत्तिञ्च लब्धवान्।
श्रीमद्रामप्रसादाख्यान् गुरुस्तान् नौमि संततम् ॥
छात्राणामुपकराय विदुषां चिन्तनाय च।
कौमुद्यां वैदिकीं व्याख्यां कुर्वे सुविशदामहम् ॥

छन्दसि पुनर्वस्वोरेकवचनम् (१-२-६१) द्वयोरेकवचनं वा स्यात्। पुनर्वसुर्नक्षत्रं पुनर्वसू वा। लोके तु द्विवचनमेव।

---

**शाङ्करी** - "अथ शब्दानुशासनम्" इति सङ्कल्पवाक्ये सामान्येन शब्दसाधुत्वानुशासनं व्याकरणशास्त्रस्य मुख्यं प्रयोजनमिति निर्दिश्य लौकिकशब्दानां वेदेष्वपि प्रयुक्तत्वाच्च वैदिकशब्दसाधुत्वस्य पृथगुपदेशानर्थकन्यं निराकरिष्णु-र्भगवान् भाष्यकारः केषां शब्दानामिति पूर्वपक्षीयवाक्येन प्रश्नमुत्थाप्य समाधत्ते लौकिकानां

---

**विमर्श**- लोके तु द्विवचनमेवेति मूले भट्टोजिदीक्षितः। अत्रैवकारेण द्विर्वचननियमन्तु नोचितम्, बहुत्रैकवचनान्तप्रयोगस्याप्युपलब्धेः। तथा हि - वाचस्पत्यं शब्दकोशे "पुनर्वसौ कृतो विप्रः" इत्येकवचनान्तप्रयोगदर्शनात्। अपि च

---

**भावार्थ** - "छन्दसि पुनर्वस्वोरेकवचनम्" १-२-६१ सूत्र में 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' १-२-५८ सूत्र से 'अन्यतरस्याम्'

**शाङ्करी** - वैदिकानां चेति। यद्यपि सच्चिदानन्दस्वरूपब्रह्मव्यतिरिक्तसर्वस्यापि लौकिकत्वात् वेदस्यापि लौकिकत्वेन पुनर्वैदिकानामिति पृथगुपादानं नोचितमित्याशङ्क्यते, तथापि वेदस्य ब्रह्मविष्णुमहेशज्ञानरूपार्थकत्वेन तस्य लौकिकत्वनिरासात्। लौकिकशब्दाति-रिक्तवैदिकशब्दानां वेदमात्रप्रयोगदर्शनाच्च, तेषां पृथक् साधुत्वानुशासनस्या-वश्यकत्वात्। अपि च 'अथ शब्दानुशासनम्' इति महाभाष्यीयप्रथमवाक्येन शब्द साधुत्वस्य मुख्य प्रयोजनत्वयुपपाद्य तस्य (शब्दसाधुत्वानुशासनस्य) प्रयोजनप्रदर्शनावसरे 'रक्षोहागमलघ्वसन्देहा: प्रयोजनम्' इति वाक्येन प्रयोजनप्रयोजनेषु वेदरक्षाया मुख्यत्वनिर्देशात्। अथ च 'ब्राह्मणेन निष्कारणो धर्म: षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इत्यागमीयादेशानुपालने वेदार्थज्ञानोपायतया "वैदिकानाम्" इति पृथगुपादानस्यौचित्यात्। अत एव देवेभि: देवास: गृभ्णामि, जभारेत्यादीनां वेदमात्र प्रयोगपरत्वेन तेषां साधुत्वमुद्दिश्य महर्षिपाणिने: "अतो भिस ऐस्" ७/१/९ इत्यादिसूत्रेभ्य: परं 'बहुलं छन्दसि ७/१/१०।' इत्यादिसूत्रोपादानं सार्थक्यं भजत इत्याह - 'छन्दसि पुनर्वस्वोरिति १/२/६१।'

---

**तीर्था** - पुनर्वसुर्नक्षत्रम् - पुनर्वसुशब्दात्प्रथमैकवचने सुविभक्तौ, उकारस्य "उपदेशेऽजनुनासिक इत्" इत्यनेनेत्संज्ञायां "तस्य लोप" इत्येनन लोपे, सस्य "ससजुषो रु:" इत्यनेन रुत्वे उकारस्य इत्संज्ञालोपाभ्यामपहारे "पुनर्वसुर्नक्षत्रम्" इति साधु:।

पुनर्वसु नक्षत्रम् - पुनर्वसुशब्दात् द्वित्वविवक्षायां प्रथमाया द्विवचने "औ" विभक्तौ "प्रथमयो: पूर्वसवर्ण:" इत्यनेन पूर्वसवर्णदीर्घे "पूनर्वसू" इति साधु:।

---

**विमर्श**- कोष्ठीप्रदीपनाम्नि फलितग्रन्थेऽपि -

प्रभूतमित्र: कृतशास्त्रयत्न:
सद्रत्नकामी वरभूषणाढ्य:।
दाता प्रतापी वसुधाधिपश्री:
पुनर्वसौ यस्य भवेत् प्रसूति:। इति॥

मम मते त्वेवकारोऽप्यर्थक:। अत एव काशिकायां तद्व्याख्ययोर्न्यासपदमञ्जर्योरप्ये वकारोल्लेखो न कृत:।

---

**भावार्थ**- पद एवं 'फल्गुनीप्रोष्ठपदानां च नक्षत्रे'१-२-६० सूत्र से 'नक्षत्रे' पद की अनुवृत्ति होने पर सूत्र का अर्थ हुआ वेद में पुनर्वसु शब्द से यदि नक्षत्र वाच्य हो तो द्वित्व की विवक्षा में भी विकल्प से एकवचन होता है। यहाँ लोक में जैसे द्वित्व की

**शाङ्करी**- अत्र सूत्रे जात्याख्यायामेकस्मिन्नित्यादि १-२-५८ सूत्राद् "अन्यतरस्याम्" इति "फल्गुनीप्रोष्ठपदानां च नक्षत्रे १-२-६०" इत्यतो 'नक्षत्रे' इति पदञ्चानुवर्तते। अतः 'पुनर्वस्वोश्छन्दोविषये नक्षत्रे च' वाक्ये द्वयोरेकवचनमन्यतरस्यां भवति। अत्र लोकवद् (द्वयोः) द्वित्वविवक्षायां नित्यं द्विवचने प्राप्ते छन्दसि विकल्पेनैक-वचनविधानार्थं प्रकृतसूत्रमारब्धम्। तदुक्तं वृत्तौ द्वयोरेकवचनं वा स्यादिति। सूत्रे पुनर्वस्वोरिति द्विर्वचननिर्देशात् पुनर्वसुशब्देन ज्योतिः समुदायैकस्मिन्नुद्भूतावयवकत्व-माश्रित्य छन्दसि द्वित्वविवक्षायामपि विकल्पेनैकवचनं विधीयते इति बोध्यम्। लोके तु द्विवचनमेवेति मूले भट्टोजिदीक्षितः। अत्रैव सुबोधिनीव्याख्याकृता श्री जयकृष्णट्टे-हेनोदहरणमपि प्रादर्शि 'गां गताविव दिवः पुनर्वसू' रघूवंशे ११-३६ कालिदासः।

---

**विमर्श**- अत्र शेखरे नागेशभट्टः - "पुनर्वस्वो द्वे तारे" इत्युक्त्या आत्मनो ज्योतिष-शास्त्रानभिज्ञत्वं व्यनक्ति। यतः पुनर्वसुनक्षत्रस्य चतस्रस्तारा: सन्तीति ज्योतिषशास्त्रविदां सिद्धान्तः - मुहर्तचिन्तामणेर्नक्षत्रप्रकरणे श्लोक सं० ५८ प्रतिपादितम्। विषयेऽस्मिन् सुविस्तृतपर्यालोचनमग्रिम "विशाखयोश्च" इति सूत्र विमर्शे करिष्ये।

उदाहरणम् - पुनर्वसुर्नक्षत्रमदितिर्देवता (मै०सं० २-१३-२०) पृ० २०७ पुनर्वसूनक्षत्रमदितिर्देवता (तै०सं० ४-४-१०) पृ० १७४ अत्रेदं वक्तव्यम् - उक्तद्वयोः

---

**भावार्थ**- विवक्षा में नित्य द्विवचन विभक्ति होती है वैसे वेद में भी नित्य द्विवचन प्राप्त था, उसको बाधकर विकल्प से एकवचन एवं पक्ष में द्विवचन करने के लिए यह सूत्र है। इन दोनें विभक्तियों के उदाहरण जैसे पुनर्वसुर्नक्षत्रमदितिर्देवता (मैत्रायणी संहिता २-१३-२०) पृ० २०७। पुनर्वसु नक्षत्र के अदिदिति देवता हैं। पुनर्वसूनक्षत्रमदितिर्देवता (तैतरीय संहिता ४-४-१०) पृ० १७४।

लोक में नक्षत्र वाच्य रहने पर भी पुनर्वसू शब्द का द्विवचनान्त ही प्रयोग होता है। जैसा कि महाकवि कालिदास के रघुवंश महाकाव्य में गां गताविव दिवः पुनर्वसू ११-३६ प्रयोग पाया गया है।

पुनर्वसु शब्द को लोक में द्विवचनान्त ही प्रयोग होता है भट्टोजिदीक्षित का यह कथन उचित नहीं है, क्योंकि बहुत से स्थलों में एकवचनान्त प्रयोग भी पाये जाते हैं। जैसे वाचस्पत्यं शब्द कोश में पुनर्वसु शब्द के निर्वचन प्रसङ्ग में किसी शिष्ट की उक्ति उद्धृत की गयी है - पुनर्वसौ कृतो विप्रः। इसी प्रकार ज्योतिषशास्त्र के कोष्ठीप्रदीप नामक फलित ग्रन्थ में भी एकवचनान्त प्रयोग पाया गया है। जैसे -

प्रभूतमित्रः कृतशास्त्रयत्नः
सद्रत्नकामी वरभूषणाढ्यः।

**विशाखयोश्च १-२-६२**

प्रागवत्। विशाखानक्षत्रम् (मैत्रा. २-१३-२०)। विशाखे वा (तैति.सं. ४-४-१०-१४)

**शाङ्करी-** विशाखयोश्चेति। प्रागवदिति। अत्रापि पूर्वसूत्रेभ्यो (जात्याख्यायाम्०, फल्गुनी प्रोष्ठ०, छन्दसि पुनर्वस्वो०, इति सूत्रेभ्यो) ऽन्यतरस्यामिति, नक्षत्रेति, छन्दसि एकवचनमिति च पदचतुष्टयमनुवर्तते। अतः छन्दसि नक्षत्रे च वाच्ये द्वयोरेकवचनं वा स्यादिति सूत्रार्थो निष्पन्नः।

**तीर्था- विशाखा** - विशाखाशब्दात् प्रथमैकवचने सुविभक्तौ उकारस्य "उपदेशेऽजनुनासिक इत्" इत्येनेनेत्संज्ञा, "तस्य लोपः" इत्यनेन लोपे च जाते अपृक्तसकारस्य "हल्ङ्याभ्यो दीर्घात्०" इति सूत्रेण लोपः।

**विमर्श-** संहितयोः क्रमेणैकवचनान्तप्रयोगोपलब्धेः छन्दसिदृष्टानुविधिरिति-सिद्धान्तमनुसृत्य प्रकृतसूत्रे "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" १९-२-५८। इति पूर्वसूत्रात् अन्यतरस्याम् इति पदस्यानुवृतिं विधाय द्वयोरुपपत्तिः संसाधितेति निष्कर्षः। अपि च वेदेऽपि ज्योतिसमुदायेऽनुद्भूतावयव विवक्षायामेकेवचनम्, उद्भूतावयवविवक्षायां द्विवचनं कल्पनीयम् इति शम्।

अत्र सूत्रद्वयस्थाने "छन्दसि पुनर्वसुविशाखयोरेकवचनम्" इत्येकयोगे कर्तव्ये पृथक्योगकरणात् "विशाखयोश्च" इति सूत्रे चकारग्रहणसामर्थ्यादत्र सूत्रे 'छन्दसि'

**भावार्थ-** दाता प्रतापी वुसधाधिपश्रीः
पुनर्वसौ यस्य भवेत् प्रसूतिः।

अतः हमारे विचार से यहाँ एवकार को अप्यर्थक मानना उचित है। इसीलिए पाणिनीय अष्टाध्यायी के काशिका तथा उसकी व्याख्या न्यास तथा पदमञ्जरी में भी द्विवचन नियमन के उल्लेख उपलब्ध नहीं है।

यहां नागेशभट्ट का शेखर ग्रन्थ में यह कथन की पुनर्वसुनक्षत्र की दो तारायें होती हैं, उनकी ज्योतिषशास्त्रविषयक अनभिज्ञता का प्रमाण है। क्योंकि वस्तुतः ज्योतिषशास्त्र के सिद्धान्तानुसार पुनर्वसुनक्षत्र की चार तारायें होती है यह बात "मुहूर्तचिन्तामणि" नामक ग्रन्थ के नक्षत्र प्रकरण के श्लोक संख्या ५८ में लिखी गयी है। इस विषय पर विस्तृत विचार "विशाखयोश्च" इस अग्रिम सूत्र के विमर्श में किया गया है।

"विशाखयोश्च" १-२-६२ इस सूत्र में भी "जात्याख्यायामेक०" १-

**तीर्था- विशाखे** - अत्र द्विवचने औ विभक्तौ तस्या "औङ् आपः" इत्यनेन "शी" इत्यादेशे स्थानिवद्भावेन तत्र प्रत्यपत्वातिदेशे लशक्वतद्धिते इत्येनन शस्येत्संज्ञायां लोपे च "आद्गुणः" इत्यनेन आकारेकारयोः स्थाने एकारो गुणः।

---

**विमर्श-** इत्यस्यानुवृत्तावपि चानुकृष्टस्य नोत्तरत्रानुवृत्तिरिति ज्ञापनादुत्तरत्र तिष्यपुनर्वस्वोरित्यादि १-२-६३ सूत्रे नानुवर्तते। तेनास्य सूत्रस्य लोके प्रवृत्तिः।

अत्र शेखरकृता नागेशभट्टेनोक्तम् - विशाखयोरपि द्वे तारे। अत्रापिशब्देन पुनर्वसुनक्षत्रस्यापि द्वे तारे इति भावः। पुनर्वसुविशाखानक्षत्रयोर्द्वे तारे इति कथनं ज्योतिषशास्त्रसिद्धान्तविरुद्धम्। तथा हि - मुहूर्तचिन्तामणौ श्रीरामाचार्यः-

त्रित्र्यङ्गपञ्चाग्नि कुवेदवह्नयः
शरेषु नेत्राश्विशरेन्दुभूकृताः।
वेदाग्निरुद्राश्वियमाग्निवह्नयोऽ-
ब्धयः शतद्विद्विरदाभतारकाः॥ मु०चिन्ता० न०प्र० श्लोक ५८

अत्र अश्विन्यादिनक्षत्रगणनाक्रमे सप्तमी संख्या पुनर्वसुनक्षत्रस्य, षोडशी च विशाखानक्षत्रस्येति कारिकायामस्यामुक्तक्रमयोः प्रथमतृतीयपादयोर्वेदशब्दाभ्यां चतस्रस्तारा भवन्तीति निर्गलितोऽर्थः। ग्रन्थकारस्य मतमिदं प्रसिद्धव्याख्यया पीयूषधारयाऽपि समर्थितमिति तत एवावगन्तव्यम्।

तेन लोके द्विवचनमेवेति शेखरे नागेशभट्टः। अत्राहं ब्रवीमि -

वाक्येऽस्मिन् द्वौ भागौ "तेन" इति प्रथमो भागः। अस्यार्थः - पुनर्वसुविशाखानक्षत्रयो द्वे तारे अत एवानयोर्लोके द्विवचनमिति। जाते चास्मिन्नर्थे त्रिस्र आपत्तयः समुद्यन्ति। तत्र प्रथमा आपत्तिः - सप्तविंशतिषु नक्षत्रेषु आर्द्रा-

---

**भावार्थ-** २-५८ सूत्र से 'अन्यतरस्याम्' पद 'फल्गुनीप्रोष्ठपदानां च नक्षत्रे'१-२-६० सूत्र से नक्षत्रे पद तथा 'छन्दसि पुनर्वस्वोरेकवचनम् १-२-६१' सूत्र से छन्दसि एवं एकवचने पद की अनुवृत्ति होने पर सूत्र का अर्थ हुआ, वेद में नक्षत्र के वाच्य रहने पर द्वित्व की विवक्षा में भी विकल्प से एकवचन होता है। उदाहरण है -

वि॒शा॒खं नक्ष॒त्रमिन्द्रा॒ग्नी दे॒वता (मैत्रायणी संहिता २-१३-२०) पृ० २०७। विशाखानक्षत्र के इन्द्र एवं अग्नि दो देवता हैं।

विशाखे नक्षत्रमिन्द्राग्नी देवता (तैतरीय सं० ४-४-१०-१४) पृ० १७४। (विशाखा नक्षत्र के इन्द्र एवं अग्नि दो देवता हैं।)

विशाखयोश्च सूत्र की शेखर नामक व्याख्या में नागेशभट्ट लिखते हैं -

**विमर्श–** चित्रा–स्वातीत्येतेषां त्रयाणामेव नक्षत्राणामेकैकतारा भवन्तीति, एत एवैकवचने प्रयोगार्हा नान्ये इति। द्वितीया आपत्तिः – पूर्वात्रयाणामुत्तरात्रयाणाञ्च द्वे द्वे तारे भवत इति षण्णामेषां द्विवचन एव प्रयोगापत्तिः।

एतदतिरिक्ताष्टादशनक्षत्राणां तारासंख्या त्रित आरभ्य शतं यावत् सन्तीति तद्वाचकशब्दा बहुवचन एव प्रयोगार्हा इति तृतीया आपत्तिः। अतो ज्योतिषशास्त्रीयासपरम्परैव वचननिर्धारणनियामिकेति मम बुद्धौ प्रतिभाति।

द्वितीयो भागः – द्विवचनमेवेत्यत्रैवकारः। अत्राप्यहं ब्रवीमि – प्रकृते नागेशस्यैवकारप्रयोगस्तस्य ज्योतिषशास्त्रानभिज्ञत्वं द्योतयति। ज्योतिषशास्त्रे बहुश एकवचनबहुवचनयोः प्रयोगोपलब्धेः। तथा हि– मुहूर्तचिन्तामणौ श्रीरामाचार्यः–

विशाखाग्नेभे सौम्यो मिश्रः साधारणं स्मृतम्।
तत्राग्निकार्यं मिश्रं च वृषोत्सर्गादिसिद्धये॥ मु०चि०न०प्र०श्लो०५

अपि च–

तोरणाकृतिनि पञ्चतारके तारकेशवदने विशाखभे।
तन्वियान्ति विबुधाध्वमध्यगे कुम्भतो रसभुजाः कलाप्रिये।

इति कालिदासकृतरात्रिलग्ननिरूपणग्रन्थे।

पुनरपि – विशाखानक्षत्रे जातस्य फलनिरूपणावसरे –
सदानुरक्तो विविधक्रियायां सुवर्णकारैरपि सद्व्यमेति।
यस्य प्रसूतौ च भवेत् विशाखा सखा न कस्यापि भवेत् प्रसूतः॥
इति कोष्ठीप्रदीपनामकफलितग्रन्थे। शब्द कल्पद्रूमेबहुवचनान्तप्रयोगोऽपि–

---

**भावार्थ–** "विशाखयोरपि द्वे तारे" विशाखा नक्षत्र की भी दो तारायें होती है यहाँ 'अपि' के द्वारा पुनर्वसु नक्षत्र की भी दो तारायें हैं यह अर्थ गृहीत हुआ। यह कथन श्रीनागेशभट्ट की ज्योतिषशास्त्र की अनभिज्ञता का प्रत्यायक है। क्योंकि ज्योतिष के प्रसिद्ध ग्रन्थ मुहूर्तचिन्तामणि में श्रीरामाचार्य ने नक्षत्रप्रकरण के श्लोक सं० ५८ में पुनर्वसु एवं विशाखानक्षत्रों की ४–४ तारायें होती हैं यह बात स्पष्ट रूप से लिखी है। ग्रन्थ का मूल वचन संस्कृत–विमर्श में उद्धृत है। इस कथन का समर्थन इसी ग्रन्थ की प्रसिद्ध व्याख्या आचार्य गोविन्दकृत पीयषधारा में प्राचीन आचार्य श्रीपति के वचनों द्वारा किया गया है।

इसी प्रकार इन दोनों नक्षत्रों की दो–दो तारायें होने के कारण इनके द्विवचनान्त ही प्रयोग होते हैं। यह कथन भी उचित नहीं है। क्योंकि यदि ताराओं की संख्या को वचन का निर्धारक माना जायेगा तो, अश्विनी इत्यादि २७ सत्ताइस

**षष्ठी युक्तश्छन्दसि वा १-४-९ ।**

षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसंज्ञो वा स्यात्। "क्षेत्रस्य पतिना वयम्" (ऋ.वे. ४-५७-१) तै.सं. १-१-१४-२ मैत्रायणि सं. ४.११-१९)। इहवेति योगं विभज्य छन्दसीत्यनुवर्तते। सर्वे विधयश्छन्दसि वैकल्पिकाः। तेन "बहुलं छन्दसि" २-४-७६ इत्यादिरस्यैव प्रपञ्चः।

---

**शाङ्करी**- षष्ठीत्यादिः - सूत्रादस्मात्प्राक् घिसंज्ञाविधायकमुत्सर्गसूत्रमस्ति "शेषो घ्यसखि" १-४-७ इति। अस्यार्थश्च नदीसंज्ञकाभ्यां भिन्नौ याविवर्णोवर्णौ तदन्तं

---

**तीर्था**- क्षेत्रस्य पतिना वयम्।

क्षेत्रस्येति षष्ठ्यन्त पदेन युक्तस्य पतिशब्दस्य समासाघटकत्वात् "पतिः समास एव" इति सूत्रेण घिसंज्ञाया अप्राप्तौ "षष्ठीयुक्त०" इति सूत्रेण विकल्पेन घिसंज्ञायां ततो विहितस्य "टा" इत्यस्य "आङो नाऽस्त्रियाम्" इत्यनेन "ना" आदेशे क्षेत्रस्य पतिना इति साधु।

---

**विमर्श**- 'बहुपुत्रो विशाखासु" इति भा०आ०वाचस्पत्यं शब्दकोशे कुतश्चित् फलितग्रन्थादुद्धृतम्।

अत एव काशिकायां तद्व्याख्ययोर्न्यासपदमञ्जर्योरपि द्विवचननियमनोल्लेखो न कृतः।

---

**भावार्थ**- नक्षत्रों में आर्द्रा, चित्रा, स्वाती इन तीन नक्षत्रों की एक एक तारा होने के कारण केवल इन्हीं के एकवचनान्त प्रयोग होंगे, तथा तीनों पूर्वा उत्तरा इन छः नक्षत्रों की तारा संख्या २, २ होने के कारण इनके द्विवचनान्त ही प्रयोग होंगे।

शेष १८ नक्षत्रों की तारा संख्या तीन से प्रारम्भ होकर एक सौ तक होने के कारण इनके केवल बहुवचनान्त ही प्रयोग होने के कारण इनके केवल बहुवचनान्त ही प्रयोग होने लगेंगे। किन्तु संस्कृत वाङ्मय में नक्षत्रवाचक शब्दों के वचन विभाजन के ऐसे उदाहरण उपलब्ध नहीं हैं। नागेशभट्ट के "तेन लोके द्विवचनमेव" कथन भी युक्ति युक्त नहीं है क्योंकि ज्योतिषशास्त्र के मुहूर्तचिन्तामणि इत्यादि अनके ग्रन्थों में पुनर्वसु एवं विशाखा शब्द के एकवचनान्त एवं बहुवचनान्त प्रयोग बहुशः उपलब्ध है, (संस्कृत विमर्श में उदाहरण द्रष्टव्य)। इसीलिये अमरकोशकार ने द्विवचनान्त ही होने के नियमन को स्वीकार नहीं किया। काशिका तथा उसकी व्याख्या न्यास तथा पदमञ्जरी में भी द्विवचन नियमन का उल्लेख नहीं है।

**शाङ्करी**- सखिशब्दभिन्नं घिसंज्ञं भवति। तदुदाहरणानि च हरिणा, विष्णुना इत्यादौ हरि विष्णुशब्दयोः घिसंज्ञायां ततो विहितस्य "टा" इत्यस्य आङो नाऽस्त्रियाम् ७-३-१२० इत्यनेन नादेशः, हरये, विष्णवे इत्यादौ चेकारोकारयोः 'घेर्ङिति' ७-३-१११ इत्यनेन गुणश्च। ततोऽनेन पतिशब्दस्य सर्वत्र घिसंज्ञाप्राप्तौ नियमसूत्रमारब्धम् "पतिः समास एव" १-४-८ पतिशब्दः समास एव घिसंज्ञो भवतीति नियमाच्छन्दसि 'क्षेत्रस्य पतिना वयम्' इत्यादावसमासे पतिशब्दस्य घिसंज्ञा न प्राप्नोतीति नादेशाप्रवृत्तौ प्रकृतसूत्रमारब्धं 'षष्ठीयुक्तेति....। अत्र सूत्रे पूर्वसूत्रात् पतिशब्दोऽनुवर्तते। अतः ष्ष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसंज्ञो वा भवतीति। षष्ठीति किम्? मया पत्या जरदष्टिर्थयासः। ऋ०वे०

---

**विमर्श**- अमरकोशकारोऽपि द्विवचननियमनं नेच्छतीतिशम्। उदाहरणे यथा-

विंशाखं नंक्षत्रमिन्द्राग्नी देवता (मैत्रायणी सं० २-१३-२०)

विशाखे नक्षत्रमिन्द्राग्नी देवता (तै०सं० ४-४-१०-२)

लोके "सीतायाः पतये नमः" इत्यादौ कुत्रचिदाप्तप्रयोगेष्वसमासेऽपि घिसंज्ञाकरणं त्वार्षत्वात् क्षन्तव्यमिति बालमनोरमाव्याख्याकारो वासुदेवदीक्षितः।

प्रौढमनोरमा - तत्त्वबोधिनीकृद्भ्यां तु 'अथ कथं सीतायाः पतये नमः' इति "नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ इति पराशरश्च" इति। अत्राहतुः - पतिरित्याख्यातः पतिः "तत्करोति तदाचष्टे इति णिचि टिलोपे "अच इः" इत्यौणादिक इप्रत्यये "णेरनिटि" ६-४-५१ इत्यनेन णिलोपे च निष्पन्नोऽयं पतिशब्दः "पतिः समास एव" १-४-८ इत्यत्र न गृह्यते लाक्षणिकत्वादित्युक्तम्।

तत्त्वबोधिनीव्याख्याया उपरि टिप्पणीकारो दधिमथस्तु यथाकथञ्चित्साधुत्व-विशिष्ट पतिशब्दार्थस्य पाराशरीयपतिरूपार्थे सत्त्वेऽपि धर्मशास्त्रसम्मतपतिरूपार्था वाचकत्वेन "सीतायाः पतये नमः" वाक्यघटकपतिरूपार्थेऽसत्वात् यथाकथञ्चित् साधुत्वकल्पनेऽनौचित्यं मत्वा, क्वापि तपःपूत ऋषिवाक्यघटकपदेषु व्याकरणदृष्ट्या साधुत्वाभावेऽपि तेषामुच्चारणे दोषाभावं मनुते। विषयोऽयं "पतिः समास एव" इति सूत्रस्थतत्त्वबोधिन्याम्, व्याख्यातमिति प्रतीकोपरि दधिमथटिप्पण्यां च साधुचर्चितः।

---

**भावार्थ**-इस सूत्र से पूर्व घिसंज्ञाविधायक उत्सर्ग सूत्र है - "शेषो घ्यसखि" १-४-७। जिसका अर्थ है - शेष नदीसंज्ञक से भिन्न जो इवर्ण उवर्ण सखिशब्द से भिन्न, तदन्त की घिसंज्ञा होती है। इस घिसंज्ञा के उदाहरण है - हरिणा, विष्णुना।

**शाङ्करी**- मूले इह वेत्यादि पङ्क्तिभिर्भाष्याशयं प्रकाशयति श्रीदीक्षितः। तथा हि - इह प्रकृतसूत्रे 'वा' इति पृथग्योगं (सूत्रम्) विभज्य- पृथक् कृत्वा, तत्र पूर्वयोगे 'षष्ठीयुक्तश्छन्दसि' इत्यत्र 'पतिः समास एव' इत्यतः पतिशब्दमनुवर्त्य षष्ठ्यन्तपदेन युक्तः पतिशब्दश्छन्दसि वा घिसंज्ञो भवतीत्यर्थः। द्वितीये - वेति सूत्रे छन्दसीति पदमनुवर्तनीयम्। तेन छन्दसि सर्वे विधयो विकल्पेन भवन्तीत्यर्थे निष्पन्ने मुहुर्मुहुः ''बहुलं छन्दसि'' २-४-७३ इत्यादीनि सूत्राणि न कर्तव्यानीति महल्लाघवमितिभावः।

---

**विमर्श**- क्षेत्रस्य पतिना वयं हितेनेव जयामसि।
गामश्वं पोषयित्वा स नो मृळातीदृशे॥ ऋ०वे० ४-५७-१।

मन्त्रार्थ - हम यजमान बन्धु सदृश क्षेत्रपति देव के साथ क्षेत्र पर विजय प्राप्त करें। वे हम लोगों की गौवों और अश्वों को पुष्टि प्रदान करें। वे देव हम लोगों को उक्त प्रकार से दातव्य धन देकर सुखी करें। (हिन्दी पृ० ६२२-६२३)

---

**भावार्थ**- यहाँ घिसंज्ञक इकारान्त उकारान्त से पर में रहने वाली ''टा'' विभक्ति के स्थान में ''आङो नाऽस्त्रियाम्'' ७-३-१२० सूत्र से 'ना' आदेश, एवं हरये, विष्णवे इत्यादि प्रयोगों में ''घेर्ङिति'' ७-३-१११ सूत्र से इकार उकार को गुण होना। इस सूत्र से पतिशब्द को इकारान्त होने के कारण सर्वत्र घिसंज्ञा प्राप्त थी। इसलिए नियम सूत्र बनाया ''पतिः समास एव'' १-४-८। इसका अर्थ है पति शब्द को समास में ही घिसंज्ञा होती है। जिसके उदाहरण है भूपतिना इत्यादि। किन्तु वेद में समास से भिन्न वाक्य में भी 'क्षेत्रस्य पतिना वयम्' इत्यादि स्थलों में पतिशब्द को घिसंज्ञा करने के लिए सूत्र बना ''षष्ठीयुक्तश्छन्दसि वा'' १-४-९। इस सूत्र में पूर्व सूत्र से पतिशब्द की अनुवृत्ति हुयी। अतः इस सूत्र का अर्थ हुआ - षष्ठ्यन्तपद से युक्त पति शब्द की घिसंज्ञा होने के कारण तृतीया के एकवचन में ''टा'' विभक्ति के स्थान में ''ना'' आदेश हुआ।

भाष्य के अनुसार प्रकृत सूत्र में योगविभाग के द्वारा ''षष्ठीयुक्तश्छन्दसि'' यह प्रथम सूत्र एवं वा दूसरा सूत्र होना चाहिए। प्रथम सूत्र में पूर्वसूत्र से पतिशब्द की अनुवृत्ति करने पर अर्थ होगा - षष्ठ्यन्तपद से यक्त पतिशब्द की वेद में घिसंज्ञा होती है। द्वितीय ''वा'' इस सूत्र से 'छन्दसि' पद की अनुवृत्ति करने पर अर्थ होगा - वेद में सभी विधियाँ विकल्प से होती है। इस प्रकार एक सूत्र का विभाग करने

**यचि भम्। १-४-१८।**

नभोऽङ्गिरोमनुषां वेत्युपसंख्यानम्। नभसा तुल्यं नभस्वत्। भत्वाद्रुत्वाभावः। अङ्गिरस्वदङ्गिरः। मनुष्वदग्रे: (उ०) 'जनेरुसिः' इति विहित उसिप्रत्ययो मनेरपि बाहुलकात्।

---

**शाङ्करी**– वतिप्रत्ययस्य यकाराद्यजादिप्रत्ययाभावात् तस्मिन्परे भसंज्ञया पदसंज्ञाया

---

**भावार्थ**– पर वेद में सभी कार्य विकल्प से होते हैं यह अभिप्राय सिद्ध हो गया। अत: बार-बार 'बहुलं छन्दसि'२-४-७३, २-४-७६ सूत्रों की आवृत्ति रूप विस्तार इसी योगविभाग के द्योतक है। "इह वेति योगं विभज्य से प्रपञ्चः" पर्यन्त कौमुदी ग्रन्थ का यही सारांश है।

"सीतायाः पतये नमः" इत्यादि वाक्यों में कहीं असमास में घिसंज्ञा का होना व्याकरण की दृष्टि के असाधु होने पर भी तपः पूतऋषिप्रयुक्त होने के कारण उनके उच्चारण में दोष नहीं है। यह समाधान सिद्धान्त कौमुदी की बालमनोरमा व्याख्याकार श्री वासुदेव दीक्षित का है।

तत्वबोधिनी एवं प्रौढमनोरमा व्याख्याकारों ने तो 'पतिरित्याख्यातः पतिः' इस प्रकार की व्याख्या के प्रसङ्ग में "तत्करोति तदाचष्टे" चुरादिगणपठित इस गणसूत्र से णिच्प्रत्यय पर में मानकर पति के इकाररूप टि का "यस्येति च" ६-४-४८ से लोप करके "अच इः" इस औणादिक सूत्र से इप्रत्यय तथा इससे पूर्व में विद्यमान णि का "णेरनिटि" ६-४-५१ सूत्र से लोप के द्वारा निष्पन्न पति शब्द को लाक्षणिक मानकर "पतिः समास एव" इस सूत्र से प्राप्त घिसंज्ञा का निषेध 'लक्षणप्रतिपदक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इस परिभाषा के द्वारा किया है।

किन्तु तत्वबोधिनी के ऊपर दाधिमथ नामक टिप्पणीकार की दृष्टि में 'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ' इस पराशर स्मृति में प्रयुक्त वाक्य घटक पति शब्द में उक्त व्युत्पत्ति को संगत मानने पर भी धर्मशास्त्र सम्मत पतिरुपार्थ की वाचकता न होने के कारण 'सीतायाः पतये नमः' के पति शब्द में असंगत होने के कारण यथाकथञ्चित् व्युत्पत्तिपक्ष को स्वीकार करना अनुचित है। अतः कहीं - कहीं तपः पूत ऋषि प्रयुक्त वाक्य घटक पदों में व्याकरण की दृष्टि से असाधुता होने पर भी उनके उच्चारण में असाधुशब्द प्रयोगजन्य प्रत्यवाय का अभाव मानते हैं। इसीलिये इस प्रकार के प्रयोगों को आर्षत्वात् हेतु के द्वारा सम्मान देने की परम्परा चली आ रही है।

**शाङ्करी** – बाधासंभवात् प्रकृतसूत्रभाष्ये वार्तिकमाह – 'नभोङ्गिरो' इत्यादिः। नभस् – अङ्गिरस् – मनुषांवतिप्रत्यये भसंज्ञा वक्तव्या इत्यर्थः। जनेरुसिः – बाहुलकादिति क्वचिदन्यदेवेत्यर्थमादायेति बोध्यम्।

---

**तीर्था**- नभस्वत् इति। नभसा तुल्यं वर्तत इति विग्रहे तृतीयासमर्थात् "तेन तुल्यं क्रिया चेद् वतिः" ५-१-११५ इत्यनेन नभस् शब्दाद् वतिप्रत्यये "स्वादिष्वसर्वनामस्थाने" इत्यनेन नभस् शब्दस्य पदसंज्ञाप्राप्तौ तं प्रबाध्य 'नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्' इति वार्तिकेन भसंज्ञायां नभस्वत् इति रूपं साधु। पदसंज्ञायान्तु "ससजुषो रुः" इत्यनेन रुत्वे हशि च इत्यनेनोत्वे "आद्गुणः" इत्यनेन गुणे च नभोवदित्यनिष्टरुपापत्तिः।

---

**विमर्श**- नभसा तुल्यं नभस्वत्।

अङ्गिरस्वत् मनुष्यवत्।

उत त्वा भृगुवच्छुचे मनुष्वदग्न आहुत।

अङ्गिरस्वद्धवामहे। ऋ०वे० ८-४३-१३ (पृष्ठ ५२२)

मन्त्रार्थ -हे आहूत शुद्ध अग्नि हम तुम्हें भृगु और मनु के समान (सम्मानपूर्वक) बुलाते हैं। हिन्दी पृष्ठ २४५

मनुष्वदग्ने अंग्निरस्वदंगिरो ययातिवत्सदने पूर्ववच्छुचे।

अच्छ याह्या वहा दैव्यं जनमा सादय बर्हिषि यक्षि च प्रियं॥

ऋ० १-३१-१७। पृष्ठ १६५

---

**भावार्थ**- अष्टाध्यायी सूत्रपाठक्रम में "सुप्तिङन्तं पदम्" १-४-१४ सूत्र से सुबन्त-तिङन्त समुदाय की ही पद संज्ञा विहित होने के कारण कहीं-कहीं 'राजभ्याम्' इत्यादि प्रयोगों में राजन् इत्यादि प्रकृतिमात्र की पदसंज्ञा करने के लिए सूत्र है "स्वादिष्वसर्वनामस्थाने" १-४-१७ इस सूत्र से प्राप्त पदसंज्ञा का यकाराद्यजादिप्रत्ययों के पर में रहने पर "यचि भम्" १-४-१८ सूत्र से (भसंज्ञा के द्वारा) बाध हो जाता है। किन्तु वतिप्रत्यय के यकाराद्यजादि न होने के कारण उसके पर में रहने पर नभस् इत्यादि शब्दों की भसंज्ञा इस सूत्र से प्राप्त नहीं है। अतः भाष्य में 'नभोऽङ्गिरो मनुषां वत्युपसंख्यानम्' यह वार्तिक पढ़ा गया है। वार्तिक का अर्थ है, वति प्रत्यय के पर में रहने पर नभस् इत्यादि शब्दों की भसंज्ञा कहनी चाहिए। अतः नभस्वत् अङ्गिरस्वत् प्रयोगों में 'नभसा तुल्यं वर्तते' 'अङ्गिरसा भावार्थ- तुल्यं वर्तते' इन

**तीर्था-** अङ्गिरस्वदिति। अङ्गिरसा तुल्यं वर्तत इति विग्रहेऽपि पूर्ववदेव बोध्यम्। मनुष्वदग्ने।

प्रादुर्भावार्थकजनधातोः "जनेरुसिः" इत्यौणादिकसूत्रेण विधीयमान-उसि प्रत्ययस्य बाहुलकाद् अवबोधनार्थकमनधातोरपि विधानेन निष्पन्नमनुस् शब्दात् मनुसा तुल्यं वर्तत इति विग्रहे "तेन तुल्यं क्रिया चेद् वतिः" इत्यनेन वति प्रत्यये मनुस् वत् इति स्थितौ मनुस्शब्दस्य "स्वादिष्वसर्वनामस्थाने" इत्यनेन प्राप्तपदसंज्ञां प्रबाध्य 'नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्' इति वार्तिकेन भसंज्ञायां सकारस्यापदान्तत्वात् "आदेशप्रत्यययोः" इति सूत्रेण षत्वे मनुष्वत् इति साधु। पदत्वे तु "ससजुषो रुः" इत्यनेन सकारस्य रुत्वे तस्य "हशि च" इत्यनेनोत्वे द्वयोरुकारयोः सवर्णदीर्घे मनूवत् इत्यनिष्टरूपापत्तिः स्यात्।

---

**विमर्श-** मन्त्रार्थ - हे पवित्र अग्निदेव! हे अङ्गिरा! तुम मनु, अङ्गिरा ययाति और अन्यान्य पूर्वपुरुषों की तरह सम्मुखवर्ती होकर यज्ञ देश में जाओ, और देवों को ले आओ, उन्हें कुशों पर बैठावो और अभीष्ट हव्यदान करो। (हिन्दी पृष्ठ २७४)।

नभस्वत् प्रयोग शांख्यायन श्रौतसूत्र में ६-१२-८ पृष्ठ ६८ में पक्ति ४ में हाचक्र लक्ष्मणदास प्रकाशन दिल्ली में अन्वेषणीय है।

---

विग्रहों में 'तेन तुल्यं क्रिया चेद् वतिः' ५-१-११५ सूत्र से नभस् अङ्गिरस् शब्दों से वतिप्रत्यय का विधान हुआ। वति में इकार उच्चारणार्थक होने के कारण स्वतः निवृत्त हो गया। 'नभस् वत् अङ्गिरस् वत्' इस स्थिति में नभस् अङ्गिरस् शब्दों की स्वादिष्वसर्वनामस्थाने सूत्र से प्राप्त पदसंज्ञा को बाधकर प्रकृतवार्तिक से भसंज्ञा होने के कारण दोनों के सकारों के पदान्त न होने से अनेक स्थान में रुत्व उत्व एवं गुणरूप कार्य नहीं हुये। यदि पदसंज्ञा होती तो 'नभोवत् अङ्गिरोवत्' ऐसे अनभिष्ट प्रयोग निष्पन्न होते।

"मनुष्वदग्ने" में 'मनुस् वत्' इस स्थिति में यदि मनुस् शब्द की पदसंज्ञा हो जाती तो सकार के पदान्त होने के कारण उसको रुत्व उत्व होने पर मनु उ वत् इस स्थिति में दोनों उकारों को सवर्णदीर्घ होकर 'मनूवत्' यह अनभीष्ट प्रयोग निष्पन्न होता। भसंज्ञा के द्वारा पदसंज्ञा का बाध होने से अपदान्त सकार को "आदेशप्रत्यययोः" ८-३-५९ सूत्र से षत्व होकर 'मनुषा तुल्यं वर्तते' इस विग्रह में मनुष्वत् यह अभीष्ट प्रयोग निष्पन्न हुआ।

**वृषण्वस्वश्वयोः।** (वा०) वृषन् वर्षुकं वसु यस्य स वृषण्वसुः। वृषा अश्वो यस्यासौ वृषणश्वः। इहान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्राप्तो भत्वाद्वार्यते। अत एव "पदान्तस्य" ८-४-३७। इति णत्व निषेधोपि न। अल्लोपोन। अनङ्गत्वात्।

---

**शाङ्करी**- भसंज्ञायाः "स्वदिष्वसर्वनामस्थाने" इत्यनेन विहितपदसंज्ञायाश्च प्रत्ययपरत्वे प्रकृतेरेव विहितत्वात् वस्वश्वशब्दयोश्चाप्रत्ययत्वेन तयोः परत्वे वृषण्शब्दस्याप्राप्तभसंज्ञा निपातनार्थं वार्तिकम् 'वृषण्वस्वश्वयोरि'ति। कैयटानुसारेणैतस्य निपातनस्य छन्दोविषयत्वात्। वृषण्णित्येतत् वसु-अ-श्वशब्दयोः परत्वे छन्दसि निपातनात् भसंज्ञं भवतीति। विभक्तिमाश्रित्येति। समासे सति विग्रहवाक्यावस्थाया लुप्तविभक्तिं "प्रत्ययलोपे प्रत्ययलक्षणम्" १-१-६१ इत्यनेनातिदिस्येति भावः। भत्वाद्वार्यत इति। निपातनात् भसंज्ञया पदसंज्ञाया वाधादित्यर्थः। अत एव पदत्वाभावादेव। अनङ्गत्वादिति। वस्वश्वशब्दयोरप्रत्ययत्वेन तयोः परत्वे 'वृषण्' इत्यस्याङ्ग-संज्ञकत्वाभावात्। निपातनस्यास्य छन्दोविषयत्वाल्लोके वृषवसुः, वृषाश्व इत्येव।

---

**तीर्था**- वृषण्वसू। वृषु ७०६ भ्वादि उत वृष शक्तिबन्धने (१७०५ चूरादि०) वा धातोः "कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः" इत्युणादिसूत्रेण बाहुलकाद् भावे कनिन् प्रत्ययेनुबन्धलोपेन निष्पन्नवृषन्शब्दात् वर्षणम् प्रजननसामर्थ्यं शक्तिबन्धश्च धने ययोः (अश्वयोः) इति विग्रहे बहुव्रीहिसमासे, प्रातिपदिकत्वात् सुपो लुकि 'वृषन् वसू' इति स्थितौ "प्रत्ययलोपे प्रत्ययलक्षणम्" इत्यनेन विग्रहवाक्यावस्थाया लुप्तविभक्तिमतिदिश्य नकारस्य पदान्तत्वेन "न लोपः प्रातिपदिकान्तस्य" इत्यनेन लोपे "पदान्तस्य" इत्यनेन णत्वनिषेधे च प्राप्ते 'वृषण्वस्वश्वयोः' इति प्रकृतवार्तिकेन निपातनात् भसंज्ञया पदसंज्ञाया बाधान्नकारस्यापदान्तत्वेन णत्वनिषेधाभावे 'वृषण्वसू' इति साधु। निपातनस्य छन्दोविषयत्वाल्लोके नकारलोपे 'वृषवसू' इति।

---

**विमर्श**- "वृषण्वसुः" इत्येकवचनान्त पाठं कृतवन्तः। काशिका वृत्तिकारौ वामनजयादित्यौ, न्यासकारो जिनेन्द्रबुद्धिः पदमञ्जरीव्याख्याकारो हरदत्तमिश्रः, वैयाकरणसिद्धान्तकौमुदीकारो भट्टोजिदीक्षितः सुबोधिनीव्याख्याकारो जयकृष्णभट्टः, लघुशब्देन्दुशेखरकारो नागशेभट्टप्रभृतयः। ऋग्वेदसंहितायान्तु "वृषण्वसू" इति द्विवचनान्तपाठ एव सर्वत्र दृश्यते। यथा - ऋग्वेदे -

---

**भावार्थ**-वसु एवं अश्वशब्द प्रत्यय नहीं है। इसलिए इनके पर में रहने पर 'वृषण्वसुः' 'वृषणश्वः' प्रयोगों में वृषण् प्रकृति की भसंज्ञा प्राप्त नहीं है। तथा समास होने पर भी

**तीर्था-** वृषणश्वः - वृषा अश्वो यस्यासौ इति विग्रहे अश्वशब्दपरे वृषणित्यस्य 'वृषण्वस्वश्वयोः' इति वार्तिकेन निपातनात् भत्वात् पदसंज्ञाया बाधेन लोपाभावे णत्वे च वृषणश्वः इति साधु। निपातनस्य छन्दोविषयत्वाल्लोके 'वृषाश्वः' इति।

---

**विमर्श-** तक्ष॒न्नर्थं सु॒वृतं॑ वि॒द्मना॑पस॒स्तक्ष॒न्हरी॑ इन्द्र॒वाहा॑ वृष॑ण्वसू।
तक्ष॑न्पि॒तृभ्या॑मृ॒भवो॑ युव॒द्वय॒स्तक्ष॑न्व॒त्साय॑ मा॒तरं॑ सचा॒भुव॑म्॥

ऋ०वे० १-१११-१

अस्यार्थः - विद्मनापसः - निष्पादनकर्मण्युत्कृष्टज्ञानसम्पन्नाः, ऋभवो = देवाः (अश्विनीकुमारयोराहोणार्थम्) सुवृतं - सुचक्रं शोभनवर्तनं सुचक्रं वा रसं तक्षन् अकुर्वन्। अपि च वृषण्वसू - वृषा - प्रजननसामर्थ्यं बलञ्च वसू-धने ययोरेवं भूतौ इन्द्रवाहौ = इन्द्रस्य वाहनभूतौ हरणशीलौ अश्वौ तक्षन् कृतवन्तः। तथा पितृभ्यां स्वकीयाभ्यां मातापितृभ्यां - वृद्धाभ्यां, युवद्वयः - यौवनोपेतमायुः तक्षन् कृतवन्तः। अपि च वत्साय सचाभुवं सहवर्तमानां मातरं - गां तक्षन् अकुर्वन्।

अत्र मन्त्रस्य द्वितीयपादे हरीशब्दो द्वितीयाया द्विवचने द्वयोरश्वयोर्वाचकः। तथा हि तत्रत्यं सायणभाष्यम् तथेन्द्रवाहा - इन्द्रस्य वाहनभूतौ हरी - हरणशीलावेतत्संज्ञकावश्वौ तक्षन् कृतवन्तः। कीदृशौ। वृषण्वसू - सेचनसमर्थेन दृढतरेण धनेन बलेन वा युक्तौ। (प्रजननसामर्थ्यविशिष्टौ शक्तिसम्पनावित्यर्थः)। एतेनैकवचनान्तपाठकृत उपरिनिर्दिष्टाः सर्वेपि सुप्रसिद्धा आचार्या ब्रह्मणः सम्वृत्ताः।

वृषणश्वः - यत्र॒ वा अ॒द इन्द्रो॑ वृ॒ष॒णश्व॑स्य॒ मे॒ ना॒सी॒त् तदे॒नं॒ निर्ऋ॑तिः पा॒प्मा गृ॒ह्णा॒त्। मै०सं० प्र० ५ अनुक्रम ५) पृष्ठ १३७।

---

**भावार्थ-** लुप्तविभक्ति का ''प्रत्ययलोपे प्रत्ययलक्षणम्'' सूत्र से आरोप करके उनको पर में मानकर वृषण् की ''स्वादिष्वसर्वनामस्थाने'' सूत्र से पदसंज्ञा होकर ''नलोपः प्रातिपदिकान्तस्य'' सूत्र से नकार का लोप एवं ''पदान्तस्य'' सूत्र से णत्व का निषेध भी संभावित था। अतः संभावित पदसंज्ञा का वेद में भसंज्ञा के द्वारा बाध करने के लिए भाष्य में 'वृषण्वस्वश्वयोः' यह वार्तिक पढ़ा गया है। वार्तिक का अर्थ है - वसु-अश्व शब्दों के पर में रहने पर वेद में वृषण् शब्द की भसंज्ञा होती है। यहाँ वृषणशब्द की संभावित पदसंज्ञा का बाध होने से उक्त सूत्रों से नकार का लोप एवं णत्व का निषेध नहीं हुआ। वसु एवं अश्व शब्द के प्रत्यय नहीं होने के कारण इनके पर में रहने पर वृषण् शब्द के ''यस्मात्प्रत्ययविधिस्तदादिः'' इत्यादि सूत्र से अङ्गसंज्ञक नहीं होने से ''अल्लोपोऽनः'' सूत्र से अन के अवयव

**भावार्थ**- अकार का लोप भी नहीं हुआ। इस निपातन के वेद में ही होने के कारण लोक में 'वृषवसुः' एवं 'वृषाश्वः' ये ही प्रयोग होंगे।

''वृषण्वस्वश्वयोः'' वार्तिक के उदाहरण के प्रसङ्ग में काशिकावृत्ति के रचयिता वामन-जयादित्य से प्रारम्भ कर उसके सभी व्याख्याकार हरदत्त मिश्र प्रभृति एवं वैयाकरणसिद्धान्तकौमुदी के निर्माता भट्टोजिदीक्षित तथा उसके नागेश पर्यन्त सभी व्याख्याकार गतानुगति को लोक की उक्ति का अन्धानुकरण करते हुए 'वृषण्वसुः' एकवचनान्त पाठ ही दिखाये हैं। किन्तु किसी ने भी 'यथोत्तरं मुनीनां प्रामाण्यम्' परिभाषा के उदाहरण भूत सर्वमान्य आचार्य पतञ्जलि की 'रक्षार्थं वेदानामध्येयं' व्याकरणम् इस आदेशात्मक वाक्य की तरफ ध्यान देकर इस पद का किस वेद की किस शाखा में प्रयोग हुआ है तथा वहाँ एकवचनान्त पाठ है या द्विवचनान्त, यह देखने का कष्ट नहीं करके एकवचनान्त प्रयोग ही दिखाते गये हैं। जबकि ऋग्वेद की मूल संहिता के प्रथम मण्डल के १११ (एक सौ ग्याहरवें) सूक्त की प्रथम ऋचा में वृषण्वसू यह द्विवचनान्त पाठ ही (ऊपर विमर्श व्याख्या में मन्त्र का सम्पूर्ण मौलिक पाठ देखें) किया गया है। वहाँ के मन्त्रार्थ का विचार करने पर द्विवचनान्त पाठ ही संगत है न कि एकवचनान्त। वहाँ का संक्षिप्त प्रसङ्ग इस प्रकार है। देवता लोग अपने चिकित्सक अश्विनीकुमारों को स्वर्ग में जाने के लिए रथ निर्माण में अत्यन्त निपुण कलाकारों के द्वारा इन्द्र के रथ के समान सुन्दर चक्कों वाले एक रथ का निर्माण कराये। तथा उस रथ को खींचने के लिए इन्द्र के घोडों के समान (वृषण्वसू हरी) अत्यन्त बलशाली एवं प्रजननसामर्थ्यरूप धन से विशिष्ट दो अश्वों का निर्माण किया। यहाँ पर वृषण्वसू पद हरी शब्दार्थभूत दो अश्वों के विशेषण के रूप में प्रयुक्त हुआ है। 'वेदाः प्रमाणम्' इत्यादि के समान कुछ अपवाद भूत उदाहरणों के अतिरिक्त सर्वत्र 'विशेष्यविशेषणवाचकपदयोः' समानवचनकत्वरूपनियम का सम्मान किया जाता है। मन्त्र के पूर्वार्द्ध का यही सारांश सायण के भाष्य से भी समर्थित है। मन्त्र के उत्तरार्द्ध का अभिप्राय देवता लोग अपने वृद्ध माता-पिता को आजीवन सुखी रखने के लिए युवा अवस्था विशिष्ट आयु का निर्माण किये। तथा बछडे के साथ में रहने के लिए उसकी माता गाय का निर्माण किया।

**अयस्मयादीनिच्छन्दसि। १-४-२०१।**

एतानि छन्दसि साधूनि। भपदसंज्ञाधिकाराद्यथायोग्यं संज्ञा द्वयम् बोध्यम्। तथा च वार्तिकम् उभयसंज्ञान्यपीति वक्तव्यमिति। स सुष्टुभास ऋक्कता गणेन। पदत्वात् कुत्वम्। भत्वाजश्त्वाभावः। जस्त्वविधानार्थायाः पदसंज्ञाया भत्वसामर्थ्येन बाधात्। नैनं हिन्वन्त्यपि वाजिनेषु। अत्र पदत्वाज्जश्त्वम्। भत्वात्कुत्वाभावः।

**शाङ्करी**- अयस्मयादीनीति। अयसो विकारार्थे मयट्प्रत्यये प्रकृतेरयसः "स्वादिष्वसर्वनामस्थाने" १-४-१७ इति सूत्रेण प्राप्तपदसंज्ञा निपातनाद् भत्वाद् वारिता। अतोऽयसः सकारस्य रुत्वोत्वे न भवतः। तदुक्तम् एतानीति। एकसंज्ञाधिकाराद्यदि पदसंज्ञा स्यात्तदा भसंज्ञा न स्यात्। यदि भसंज्ञा स्यात्तदा पदसंज्ञा न स्यात्। एतत्सूत्रारम्भसामर्थ्यात् यथायोग्यं संज्ञाद्वयं भवति। तदुक्तं भपदसंज्ञाधिकारादिति। अत्रैव प्रकृतसूत्रस्थभाष्यवार्तिकमपि स्मारयति। उभयसंज्ञान्यपीति वक्तव्यमिति। 'ऋक्कता' इति तृतीयान्तप्रयोगे ऋच्प्रकृतेर्वत्परे स्वादिष्वेत्यादिना पदसंज्ञायां "चोः कुः" ८-२-३० इत्यनेन चकारस्य कुत्वम्। जाता संज्ञा तिष्ठत्येवेति नियमान्तस्यैव ककारस्य पदान्तत्वेन "झलां जशोऽन्ते" ८-२-३९ इत्यनेन प्राप्तजश्त्वं भसंज्ञया वार्यते। सति जश्त्वे तु ऋग्वता इत्यनिष्टं स्यात्। तदुक्तं जश्त्वविधानार्थाया इति। नैनमिति। अत्र 'वाजिनेषु' इत्यत्र वाच्प्रकृतेः पदत्वाच्चकारस्य पदान्तत्वेन जश्त्वेन जकारः। भत्वाच्च पदत्वबाधेन जकारस्य "चोःकुः" ८-२-३० इत्यनेन प्राप्तकुत्वाभावः। कुत्वे तु 'वागिनेषु' इत्यनिष्टरूपात्तिः। तदुक्तं भत्वात्कुत्वाभाव इति।

**तीर्था**- ऋक्कता। तुदादिगणपठितस्तुत्यर्थकाद् ऋच् धातोः ऋक् अस्यास्तीति विग्रहे मतुप्प्रत्ययेऽनुबन्धलोपे "झयः" इति सूत्रेण मकारस्य वकारादेशे ऋच् इत्यस्य मतुप् प्रत्यये परे 'उभयसंज्ञान्यपि वक्तव्यम्' इति वार्तिकेन पूर्वं पदसंज्ञायां "चोः कुः" इति सूत्रेण चकारस्य कुत्वेन ककारः, तस्यैव ककारस्य पदान्तत्वात् "झलां जशोऽन्ते" इत्यनेन जश्त्वेन गकारादेशे प्राप्ते प्रकृतवार्तिकसाहाय्येन परया भसंज्ञया पूर्वप्रवृत्तपदसंज्ञाया बाधे तृतीयैकवचने 'ऋक्वता' इति साधु।

**विमर्श**- "ऋक्कता गणेन" सिद्धान्तकौमुद्यां प्रकृतसूत्रे भपदसंज्ञाधिकाराच्छन्दस्येकस्योभयसंज्ञाविधानार्थम् 'उभयसंज्ञान्यपि वक्तव्यम्' इति वार्तिकं पठितम्। तत्र संज्ञाद्वयस्योदाहरणप्रदर्शनप्रसङ्गे स सुष्टुभास ऋक्कता गणेन इति मन्त्रांश उद्धृतः। सम्पूर्णमन्त्रश्चेत्थम् -

**तीर्था-** वाजिनेषु – वागस्ति येषां ते वाजिनः, (नैनं हिन्वन्ति वाजिनेषु) वाच् इन इत्यवस्थायां वाचः पदसंज्ञायां चकारस्य पदान्तत्वात् "झलां जशोऽन्ते" इत्यनेन जश्त्वेन जकारादेशे तस्य जकारस्य पदान्तत्वादेव पुनः "चोः कुः" इत्यनेन कुत्वेन गकारादेशः प्राप्तः भत्वाद्वार्यते, 'वाजिनेषु' इति साधु।

---

**विमर्श-** स सुष्टुभा स ऋक्वता गणेन वलं रुरोज फलिगं रवेण।
बृहस्पतिरुस्रियो हव्यसूदः कनिक्रदद्वावशतीरुदाजत्॥
ऋ० ४-५०-५ पृष्ठ ४७५

---

**भावार्थ-**भपदसंज्ञाओं के आकडारीय होने के कारण प्रत्यय के पर में रहने पर प्रकृति को केवल एक ही संज्ञा प्राप्त थी। अतः यदि अयस् की मयट् प्रत्यय पर में रहने पर पदसंज्ञा होती तो भसंज्ञा नहीं होती तो सकार को रुत्वोत्व होने पर अयोमय यह अनभिष्ट प्रयोग ही होता। यदि भसंज्ञा होतीतो पदसंज्ञा नहीं होती। तो इस प्रकार 'ऋक्वता' प्रयोग में चकार को "चोः कुः" से कुत्व नहीं होता तो ऋच्वता यह अनभिष्ट प्रयोग हो जाता। तथा 'अनन्तरस्य विधिर्भवति प्रतिषेधो वा' इस न्याय के अनुसार केवल भसंज्ञा के द्वारा ही ये निपातन होने चाहिए। किन्तु अयस्मयादीनि सूत्रारम्भरूप विशेष प्रयत्न के द्वारा आवश्यकता के अनुसार दोनों संज्ञायें होती है। इसीलिए मूल में कहा गया है भपदसंज्ञाधिकारात् इत्यादि। कहीं-कहीं तो एक ही प्रकृति की आवश्यकता के अनुसार क्रमशः दोनों संज्ञाएँ होती है। जैसे 'स सुष्टुभास ऋक्वतागणेन' इस ऋग्वेदीय मन्त्र में प्रयुक्त 'ऋक्वता' पद की प्रकृति 'ऋच्' शब्द को वति प्रत्यय के पर में रहते हुए पदसंज्ञा होने के कारण "चोः कुः" ८-२-३० सूत्र से पदान्त चकार को कुत्व हो गया। किन्तु उसी ककार को पदान्त मानकर जब "झलां जशोऽन्ते" ८-२-३९ सूत्र से जश्त्व प्राप्त हुआ तो पूर्व में प्रवृत्त पदसंज्ञा का भसंज्ञा के द्वारा बाध होने के कारण जश्त्व का निषेध हो गया। यदि पूर्व में प्रवृत्त पदसंज्ञा का भसंज्ञा के द्वारा बाध नहीं होता तो पदान्त ककार को जश्त्व होने पर 'ऋग्वता' ऐसा अनिष्ट प्रयोग हो जाता। एक ही प्रकृति की दोनों संज्ञायें आवश्यकता के अनुसार क्रमशः होती हैं। यह बात "अयस्मयादीनि०" सूत्र के भाष्य में पढ़े गये 'उभयसंज्ञान्यपीति वक्तव्यम्' इस वार्तिक से प्रमाणित होती है। (इस वार्तिक से 'छन्दसि दृष्टानुविधिः' इस वचन की प्रामाणिकता सुदृढ होती है।) इसी प्रकार 'नैनं हिन्वन्ति वाजिनेषु' इस मन्त्र में प्रयुक्त 'वाजिनेषु' इस पद की वाचरूप प्रकृति की पदसंज्ञा होने के कारण चकार को पदान्त मानकर "झलां जशोऽन्ते" सूत्र से

**ते प्राग्धातोः। १-४-८०।**

छन्दसि परेऽपि। १-४-८१। व्यवहिताश्च। १-४-८२। हरिंभ्यां याह्योक आ। आ मन्द्रैरिन्द्रः हरिभिर्याु हि।

**शाङ्करी**- ते प्राग्धातोः १-४-८० इति सूत्रे 'ते' पदेन "उपसर्गाः क्रियायोगे" १-४-५९ "गतिश्च" १-४-६० इति सूत्रद्वयविहितगत्युपसर्गसंज्ञकाः प्रादयः परामृश्यन्ते। अतस्तत्र सूत्रार्थः ते गत्युपसर्गसंज्ञकाः प्रादयो धातोः प्रागेव प्रयोक्तव्याः। उदाहरणानि

**भावार्थ**- जश्त्व के द्वारा जकार हुआ। किन्तु उसी जकार को 'जाता संज्ञा तिष्ठत्येव' इस नियम के अनुसार पदान्त मानकर "चोः कुः" से कुत्व प्राप्त हुआ तो भसंज्ञा के द्वारा पूर्व प्रवृत्त पदसंज्ञा का बाध हो गया। यदि भसंज्ञा के द्वारा पदसंज्ञा का बाध नहीं होता तो कुत्व होने से 'वागिनेषु' यह अनभिष्ट प्रयोग निष्पन्न होता।

वही देवगुरु वृहस्पति आप ने सुन्दर स्तुति करने वाले तेजस्वी अपने गणों एवं अङ्गिरावों के शब्दों के द्वारा अनेक रूप धारण करने वाले वल नामक असुर का संहार किया। वही वृहस्पति सुमधुर स्वाद वाले उत्तम मधुर हवि के लिए उपयुक्त मधुर क्षीर देने वाली एवं मधुर शब्द करने वाली गायें देवताओं को दिये।

नैनं हिन्वन्ति वाजिनेषु-

सम्पूर्णो मन्त्रश्चेत्थम् -

उत त्वं सख्ये स्थिरपीतमाहु नैनं हिन्वन्त्यपि वाजिनेषु।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्॥

(ऋ०वे०१०-७१-५)

यह मन्त्र वाणी के वास्तविक अर्थ को जानने वाले विद्वान् की प्रशंसा के प्रसङ्ग में ऋग्वेद के दशम मण्डल के ७१ (एकहत्तरवें) सूक्त में उद्धृत हुआ है।

जो वाणी के वास्तविक अर्थ को जानता है, उसे विद्वानों की सभा में वाणी के स्थायी रहस्य का ज्ञाता कहा जाता है। तथा कोई भी विद्वान् उसके ज्ञान का अतिक्रमण या उपेक्षा नहीं करता है। इसके विपरीत जो व्यक्ति अर्थज्ञान से विमुख केवल शब्दों का पाठ करता है वह शरीर से सुन्दर दिखलाई देने वाली वत्स एवं दुग्ध देने में असमर्थ वन्ध्या गाय के समान संसार में भ्रमण करता है। वाणी का अर्थ ही पुष्प एवं फल है। जिस प्रकार पुष्प एवं फल से रहित केवल सुन्दर पल्लव से युक्त वृक्ष देखने में सुन्दर दिखाई देता है। उसी प्रकार सस्वर पाठ करने वाले पाठकर्ता के शब्द का उच्चारण मात्र ही अच्छा सुनाई देता है।

**शाङ्करी-** च 'प्रभवाणी'त्यादीनि। छन्दसि तु विपरीतोदाहरदर्शनाच् 'छन्दसि दृष्टानुविधिरि'ति नियमाच्चोच्यते 'छन्दसि परेऽपि' १-४-८१ "व्यवहिताश्च" १-४-८२ इति। अनयोः पूर्वसूत्रेऽपिशब्देन पूर्वसूत्रात्प्राक्पदं परामृश्यते। अतोत्र सूत्रार्थः - छन्दोविषये गत्युपसर्गसंज्ञकाः प्रादयो धातोः परेपि पूर्वेपि च प्रयोक्तव्याः। द्वितीयस्य तु गत्युपसर्गसंज्ञका, व्यवहिताऽपि प्रयोक्तव्याः। क्रमेण सूत्रद्वयोदाहरणे आह - हरिभ्यां याह्योक आ। आ मन्द्रैरिन्द्र हरिभिर्याहि। ऋ०वे० ३-४५-१।

---

**तीर्था-** "हरिभ्यां या॒ ह्योक॒ आ"। अत्र लोके यथा - 'प्रार्च्छति' इत्यादौ "ते प्राग्धातोः" इति सूत्रनिर्देशात् प्राद्युपसर्गाणां धातोः प्रागेव प्रयोगो भवति। तथैव वेदेऽपि नियमेन पूर्वप्रयोगे प्राप्ते "छन्दसि परेपि" इति सूत्रनिर्देशात् धातोः परेऽपि आङुपसर्गस्य प्रयोगः साधुः।

आ म॒न्दैरि॑न्द्र हरि॑भिर्या॒हि (ऋ०वे० ३-४५-१) अत्र "ते प्राग्धातोः" इति सूत्रनिर्देशाल्लोकवत् 'याहि' पदघटकयाधातोरव्यवहित प्राक् आङुपसर्गस्य प्रयोगः प्राप्तः "व्यवहिताश्च" इति सूत्रनिर्देशादनेकपदव्यवधानेऽपि पूर्वप्रयोगः साधुः।

---

**विमर्श-** हरि॑भ्यां या॒ह्योक॒ आ।

सम्पूर्णो मन्त्रश्चेत्थम् -

इम इन्द्रा॑य सुन्वि॒रे सोमा॑सो दध्या॑शिरः।

ताँ आ मदा॑य वज्रहस्त पी॒तये॒ हरि॑भ्यां या॒ह्योक॒ आ।

ऋग्वेद ७-३२-४ पृष्ठ ६८।

---

**भावार्थ-** लोक में गत्युपसर्गसंज्ञकप्रादि उपसर्गों का 'ते प्राग्धातोः' सूत्र के निर्देशानुसार धातु से पूर्व ही प्रयोग होता है। इसीलिए प्रभवाणि इत्यादि प्रयोगों में प्रादि का पूर्व में प्रयोग होने के कारण "आनि लोट्" ८-४-१६ सूत्र से उपसर्गस्थ निमित्त से पर में विद्यमान लोडादेशसम्बन्धी 'आनि' के नकार को णत्व हो गया।

किन्तु वेद में इनके विपरीत उदाहरणों के उपलब्ध होने के कारण 'छन्दसि दृष्टानुविधिः' एवं 'प्रयुक्तानामन्वाख्यानार्थं व्याकरणम्' इन आप्त वचनों का अनुसरण करते हुए महर्षि पाणिनि ने "प्रकृत छन्दसि परेऽपि" एवं "व्यवहिताश्च" इन दो सूत्रों का प्रणयन किया। अर्थ सुस्पष्ट है। यथा - वेद में गत्युपसर्गसंज्ञकप्रादि का धातु से पर में भी प्रयोग होता है। सूत्र में अपिशब्द का प्रयोग होने के कारण लोकवत् धातु में पूर्व में प्रयोग होता है। सूत्र का उदाहरण है - हरि॑भ्यां या॒ह्योक॒ आ। मन्त्र के इस पाद में 'याहि' इस तिङन्त पद में धातु है 'या' एवं उपसर्ग है

भावार्थ- 'आङ्'। इस उपसर्ग का लोकवत् धातु से पूर्व में ही प्रयोग प्राप्त था। किन्तु इस सूत्र के निर्देशानुसार धातु से पर में ओक पद का व्यवधान रहने पर भी आङ् उपसर्ग के प्रयोग का साधुत्व समर्थित हुआ।

द्वितीय सूत्र का अर्थ है – छन्द में गत्युपसर्गसंज्ञक प्रादि एवं धातु के मध्य पदान्तर का व्यवधान रहने पर भी प्रयोग साधु है। इसका उदाहरण है – आ मन्द्रैरिन्द्र हरिभिर्याहि। मन्त्र के इस पाद में सबसे आदि में आङ् उपसर्ग का तथा सबसे अन्त में 'याहि' इस तिङन्त पद में याधातु का प्रयोग हुआ है। इस प्रकार वेद में धातु एवं उपसर्गों के मध्य में अनेक पदों का व्यवधान रहने पर भी प्रयोग का साधुत्व समर्थित हुआ।

हाथ में वज्र धारण किये हुए हे इन्द्र! दधिमिश्रित सोमरस का निर्माण आप इसे पीकर प्रसन्न हो इसीलिए किया गया है। अतः दो घोडों से (युक्त रथ के द्वारा) आप शीघ्र यज्ञ मण्डप में आवें।

आ मन्द्रैरिन्द्र हरिभिर्याहि। सम्पूर्णो मन्त्रश्चेत्थम् –
आ मन्द्रैरिन्द्र हरिभिर्याहि मयूर रोमभिः। (ऋ०वे० ३-४५-१)
मा त्वा केचिन्नि यमन्विं न पाशिनोऽति धन्वेव ताँ इहि।

यह मन्त्र ऋग्वेद के तृतीय मण्डल के (४५) पैंतालीसवें सूक्त के प्रथम ऋक् के रूप में उपलब्ध होता है। इस सूक्त में कुल पाँच (५) ऋचायें है। ऋचा का भावार्थ – किसी यज्ञ के अवसर पर यज्ञ के आचार्य इन्द्र का आवाहन करते हुये कह रहा है कि – हे इन्द्र! मयूर पक्षी की रोमावलियों के समान सुन्दर रोमावलि वाले अश्वों पर सवार होकर हमारे यज्ञ में शीघ्र आप आवें। आकाश में उड़ते हुए पक्षियों को जिस प्रकार व्याध अपने जाल में फँसा लेता है। उसी प्रकार आप को भी कोई मार्ग में अवरुद्ध न कर दे। जिस प्रकार यात्री जलरहित मरु प्रदेश को शीघ्रतापूर्वक त्याग कर आगे चला जाता है। उसी प्रकार आप भी हमारे यज्ञ में शीघ्र चले आवें।

विशेषेण अत्रेदं विमृश्यते – यत् "ते प्राग्धातोः" १-४-८० इति सूत्रस्य काशिकायां ते गत्युपसर्गसंज्ञका धातो प्राक् प्रयोक्तव्या। (इत्येवकाररहित पाठो दृश्यते। सिद्धान्तकौमुद्यान्तु 'प्रागेव प्रयोक्तव्या' इत्येवकारघटितपाठो दृश्यते। अनयोः कतरः पाठो युक्त इति विचिकित्सायाम् महाभाष्ये प्रयोगनियमसंज्ञानियमयोर्मध्ये संज्ञानियमपक्षस्य युक्तता साधिता। तथा हि- धातोः प्राक् प्रयुक्तानामेव गत्युपसर्गसंज्ञा कर्तव्येति। इत्थं सिद्धान्तकौमुदीसम्मतैवकारघटितवृत्तिरेव समीचीनेति मन्तव्यम्। अस्मिंश्च पक्षे "छन्दसि परेऽपि" "व्यवहिताश्च" इति सूत्रद्वयस्य कर्तव्या समर्थिता।

**इन्धि भवतिभ्यां च। १-२-६।**

आभ्यां परोल्लिट् कित् स्यात्। समीधे दस्युहन्तमम्। पुत्र ईधे अथर्वणः। बभूव। इदं प्रत्यख्यातम्। इन्धेश्छन्दोविषयत्वात् भुवो वुको नित्यत्वात् ताभ्यां लिटः किद्वचनानर्थक्यमिति।

---

**शाङ्करी**–इन्ध धातोः परस्य लिट आर्धधातुकत्वेन "सार्वधातुकमपित्" १-२-४ इत्यनेन ङिद्वद्भावाप्राप्तौ संयोगात्परत्वेन "असंयोगाल्लिट् कित्" १-२-५ इत्यनेन किद्वद्भावाप्राप्तौ च "अनिदितां हल उपधायाः क्ङिति" ६-३-२६ इत्यनेनोपधानकारलोपाप्राप्तौ, 'बभूव' इत्यत्र च तिप् मिप् स्थानिकस्य णलः पित्वादार्धधातुकत्वाच्च "सार्वधातुकमपित्" १-२-४ इत्यनेन ङिद्वद्भावाप्राप्तौ प्रकृतसूत्रमारब्धम्। इन्धिभवतिभ्यां च १-२-६। अत्र सूत्रे "असंयोगाल्लिट् कित्" १-२-५ इत्यतो लिट्कित्पदेऽनुवर्तेते। अत एवोक्तम् - आभ्यां परो लिट् कित् स्यादिति। तेन इन्धेर्नकारस्य "अनिदितां हल उपधायाः" इत्यादिना नकारलोपः।

---

**तीर्था**- समीधे दस्यु हन्तमम्। पुत्र ईधे अथर्वणः। उभयत्रापि 'ईधे' इत्यत्र रुधादिगणपठिताद् दीप्त्यर्थकात् (ञि) इन्धी धातावीकारस्येत्संज्ञा-लोपाभ्यामपहारे, ततो लिट् लकारस्य प्रथमपुरुषैकवचने आत्मनेपदे "तिप्तस्झि०" इत्यादिसूत्रेण तादेशे तस्य "लिटस्तझयोरेशिरेच्" इत्यनेनैशादेशे तस्य "इन्धिभवतिभ्याम्" इति सूत्रेण किद्वद्भावे नकारस्य "अनिदितामित्यादि" सूत्रेण लोपे, धातोः "लिट्धातोरनभ्यासस्येति" सूत्रेण द्वित्वे, पूर्वस्य "पूर्वोऽभ्यासः" इत्यनेनाभ्याससंज्ञायां "हलादिः शेषः" इत्यनेनैकशेषे 'इ इध् ए' इत्यत्र द्वयोरिकारयोः सवर्णदीर्घे "ईधे" इति साधुः।

---

**भावार्थ**–"ते प्राग्धातोः" १-४-८० सूत्र के काशिका ग्रन्थ में "ते गत्युपसर्गसंज्ञका धातोः प्राक्प्रयोक्तव्या" यह एवकार रहित वृत्ति लिखी गयी है। सिद्धान्तकौमुदी में 'ते गत्युपसर्गसंज्ञकाः धातोः प्रागेव प्रयोक्तव्याः'। ऐसी एवकार घटित ही वृत्ति प्राप्त होती है। इन दोनों में कौन सी वृत्ति समीचीन है यह प्रश्न विचारणीय है। "ते प्राग्धातोः" सूत्र के भाष्य में प्रयोग नियमपक्ष में "उपसर्गाः धातोः प्रागेव प्रयोक्तव्या" यह तथा संज्ञा नियमपक्ष में 'धातोः प्राक् प्रयुज्यमाना एव गत्युपसर्गसंज्ञका भवन्तु'।

इन दोनों पक्षों में एवकार घटित पाठ ही उपलब्ध होने के कारण सिद्धान्तकौमुदी सम्मत एवकार घटित वृत्ति की ही समीचीनता सिद्ध होती है।

**तीर्था-** बभूव – भूधातोः लिट्लकारेनुबन्धलोपे लस्य परस्मैपदप्रथमपुरुषैकवचने तिबादेशे तस्य "परस्मैपदानामि"त्यादिसूत्रेण णलादेशेनुबन्धलोपे 'भू अ' इत्यत्र "अचोञ्णिति" इति सूत्रेण उकारस्य प्राप्तवृद्धिः "इन्धिभवतिभ्यां च" इति सूत्रेण लिटः कित्वात् "क्ङिति च" इति सूत्रेण निषेधे "भुवो वुग्लुङ्लिटोः" इत्यनेन वुगागमे अभ्यासादि कार्ये 'बभूव' इति साधुः।

---

**विमर्श-** पुत्र ईधे अथर्वणः। सम्पूर्णो मन्त्रश्चेत्थम् -

तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः।

वृत्रहणं पुरन्दम्। ऋग्वेद ६-१६-१४

तमु त्वा पाथ्यो वृषा समींधे दस्यु हन्तमं धनं जयं रणें रणे॥

ऋ०वे० ६-१६-१५

ये दोनों मन्त्र यज्ञ के अवसर पर अरणि मन्थन के द्वारा अग्नि को प्रगट करते समय उनकी प्रशंसात्मक स्तुति के प्रसङ्ग में प्रयुक्त हुये हैं। इन मन्त्रों के अग्नि ऋषि हैं। यहाँ अग्नि को देवता के राजा इन्द्र के रूप में प्रशंसित किया गया है।

हे अग्निदेव! आपको अथर्वा ऋषि के पुत्र दध्यङ्ङृषि ने पहले प्रज्वलित किया था। आप वृत्र नामक राक्षस के हनन करने वाले एवं असुरों के पुरों को विदीर्ण करने वाले साक्षात् इन्द्र ही है। ऋग्वेद ६-१६-१५।

हे अग्निदेव! अनेक बार युद्ध के द्वारा देवताओं के धन का अपहरण करने वाले चोर असुरों का हनन करने के लिये आपको पाथ्यो वृषा नामक ऋषि ने पूर्णरूप से प्रज्वलित किया था।

---

**भावार्थ-**'समीधे दस्यु हन्तमम् पुत्र ईधे अथर्वणः' इन दोनों मन्त्रांशों के 'ईधे' इस प्रयोग में लिट् लकार के स्थान में आत्मनेपद के प्रथमपुरुष में 'त' आदेश एवं उसके स्थान में "लिटस्तझयोरेशिरेच्" ३-४-८१ सूत्र से एश् आदेश हुआ। यह एश् आदेश लिटस्थानिक है। इसकी "लिट् च" ३-४-११५ इस सूत्र से आर्धधातुकसंज्ञा होने के कारण "सार्वधातुकमपित्" १-२-४ से ङिद्वद्भाव की प्राप्ति नहीं है। तथा संयोग पर होने के कारण "असंयोगाल्लिट् कित्" १-२-५ सूत्र से किद्वद्भाव की भी प्राप्ति नहीं होने से "अनिदितां हल उपधाया क्ङिति" ६-३-२६ सूत्र से उपधा नकार का लोप नहीं होगा। इसी प्रकार 'बभूव' इस प्रयोग में भी भू धातु से पर में लिट् लकार स्थानिक तिप् मिप् के स्थान में णलादेश के पित् एवं आर्धधातुक होने के कारण "सार्वधातुकमपित्" १-२-४ सूत्र से ङिद्वद्भाव की

**विमर्श-** इदं प्रत्याख्यातमिति। अयम्भावः -

इन्धेर्लिटि 'ईधे' इत्यत्र छन्दस्युभयथा ३-४-११७ इति सूत्रेण धातोरधिकारे विहितप्रत्ययानां छन्दसि लक्ष्यानुसारात् सार्वधातुकार्धधातुकोभयसंज्ञाभावात्त्वात् प्रकृते लिटः सार्वधातुकत्वेन "सार्वधातुकमपित्" १-२-४ इति सूत्रेण ङिद्वद्भावादुपधानकारस्य "अनिदितामि"त्यादि ६-६-२६ सूत्रेण लोपसिद्धौ सूत्रे इन्धिग्रहणं व्यर्थम्। लिटः सार्वधातुकत्वेन श्नमः प्राप्तिस्तु छन्दसि दृष्टानुविध्यनुसरणादार्धधातुकत्वेन वारयितुं शक्यत्वात्।

एवमेव भवतेरपि ग्रहणं व्यर्थम्। तथाहि-

'बभूव' इत्यत्र लिटः प्रकृतसूत्रेण कित्वाभावे "अचोञ्णिति" ७-२-११५ इति सूत्रेण वृद्धौ वुगभावस्तु नाशङ्कनीयः। सत्यामपि वृद्धौवेकदेशविकृतन्यायेन अकृतायाञ्च प्राप्तिरस्त्येवेति 'कृताकृतप्रसङ्गो विधिनित्य' इति परिभाषया परामपि वृद्धिं बाधित्वा नित्यत्वात् "भुवो वुग्लुङ्लिटोः" ६-४-८८ इत्यनेन वुक्सिद्धौ किदर्थं तद्ग्रहणं व्यर्थमेवेतिभावः। उक्तञ्च "भुवो वुग्लुङ्लिटोः" इति सूत्रस्थसिद्धान्तकौमुद्यां मूले नित्यत्वाद् वुग् गुणवृद्धी बाधते इति।

अत्रेदमवधेयम् - "इन्धिभवतिभ्याम्" इत्यत्रेन्धेरिकारः सुट्तिथोः इति वदुच्चारणार्थो न तु 'इकश्तिपौ धातुनिर्देशे' इति वार्तिकविहितेक्प्रत्ययान्तः। तथा सति कित्प्रत्ययपरे अनिदितामित्यादिनोपधानकारलोपे सूत्रे नकारविशिष्टपाठविरोधापत्तेः। उच्चारणार्थत्वस्वीकारे तु उच्चारणमेवार्थो यस्येति व्युत्पत्या तेषां सहोच्चारितवर्णानामुच्चारणानन्तरमित्संज्ञालोपाभ्यां विनैव निवृत्तेः।

---

**भावार्थ-** प्राप्ति नहीं है। यहाँ किद्वद्भाव नहीं होने से "अचोञ्णिति" ७-२-११५ सूत्र से उकार को वृद्धि हो जाती तो "भुवो वुग्लुङ्लिटोः" ६-४-८८ सूत्र से वुगागम नहीं होता। अतः इन दोनों प्रयोगों में लिट् को किद्वद्भाव करने के लिए "इन्धिभवतिभ्यां च" १-२-६ इस सूत्र का प्रणयन हुआ। इस सूत्र में "असंयोगाल्लिट् कित्" १-२-५ सूत्र से 'लिट् कित्' इन दो पदों की अनुवृत्ति हुई। अतः सूत्रार्थ हुआ - इन्ध् एवं भू धातु से पर में विद्यमान लिट् कित् होता है।

भाष्यकार ने इस सूत्र का प्रत्याख्यान कर दिया है। जैसे - ईधे इस प्रयोग में रुधादिगण पठित इन्ध धातु से लिट् लकार के स्थान में आत्मनेपद के प्रथमपुरुष के एकवचन में त प्रत्यय तथा उसके स्थान में "लिटस्तझयोरेशिरेच्" ३-४-८१ सूत्र से एश् आदेश हुआ। उस एश् को "लिट् च" सूत्र से प्राप्त आर्धधातुकसंज्ञा का

"छन्दस्युभयथा" ३-४-११७ सूत्र से धातोः सूत्र के अधिकार में विहित प्रत्ययों की वेद में लक्ष्यानुसार दोनों संज्ञाओं के होने के कारण सार्वधातुकसंज्ञा हो जायेगी। इस प्रकार "सार्वधातुकमपित्" सूत्र से ङिद्भाव होकर उपधा नकार का अनिदितामित्यादि सूत्र से लोप हो जायेगा। इसलिए उपधा नकार का लोप करने के लिए प्रकृत सूत्र से लिट् को कित् करना व्यर्थ है। लिट् लकार के सार्वधातुक होने पर मध्य में श्नम् विकरण की प्राप्ति का वारण आर्धधातुकसंज्ञा के द्वारा हो जायेगा।

इसी प्रकार 'बभूव' इस प्रयोग में प्रकृत सूत्र से लिट् को किद्वद्भाव नहीं होने से लिटस्थानिक णल् प्रत्यय को पर में णित् मानकर भू में उकार को "अचोञ्णिति" सूत्र से वृद्धि हो जाने पर वुगागम के अभाव में अनिष्ट प्रयोग की आशंका नहीं करनी चाहिए, क्योंकि वृद्धि हो जाने पर भी 'एकदेशविकृतन्याय' से तथा न होने पर स्वतः वुगागम की प्राप्ति रहने के कारण 'कृताकृतप्रसङ्गो विधिर्नित्यः' इस न्याय के अनुसार वुगागम नित्यत्वात् वृद्धि को बाधकर प्रवृत्त हो जायेगा। अतः प्रकृत सूत्र में भू धातु के ग्रहण की कोई आवश्यकता नहीं होने के कारण अष्टाध्यायी में सम्पूर्ण सूत्र का पाठ व्यर्थ ही है।

यहाँ यह भी ज्ञातव्य है कि सूत्रस्थ इन्धि में इकार 'सुट्तिथोः' के इकार के समान उच्चारणार्थ ही है। यदि "इकस्तिपौ धातुनिर्देशे" वार्तिक से विहित इक्प्रत्ययान्त होता तो कित् प्रत्यय को पर में मानकर "अनिदितां हलुपधायाः" सूत्र से नकार लोप हो जाने पर सूत्र में नकार विशिष्ट पाठ का विरोध हो जाता। 'उच्चारणार्थ' शब्द की व्युत्पत्ति है, उच्चारणमेव अर्थो यस्यासौ उच्चारणार्थः। अर्थात् प्रकृत में इकार का नकारधकारवर्णों के उच्चारण में सहायता करना मात्र प्रयोजन है। इन दो वर्णों के उच्चारणानन्तर इकार स्वतः निवृत्त हो जाता है।

॥ इति प्रथमोऽध्यायः ॥

# ॥ द्वितीयोऽध्यायः ॥

**तृतीया च होश्छन्दसि २-३-३**

जुहोतेः कर्मणि तृतीया स्याद् द्वितीया च।

यवाग्वाऽग्निहोत्रं जुहोति। (शा०श्रौ०सू० ३-१२-१६)।

अग्निहोत्रशब्दोऽत्र हविषि वर्तते। "यस्याग्निहोत्रमधिश्रित-ममेध्यमापद्येत्" इत्यादि प्रयोग दर्शनात्। "अग्नये हूयते" इति व्युत्पत्तेश्च। यवाग्वाख्यं हविर्देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः।

---

**शाङ्करी** - तृतीयेति - इतः प्राक् "अनभिहिते"२-३-१, "कर्मणि द्वितीया" २-३-२ इति सूत्रद्वयमस्ति। तत्र "अनभिहिते" इत्यधिकारसूत्रम्। अतः कर्मणि द्वितीयेत्याद्यग्रिमसूत्रेषु तदधिक्रियते। तेन अनभिहिते (अनुक्ते) कर्मणि द्वितीयेत्याद्यर्थः सम्पद्यते। "यवाग्वाऽग्निहोत्रं जुहोति" इति वाक्ये यवागूशब्दात् "कर्मणि द्वितीया" इत्यनेन लोकवन्नित्यं द्वितीयाप्राप्तौ, छन्दसि विकल्पेन तृतीयाविधानार्थं प्रकृतसूत्रमारब्धं तृतीयेति। अत्रापि पूर्वसूत्रात्कर्मणीति पदमनुवर्तते। अतो जुहोतेः कर्मणीत्याद्यर्थो निष्पद्यते। सूत्रे चकारग्रहणाद् द्वितीयाऽपि भवति। "यवागूमग्निहोत्रं जुहोति" शा०श्रौ०सू० ३-१२-१६)।

---

**तीर्था** - "यवाग्वाऽग्निहोत्रं जुहोति" इत्यत्र यवागू शब्दात् "कर्मणि द्वितीया" इति सूत्रेण नित्यं द्वितीयाविभक्तौ प्राप्तायां "तृतीया च होश्छन्दसि" इति सूत्रेण वेदे तृतीया विभक्तौ यवाग्वेति सिद्धम्। सूत्रे चकारग्रहणात् कर्मणि द्वितीयेति पूर्वसूत्रेण द्वितीयाविभक्तौ यवागूम् इति साधु।

---

**विमर्श** - भाष्यकारेण सूत्रमिदं प्रत्याख्यातम्। तथा हि - यस्याग्निहोत्रं प्रज्वलितमिति दृष्टान्तेन अग्निहोत्रशब्दस्याग्निरूपार्थकत्वं हुधातोश्च तृप्त्यर्थकत्वमङ्गीकृत्य "यवाग्वाऽग्निहोत्रं जुहोति" इति वाक्यस्य यवाग्वाख्यद्रव्येण अग्निं प्रीणातीत्यर्थं स्वीकृत्य "कर्तृकरणयोस्तृतीया" २-३-१८ इति सूत्रेण तृतीया, यत्र च "यवागूमग्निहोत्रं जुहोति" इति द्वितीयाविभक्तिर्दृश्यते तत्राग्निहोत्रशब्दस्य

---

**भावार्थ** - तृतीया च होश्छन्दसि २-३-३ इस सूत्र में "कर्मणि द्वितीया" २-३-२ सूत्र से कर्मणि पद की अनुवृत्ति हुई। अतः अर्थ हुआ जुहोतेः कर्मणि तृतीया भवति। सूत्र में चकार ग्रहण के बल पर पक्ष में द्वितीया विभक्ति भी होती है। इसलिये शांख्यायन श्रौत सूत्र ३-१२-१६ "यवाग्वाऽग्निहोत्रं जुहोति" एवं "यवागूमग्निहोत्रं

**शाङ्करी** – अत्र यवागूशब्दादेव विकल्पेन तृतीया द्वितीया च विधीयते। अग्निहोत्रशब्दात्तु नित्यं द्वितीयैव। अत एव यवाग्वाऽग्निहोत्रं जुहोति (शांख्यायन श्रोत सूत्र ३-१२-१६) यवागूमग्निहोत्रं जुहोति (शां०श्रौ०सू० ३-१२-१६) इति प्रयोगद्वयसंसिद्धिः। अत्र यवागूशब्दश्च अग्नये हूयते यत्तदग्निहोत्रमिति व्युत्पत्त्या हविः सायान्यार्थकः। मूलेऽत्र प्रमाणमप्युप्रदर्शितम्। यस्याग्निहोत्रमित्यादि। तत्र यवागूशब्दोऽग्निहोत्रे विशेषणम् ततः सामान्यविशेषयोरभेदान्वय इति नियमात् यवाग्वभिन्नं हविरग्नौ प्रक्षिपतीत्यर्थः।

नन्वभेदान्वयबोधं प्रति समानविभक्तिकत्वस्य प्रयोजकत्वात् प्रकृते तदभावात् कथमभेदान्वय इति चेत् भिन्नविभक्त्यवरुद्धत्वेऽपि भिन्नार्थकविभक्त्यनवरुद्धत्वात्। प्रकृति द्वितीयातृतीययोः समानार्थकत्वेनादोषात्। अत एव कारकेषु विवक्षातः कारकाणि भवन्ति इति पक्षे भिन्नविभक्त्य वरुद्धानामपि "प्रकृतिः चारुः" इत्यत्रेव "प्रकृत्या चारुः" इत्यत्रापि अभेदान्वयबोधः। तेन प्रकृत्याचारुः इत्यस्य प्रकृत्यभिन्न चारुत्ववान् इत्यर्थबोधश्च सम्पद्यते।

---

हविसामान्यार्थकत्वं यवागूशब्दस्य च हविर्विशेषार्थकत्वमङ्गीकृत्य "सामान्य-विशेषयोरभेदान्वयः" इति नियमादभेदान्वयं, हुधातोः प्रक्षेपणार्थकत्वञ्च स्वीकृत्य यवागूरुपहविरग्नौ प्रक्षिपतीत्यर्थो जायते। अत्र "कर्मणि द्वितीया" २-३-२ इत्यनेन द्वितीयाविधानसिद्धे सूत्रमिदं न कर्तव्यमिति भावः। शांख्यायन श्रौ०सू० ३-१२-१६ इत्यत्र तु अग्निहोत्रं वा यवाग्वा सायं प्रातः "इत्येवानुपूर्वीमन्त्रस्य अस्ति" पृ० २७।

---

जुहोति"३-१२-१६ इत्यादि वाक्यों में यवाग्वा तथा यवागूं तृतीयान्त द्वितीयान्त दोनों पदों का प्रयोग साधु है। अग्निहोत्र में "कर्मणि द्वितीया" २-३-२ सूत्र से द्वितीया होती है। यहाँ यवागूरूप हुति विशेष का अग्निहोत्र रूप हविसामान्य के साथ के अभेदान्वय होने के कारण तथा हु धातु का प्रक्षेपण अर्थ होने से यवागूरूपहवि को अग्नि में प्रक्षिप्त किया जा रहा है, यह सम्पूर्ण वाक्य का अर्थ हुआ। यद्यपि अभेदान्वय बोध के लिए "विशेषण एवं विशेष्यवाचक पदों को समानविभक्त्यन्त होना चाहिए यह नियम होने के कारण "यवाग्वा" तृतीयान्त पक्ष में यवागू का हवि के साथ अभेदान्वय बोध कैसे हुआ? यह शंका की जा सकती है। किन्तु यहाँ तृतीया एवं द्वितीया विभक्तियों के समानार्थक होने अर्थात् भिन्नार्थक नहीं होने के कारण अभेदान्वय बोध में कोई बाधा नहीं है। इसीलिए "विवक्षातः कारकाणि भवन्ति" इस मान्यता के अनुसार "प्रकृतिः चारुः" के प्रसङ्ग में "प्रकृत्यादिभ्य उपसंख्यानम्" इस वार्तिक से तृतीया होने पर भी "प्रकृत्या चारुः" इस वाक्य में प्रकृति का चारु के साथ अभेद सम्बन्ध से अन्वय होता है। इसीलिए प्रकृत्यभिन्न चारुत्ववान् यह अर्थ बोध होता है।

**द्वितीया ब्राह्मणे २-३-६०।** ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया स्यात्। षष्ठ्यापवादः। गामस्य तदहः सभायां दीव्येयुः। (मै०सं० १-६-११-५६) पृष्ठ ६१।

---

**शाङ्करी** - सूत्रादस्मात् प्राक् दिवस्तदर्थस्य २-३-५८ इति सूत्रमस्ति। तत्र तदर्थपदेन दिव्धातोः द्यूतार्थः, क्रयविक्रयरूपव्यवहारार्थो च गृह्येते। अतस्तत्र सूत्रार्थो जायते - द्यूतार्थकस्य क्रयविक्रयरूपव्यवहारार्थकस्य च दिव्धातोः कर्मणि षष्ठी स्यादिति। "शतस्य दीव्यति" इति इति तस्योदाहरणम्। प्रकृतसूत्रे दिवस्तदर्थस्येति सूत्रमनुवर्तते। अतोऽत्र सूत्रार्थः - ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया स्यात्। षष्ठ्यप्रवादेति। दिवस्तदर्थस्येति सूत्रेण प्राप्ताया इति भावः। छन्दसि सोपसर्गस्य दिव्धातोः कर्मणि "विभाषोपसर्गे" २-३-५८ इति सूत्रेण व्यवस्थितविभाषया षष्ठीसिद्धौ निरूपसर्गार्थं सूत्रमिदम्।

---

**तीर्था** - गामस्य तदहः सभायां दीव्येयुः। अत्र दिव्धातोः कर्मणः अहन्शब्दाद् "दिवस्तुदर्थस्येति" सूत्रेण षष्ठीविभक्तौ प्राप्तायां तं प्रबाध्य "द्वितीया ब्राह्मणे" इति सूत्रेण ब्राह्मणविषयकप्रयोगे द्वितीयाविभक्तौ "तद् अम् अहन् अम्" इति स्थितौ "स्वमोर्नपुंसकात्" इति सूत्रेण अमोर्लुकि "रोऽसुपि" इति सूत्रेण नकारस्य रेफ विसर्गे च "तदहः" इति साधुः।

---

**विमर्श**- ब्राह्मण इति। ब्राह्मणशब्दः शतपथस्याख्येति जिनेन्द्रबुद्धि र्न्यासकारः। मन्त्र व्यतिरिक्तो वेदभागः= ब्राह्मणम् इति हरदत्तः पदमञ्जरीकारः। ब्राह्मणस्य कथं वेदपदवाच्यत्वमिति - मन्त्रब्राह्मणयोर्वेदनामधेयमित्याप्त-वचनप्रामाण्याद् ब्राह्मणस्यापि वेदत्वं ज्ञेयम्।

गामस्य तदहः सभायां दिव्येयुः, स्तस्याः परुंषि न हिंस्युस्तांस्समासद्भ्यश्च उपहरेत् तया यद्गृह्णीयात् तद्ब्राह्मणेभ्यो देयं, तत् सभ्यमन्नमवरुन्द्धे। मैत्रायणी संहिताः १-६-१६।

---

**भावार्थ** - "द्वितीया ब्राह्मणे"२-३-६० सूत्र से पूर्व में "दिवस्तदर्थस्य" २-३-५८ सूत्र है। जिसका अर्थ है - द्यूतार्थक एवं क्रयविक्रयरूपव्यवहारार्थक दिव्धातु के कर्मवाचक शब्द से कर्म में षष्ठी विभक्ति होती है। उसका उदाहरण है। (शतस्य दीव्यति) "द्वितीया ब्राह्मणे" २-३-६० सूत्र में 'दिवस्तदर्थस्य' सम्पूर्णसूत्र की अनुवृत्ति होती है। अतः यहाँ सूत्रार्थ हुआ ब्राह्मण विषयक प्रयोग में दिव् धातु के अर्थ का जो कर्म तद्वाचक शब्द से द्वितीया विभक्ति होती है। यह

**चतुर्थ्यर्थेति बहुलं छन्दसि। २-३-६२।**

षष्ठी स्यात्। पुरुषमृगश्चन्द्रमसः (वा०सं० २४-३५) गोधाकालकादार्वाघाटस्ते वनस्पतीनाम्। वनस्पतिभ्य इत्यर्थः (ग) षष्ठ्यर्थे चतुर्थीति वाच्यम्। या खर्वेण पिबति तस्यै खर्वः।

---

**शाङ्करी** - चतुर्थ्यर्थ इति। षष्ठी स्यादिति। अत्र "षष्ठी शेषे" २-३-५० इति सूत्रात् षष्ठी पदानुवृत्तौ छन्दसि विषये चतुर्थ्यर्थे बहुलं षष्ठी विभक्तिर्भवतीत्यर्थः। बहुलग्रहणाच्चतुर्थी अपि भवति। या खर्वेण पिबति तस्यै खर्व इति। सुबोधिनीव्याख्यान्तु बहुलग्रहणस्य "चन्द्रमसे रुदमी रात्र्यै" इत्यादौ षष्ठ्यभाव इत्याह। कुत्रत्यमिदमुदाहरणमिति नोक्तवान्। व्यत्ययो बहुलम् इत्यस्यैव प्रपञ्च इति नागेशभट्टः।

---

**विमर्श**- अत्र मन्त्रे दिव्धातोर्लिङि ह्रस्वेकारोपधपाठ एव उपलभ्यते। काशिकासिद्धान्तकौमुद्योस्तु "हलि च" ८-२-७७ इत्यनेनोपधादीर्घमुद्दिश्य "दीव्येयुः" इति दीर्घेकारोपधपाठ एव दृश्यते। वस्तुतः "छन्दसि दृष्टानुविधिरिति" नियमात् ह्रस्वेकारोपधपाठ एवोचित इति मान्याः।

---

द्वितीया "दिवस्तदर्थस्य" सूत्र से प्राप्त षष्ठी का अपवाद है। इसीलिये मूल कौमुदी में लिखा है "षष्ठयपवाद" इति। "गामस्य तदहः सभायां दीव्येयुः" इस वाक्य में "तदहः" यह प्रकृत सूत्र का उदाहरण है। यहां तद् एवं अहन् प्रकृति से पर में प्रकृतसूत्र से द्वितीया विभक्ति का विधान होने पर "तद् अम् अहन् अम्" इस अवस्था में "स्वमोर्नपुंसकात्" ७-१-२३ सूत्र से दोनों अम् विभक्ति का लुक् हो गया तथा अहन् शब्द के नकार के स्थान में (रोऽसुपि ८-२-६९ सूत्र में अहन् ८-२-६८ सूत्र की अनुवृत्ति होने के कारण) रोऽसुपि सूत्र से रुत्व एवं विसर्ग होने पर तदहः यह पद निष्पन्न हुआ।

**भावार्थ**-"चतुर्थ्यर्थेबहुलं छन्दसि" २-३-६२ इस सूत्र में "षष्ठी शेषे" २-३-५० सूत्र से षष्ठी पद की अनुवृत्ति हुई इसीलिए वृत्ति में "षष्ठी स्यात्" लिखा है। यहाँ की षष्ठी शेषत्व की विवक्षा में है। इस सूत्र में बहुल शब्द का विभाषा रूप अर्थ लिया गया है। इसीलिये वाजसनेय संहिता में चन्द्रमसः चन्द्रमसे वनस्पतीनां, वनस्पतिभ्यः, षष्ठयन्त एवं चतुर्थ्यन्त दोनों प्रकार के प्रयोग पाये जाते हैं। यहाँ सुबोधिनी व्याख्याकार ने सूत्र में बहुलग्रहण का प्रयोजन "चन्द्रमसे रुदमी रात्र्ये" इस मन्त्र के 'चन्द्रमसे' पद में चतुर्थी विधान दिखाये हैं किन्तु यह मन्त्र कहाँ का

**शाङ्करी** – चतुर्थ्यर्थे इति सूत्रस्थं बहुलग्रहणमत्रापि विवक्ष्यते, तस्य च क्वचिदन्यदेवेत्यर्थं गृहीत्वा क्वचित् षष्ठ्यर्थेऽपि चतुर्थी भवतीत्यर्थः। या खर्वेणेति तस्यै खर्वः। (जायते) (तस्याः खर्व इत्यर्थः)

---

**तीर्था** – 'पुरुषमृगश्चन्द्रमसः' इत्यत्र चन्द्रमस् इति सकारान्त शब्दाच्चतुर्थी विभक्तौ प्राप्तायां तां प्रबाध्य चतुर्थ्यर्थे बहुलं छन्दसि इति सूत्रेण षष्ठीविभक्तौ 'चन्द्रमसः' साधुः, बहुलग्रहणसामर्थ्यात् पक्षे चतुर्थीविभक्तौ 'चन्द्रमसे' इत्यपि साधुः।

"गोधाकालकादार्वाघाटस्ते वनस्पतीनाम्" इति वाक्यघटकवनस्पतिशब्दाच्चतुर्थी विभक्तिप्राप्तौ तां प्रबाध्य "चतुर्थ्यर्थे बहुलं छन्दसि" इति सूत्रेण षष्ठीविभक्तौ "वनस्पतीनाम्" इति। बहुलग्रहणसामर्थ्याच्यतुर्थ्यां तु "वनस्पतिभ्यः" इत्यपि साधु।

"या खर्वेण पिबति तस्यै खर्वः" अत्र तत् प्रातिपदिकात् "चतुर्थ्यर्थे बहुलं छन्दसि" इति सूत्रेण षष्ठीप्राप्तायां "षष्ठ्यर्थे चतुर्थीति वाच्यम्" इति वार्तिकेन चतुर्थी विभक्तौ तस्यै "खर्वः" इति साधुः।

---

**विमर्श**- प्रकृतवार्तिकं भाष्ये प्रत्याख्यातम्। तथा हि – चतुर्थ्यर्थे बहुलं छन्दसि २-३-६२ इति सूत्रे च चतुर्थी, अर्थे इत्यसमस्तं पदद्वयमिति मत्वा "चतुर्थी" इति प्रथमो योगः, "अर्थे" इति द्वितीयः। तत्र द्वितीययोगे "षष्ठी शेषे"२-३-५० इति सूत्रात्षष्ठीपदं "चतुर्थी" इति पूर्वयोगश्चानुवर्तनीयः। ततश्च षष्ठ्यर्थे चतुर्थी विभक्तिर्भवतीत्यर्थलाभे प्रकृतवार्तिकं न कर्तव्यामिति भावः।

---

**भावार्थ**- है यह ज्ञात नहीं है। काशिका में कृष्णो रात्र्ये (का०सं० ६८.४०) हिमवते हस्ती (वा०सं० २४.३०) उदाहरण दिखाये गये हैं।

"चतुर्थ्यर्थे बहुलं छन्दसि"२-३-६२ सूत्र के बहुल ग्रहण को उसके प्राकृत वार्तिक से भी सम्बद्ध मानकर उसका क्वचिदन्यदेव अर्थ लिया गया है। अतः कहीं कहीं षष्ठी विभक्ति के अर्थ में भी चतुर्थी विभक्ति होती है, यह अर्थ हुआ। इसलिये "या खर्वेण पिबति तस्यै खर्वः (जायते)" इस उदाहरण में तस्याः के अर्थ में तस्यै यह पद प्रयुक्त हुआ है।

यह सम्पूर्ण मन्त्र इस प्रकार है। "(या)ऽभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपभारी याऽऽङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन् या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुंसृजति तस्या उदबन्धुको या पर्णेन पीबति तस्या उन्मादुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा।" (कृष्ण यजुर्वेदीय तैतरीय संहिता काण्ड २ प्रपाठक ५ अनुक्रमणिका १ का ५ मन्त्र)

**यजेश्च करणे २-३-६३**। इह छन्दसि बहुलं षष्ठी। घृतस्य घृतेन वा यजते। (श०ब्रा० ४-४-२४)

**बहुलं छन्दसि २-४-३९**। अदो घस्लादेशः स्यात्। घस्तां नूनम्। (वा०सं० २१-४३) लुङि मन्त्रे घस....... (२-४-८०) इति च्लेर्लुक्। अडभावः। सग्धिश्च मे। (वा०सं० १८-९)

---

**शाङ्करी** - इहेति। अत्र सूत्रे "षष्ठी शेषे" २-३-५० इति सूत्रात् षष्ठी पदमनुवर्तते। अतः यजेर्धातोः करणे कारके छन्दसि बहुलं षष्ठीविभक्तिर्भवति। अत्र बहुलशब्दस्य विभाषार्थकत्वं स्वीकृत्य षष्ठीतृतीये उभेऽपि भवतः। अत एव घृतस्य यजते (श०ब्रा० ४-४-२-४) घृतेन वा यजते। इत्युभयमपि भवति। यज्धातुरत्र देवपूजार्थकः। अतो घृतकरणकं देवपूजनमित्यर्थो ज्ञेयः।

बहुलमिति। अत्र "अदो जग्धिर्ल्यप्ति किति" २-४-३६ इत्यतो "अदः" इति लुङ्सनोर्घस्लृ २-४-३७ इत्यतो "घस्लृ" चानुवर्तते। अदो बहुलं घस्लादेशः स्याच्छन्दसीति सूत्रार्थः।

---

**तीर्था** - घृतस्य घृतेन वा यजते। अत्र यज् धातोः करणवाचकाद् घृतशब्दात् करणेऽर्थे नित्यं तृतीयाविभक्तौ प्राप्तायां "यजेश्च करणे" इति सूत्रेण बहुलं षष्ठी विभक्तौ "घृतस्य यजते" इति साधुः। बहुलग्रहणानुवृत्तिपक्षे तु तृतीयाविभक्तौ "घृतेन यजते" इत्यपि साधु।

घस्तां नूनम्। अद्धातोर्लुङि मध्ये "च्लि लुङि" ३-१-४३ इत्यनेन च्लि प्रत्यये तस्य स्थाने "च्लेः सिच्" ३-१-४४ इत्यनेन सिजादेशे प्राप्ते तं प्रबाध्य "मन्त्रे घसह्वरणश००" ३-४-८० इत्यादिना च्लेर्लुक्, लुङः स्थाने तस् आदेशे

---

**विमर्श** - अत्र ब्राह्मणग्रन्थः - अथ चतुर्गृहीतभाज्यं गृहीत्वा। आश्राव्याऽऽह धृतस्य यजेति व्वषट् कृते जुहोति। तद्याऽअत प्प्रापच्च्य ऽ आहुतयो हुता भवन्ति ताभ्य ऽ एवै तदन्तर्दधाति तथा हा ऽसमदं करोति। श०ब्रा० ४-४-२-४।

---

**भावार्थ** - यजेश्चेति। यज् धातु (देवपूजन) को करणकारक की विषयता में छन्द में विकल्प से षष्ठीविभक्ति होती है। तथा बहुल ग्रहण की अनुवृत्ति होने के कारण तृतीया विभक्ति भी होती है। इसीलिए शतपथ ब्राह्मण में घृतस्य यजते (श०ब्रा० ४-४-२-४) घृतेन वा यजते षष्ठ्यन्त एवं तृतीयान्त दोनों प्रयोग पाये जाते है।

बहुलमिति। इस सूत्र में "अदो जग्धिर्ल्यप्ति किति" २-४-३६ सूत्र से

**तीर्था**- तस्य ''तस्थस्थमिपां०००० '' ३-४-१०१ इत्यादिना तामादेशे ''लुङ् लङ् लृङ् ०० ''६-४-७१ इत्यादिना प्राप्ताडागमस्य ''बहुलं छन्दस्यमाङ्योगेऽपि'' ६-४-७५ इति निर्देशान् ''न माङ्योगे'' ६-४-७४ इत्यनेन क्वचित् नाङ्योगाभावेऽपि निषेधः।

नन्वयं घस्लादेशः ''लुङ्सनोर्घस्लृ'' २-४-३७ इत्यनेनापि सिद्ध इत्यत आह -

सग्धिश्च मे (१८-९) - अदनं ग्धिः। अत्र अद्धातोः ''स्त्रियां क्तिन्'' ३-३-९४ इत्यनेन क्तिनि प्रकृत सूत्रेण अदो घस्लादेशे ''घसिभसोर्हलि च'' ६-४-१०० इत्यनेनोपधालोपे सकारस्य ''झलो झलि'' ८-२-२६ इत्यनेन लोपः, तकारस्य ''झषस्तथोर्धोऽधः'' ८-२-४० इत्यनेन धादेशो घकारस्य च ''झलां जश्झशि'' ८-४-५३ इत्यनेन जश्त्वेन गकारे ''ग्धिः'' इति। ततः ''समाना ग्धिः'' इति विग्रहे ''पूर्वापरप्रथमचरमजघन्यसमान०००'' २-१-५८ इत्यादिना कर्मधारयसमासे समानशब्दस्य ''समानस्य छन्दस्य मूर्द्धः००'' ८-३-८४ इत्यनेन सादेशे कृदन्तत्वात्प्रातिपदिकत्वेन सौ रुत्वविसर्गौ ''सग्धिः'' इति।

---

**विमर्श**- अत्र सुबोधिन्याम् - नन्विदं ''लुङ्सनो००'' इत्यनेन सिद्धमित्याशङ्क्योदाहरणान्तरमाह - सग्धिरिति।

अत्रायं भावः - घस्ताम् इत्यत्र अदो घस्लादेशस्तु ''लुङ्सनोर्घस्लृ'' २-४-३७ इत्यनेनापि सिद्ध इति अनन्यथासिद्धमुदाहरणान्तरमाह - सग्धिरिति। परमिदं कथनं नोचितं प्रतीयते। यतो लुङ्सनोरित्यनेन घस्लादेशस्तु नित्य इत्येवं सति आत्तोमद्य मध्यतो मेद उद्भृतम् (वा०स० सं० २१-४३) इति मन्त्रे ''आत्ताम्'' इत्यत्र घस्लादेशापत्तिः स्यात्। कृते चास्मिन् योगे बहुलशब्दस्य विभाषार्थकत्वेन नोक्तदोषः। अथ च क्वचिदन्यदेवेत्यर्थमादाय ''घस्ताम्'' इतयत्र घसिभसोर्हलि ६-४-१०० इत्यनेनोपधालोपाभावोऽपि सिध्यति। अत एव प्रकृतसूत्रे बहुलग्रहणस्य स्थाने अन्यतरस्यां ग्रहणमपि नोचितमिति भावः।

---

''अदः'' पद एवं ''लुङ्सनोर्घस्लृ'' २-४-३७ सूत्र से ''घस्लृ'' पद की अनुवृत्ति हुई अतः छन्द में अद् के स्थान में बहुल करके घस्लृ आदेश होता है। यह सूत्रार्थ हुआ। प्रयोग की साधुत्व प्रक्रिया का अवगम तो संस्कृत माध्यम से ही होगा, जो तीर्था में लिख दिया गया है।

**हेमन्तशिशिरावहोरात्रे च छन्दसि २-४-२८।** द्वन्द्वः पूर्ववल्लिङ्गः। हेमन्तश्च शिशिरश्च हेमन्तशिशिरौ। अहोरात्रे।

---

**शाङ्करी**– हेमन्तश्च शिशिरश्चेति विग्रहे इतरेतरयोग द्वन्द्वे परवल्लिङ्ग द्वन्द्वतत्पुरुषयोः २-४-२६ इत्यनेन परवल्लिङ्गतायां "हेमन्तशिशिरे" इति प्राप्तमनेन छन्दसि पूर्ववल्लिङ्गता विधीयते। अत आह हेमन्तेति। द्वन्द्वः इतरेतरयोग इत्यर्थः। पूर्ववदिति। "पूर्ववदश्ववऽवौ" २-४-२७ इत्यतः पूर्ववत्पदानुवृत्तेरित्यर्थः। अत्र सूत्रे द्विवचनम-विवक्षितम्। "अहोरात्राणि" विद्धत् इत्यत्र बहुवचनेऽपि पूर्ववल्लिङ्गतादर्शनात्।

---

**तीर्था**– हेमन्तशिशिरौ – हेमन्तश्च शिशिरश्चेति विग्रह इतरेतर योगद्वन्द्वे "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्यनेन परवल्लिङ्गे हेमन्तशिशिर इति प्राप्ते, हेमन्तशब्दः पुंल्लिङ्गः, अतस्तदनुरोधेन "हेमन्तशिशिरावहोरात्रे०" इति सूत्रेण छन्दसि पूर्ववल्लिङ्गतायां हेमन्तशिशिरौ इति साधु।

अहोरात्रे। अहश्च रात्रिश्चेति विग्रहे इतरेतरयोगद्वन्द्वे अहन्शब्दनकारस्य "रोऽसुपि"८-२-६९ इत्यनेन रुत्वे उत्वे गुणे च रात्रिशब्दाच्च "अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः" ८-४-८७ इत्यनेन समासान्तेऽच् प्रत्यये, "यस्येति च" ६-४-१४८ इत्यनेनेकारलोपे रात्राह्नाहाः पुंसि २-४-२९ इत्यनेन पुंस्त्वं प्राप्तं "हेमन्तशिशिरावहोरात्रे च छन्दसि" इति सूत्रेण पूर्वलिङ्गतायाम् अहः शब्दवत् क्लीबत्वं विधीयते।

---

**विमर्श**– हेमन्तशिशिरावृतूनां प्रीणामि। (तै०सं० १-६-२-३)

मन्त्रोऽयं कृष्णयजुर्वेदीय तैत्तिरीयसंहितायाः प्रथमकाण्डस्य षष्ठप्रपाठके द्वितीयानुक्रमणिकायां प्रयुक्तोऽस्ति। (अस्यामनुक्रमणिकायां हविर्ग्रहणस्यानुमन्त्रणं कृतोऽस्ति। अस्याः त्रिष्टुप्छन्दः प्रजापतिश्च ऋषिरस्ति।

अहोरोत्रे – इदं ब्रूमः। (अ०वे० ११८-५)

---

**भावार्थ**–लोक में इतरेतरद्वन्द्व एवं तत्पुरुषसमास में लिङ्गनिर्धारण के लिए एक "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" २-४-२६' उत्सर्गशास्त्र तथा "पूर्ववदश्ववडवौ"२-४-२७ यह अपवादशास्त्र प्रवृत्त है। छन्द में इनके विपरीत उदाहरण प्राप्त होते हैं। अतः उत्सर्गशास्त्र का अपवाद सूत्र है, "हेमन्तशिशिरावहोरात्रेश्च छन्दसि" २-४-२८। इस सूत्र में 'पूर्ववदश्ववडॅवौ' २-४-२६ से पूर्ववत् पद अनुवृत्त हुआ। अतः सूत्रार्थ हुआ – वेद में हेमन्तशिशिर, एवं अहोरात्र शब्द से इतरेतर द्वन्द्वसमास होने पर पूर्ववल्लिङ्ग होता है। इसलिए 'हेमन्तशिशिरौ' में हेमन्त शब्द पुंल्लिङ्ग है। उसके

**अदिप्रभृतिभ्य शपः। २-४-७२।**

बहुलं छन्दसि २-४-७३। वृत्रं हनति वृत्रहा (ऋ०वे० ८-८९-३) अहिः शयते उप पृक्पृथिव्याः। (ऋ०वे० १-३२-५) अत्र लुङ न। अदादिभिन्नेऽपि क्वचिल्लुक्। त्राध्वं नो देवाः। (ऋ०वे० २-२९-६)

---

**शाङ्करी**- लोके अदादिगणपठितधातुभ्यो विहितशपः अदिप्रभृतिभ्यः शपः २-४-७२ इत्यनेन लुकि अत्ति इत्यादीनि रूपाणि भवन्ति। वेदे क्वचिदादिगणपठितधातुभ्योऽपि शपोऽलुग्दर्शनाच्छन्दसि दृष्टानुविधिरिति नियमात् सूत्रं विहितं बहुलं छन्दसि। अत्र बहुलशब्दस्याप्रवृत्तिरूपार्थमादायोदाहरणमाह - वृत्रं हनति इति। लोके हिंसार्थकहन् धातोर्लटि तिपि शपो लुकि हन्तीति रूपम्। एवमेव अहिः शयते इत्यत्रापि। अदादिभिन्नेति - भ्वादावित्यर्थः। क्वचिदन्यदेवेत्यर्थ पक्षे त्राध्वं नो देवाः इति।

---

**तीर्था**- वृत्रं हनति वृत्रहा - अदादिगणपठितहिंसार्थकहन्धातोः लट्लकारे तस्य तिबादेशे मध्ये 'कर्तरि शप्' इत्यनेन शप्प्रत्यये, तस्य 'अदिप्रभृतिभ्यः शपः' इत्यनेन लुक्प्राप्ते तं प्रबाध्य 'बहुलं छन्दसि' इत्यनेन लुगभावे 'हनति' इति साधुः।

---

**विमर्श**- तथा च सम्पूर्णमन्त्रः -

अहोरात्रे इदं ब्रूमः सूर्याचन्द्रमसावुभौ।
विश्वोनादित्यान् ब्रूमस्ते नों मुञ्चन्त्वं हसः॥ ५॥

वृत्रं हनतीति सम्पूर्णो मन्त्रश्चेत्थम् -

प्र व इन्द्राय वृहते मरुतो ब्रह्मार्चत।

---

**भावार्थ**- अनुरोध से समस्त पद में पुंल्लिङ्ग हुआ। तथा 'अहोरात्रे' समुदाय में अहश्च रात्रिश्च इस विग्रह में 'अहन् सु रात्रि सु' इस स्थिति में द्वन्द्वसमास होने पर अहन् शब्द के नकार को 'रोऽसुपि' ८-२-६९ सूत्र से रुत्व, उत्व गुण हुये। रात्रिशब्द से 'अहः सर्वैकदेशसंख्यात००' ८-४-८७ से अच्प्रत्यय एवं ''यस्येति च'' ६-४-१४८ सूत्र से इकार का लोप हुआ। यहां अहोरात्र शब्द से 'रात्राह्नाहाः पुंसि' २-४-२९ सूत्र से पुल्लिंग प्राप्त था। उसको बाधकर वेद में अहन् शब्द के लिङ्ग का अनुसरण करते हुए नपुंसकलिङ्ग होने पर द्विवचन में अहोरात्रे पद निष्पन्न हुआ। पूर्ववदश्ववडवौ सूत्र की तरह इस सूत्र में भी द्विवचन अविवक्षित है। अतः बहुवचन में 'अहोरात्राणि विदधत्' इत्यादि स्थलों में भी समुदाय से पूर्ववत् नपुंसकलिङ्ग ही हुआ।

**तीर्था-** अहिः शयते - अदादिगणपठितशयनार्थकशीङ् धातोः लट् लकारे तस्य आत्मनेपदे तादेशे मध्ये "कर्तरि शप्" इत्यनेन शप् प्रत्ययेऽनुबन्धलोपे तस्य "अदिप्रभृतिभ्यः शपः" इत्यनेन लुक्प्राप्ते "बहुलं छन्दसि" इत्यनेन लुगभावे धातोरीकारस्य "शीङ् सार्वधातुके गुणः" इत्यनेन गुणेऽयादेश "टित आत्मनेपदानां टेरे" इत्यनेनैत्वे शयते इति साधुः।

त्राध्वं नो देवाः - भ्वादिगणपठितपालनार्थकत्रैङ्धातोः लोट्लकारे तस्य स्थाने मध्यमपुरुषं बहुवचने ध्वमादेशे तस्य "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायां मध्ये "कर्तरि शप्" इत्यनेन शपि तस्य "बहुलग्रहणस्य क्वचिदन्यदेवेत्यर्थमादाय त्रैङ् धातोरदादिगणपठित्वाभावेऽपि "बहुलं छन्दसि" इत्यनेन लुकि धातोरेकारस्य "आदेच उपदेशेऽशिति" इत्यनेनात्वे प्रत्ययस्य टेरेत्वे "सवाभ्यां वामौ" इत्यनेन एकारस्य अमादेशे 'त्राध्वम्' इति साधु।

---

**विमर्श-** वृत्रं हंनति वृत्रहा शतक्रंतुर्वज्रेण शतपर्वणा। (ऋ०वे० ८-८९-३)

मन्त्रार्थः - हे मरुतों! इन्द्र महान् हैं। उनके लिये स्तोत्र का उच्चारण करो। वृत्रघ्न और शतक्रतु इन्द्र ने सौ सन्धियों वाले वज्र से वृत्र का वध किया था।

अहिः शयते -

अहंन् वृत्रं वृंत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेनं।
स्कन्धासीव कुलिंशेना विवृक्णाहिंः शयते उपपृक पृथिव्याः॥

(ऋ०वे० १-३२-५) पृ० १६७ हिन्दी पृ० २७८

अर्थ - संसार में आवरण या अन्धकार करने वाले वृत्र को महाध्वंसकारी वज्रद्वारा छिन्नबाहु करके विनष्ट किया था। कुठार से काटे हुए वृक्ष स्कन्ध (शाखा) की तरह या सर्प की भांति पृथिवी पर पड़ा हुआ है।

त्राध्वं नो देवाः -

अर्वाञ्चों अद्या भंवता यजत्रा आ वो हार्दि भयंमानो व्ययेयम्।
त्राध्वं नो देवा निजुरो वृकंस्य त्राध्वं कर्तादंवपदों यजत्राः॥

(ऋ० २-२९-६) पृ० ८८, हिन्दी पृ० ५९३

अर्थ - हे पूजनीय देवों आज हमारे सामने आओ। मैं डर कर तुम्हारे हृदयावस्थित आश्रय को प्राप्त करूँ। देवों वृक् के हाथ से मारे जाने से हमें बजाओ। पूजनीयों, जो हमें आपद में फेंक देता है उसके हाथ से हमें वचाओ।

## जुहोत्यादिभ्यः श्लुः २-४-७५

बहुलं छन्दसि २-४-७६। दाति प्रियाणी चिद्वसु। अन्यत्रापि पूर्णां विवष्टि।

**शाङ्करी**- लोके जुहोत्यादिभ्यः श्लुः १-४-७५ इत्यनेन जुहोत्यादिगणपठितधातुभ्यो विहितशपः श्लौ-लुकि, श्लौ ६-१-१० इत्यनेन धातोर्द्वित्वादिकार्ये सति जुहोतीत्यादीनि रूपाणि सिध्यन्ति। वेदे तु बहुलं छन्दसि २-४-७६ इत्यत्र बहुलस्याप्रवृत्तिरूपार्थमादाय जुहोत्यादिभ्योऽपि शपः श्लुर्नभवति। तेन दाति इत्यत्र द्वित्वं न। अन्यत्रापि - क्वचिदन्यदेवार्थपक्षे जुहोत्यादिभिन्नधातुभ्योऽपि शपः श्लुर्भवति। तेन अदादिगणपठितवश् धातोः द्वित्वे सति विवष्टि इति रूपम्।

**तीर्था**- दाति इति - जुहोत्यादिगणपठितदाधातोर्लटलकारेऽनुबन्धलोपे तिबादेशे मध्ये शपि तस्य "जुहोत्यादिभ्यः श्लुः" इत्यनेन श्लौ (लोपे) "श्लौ" इति सूत्रेण धातोर्द्वित्वे च प्राप्ते "बहुलं छन्दसि" इति प्रकृतसूत्रेण (सूत्रस्थबहुलग्रहणस्य क्वचिदप्रवृत्तिरूपमर्थमादाय) तस्य निषेधेन द्वित्वाभावे 'दाति' इति रूपं साधु।

**विमर्श**- दातिं प्रि॒याणिं चि॒द्वसुं। अत्र सम्पूर्णमन्त्रश्चेत्थम्- स वेंद दे॒व आ॒नमं दे॒वाँ ऋ॑ताय॒ते दमें। दातिं प्रि॒याणिं चि॒द्वसुं। (ऋ०वे० ४-८-३) पृ० ३७६ हिन्दी पृ० ४१५।

वे (अग्नि) द्युतिमान हैं। इन्द्रादि देवताओं को यजामानों द्वारा क्रमपूर्वक नमस्कार करना जानते हैं। वे यज्ञ ग्रह में यज्ञाभिलाषी यजमान को अभीष्ट दान करते हैं।

स वेद देव आनमं देवाँ ऋतायतेदमे। दाति प्रियाणि चिद्वमु।

अर्थ- हे द्युतिमान् अग्नि। इन्द्रादि देवताओं को यजमानों द्वारा क्रमपूर्वक नमस्कार करना जानते हैं। वे यज्ञगृह में यज्ञाभिलाषी यजमान को अभिष्टदान करते हैं।

**भावार्थ**-हे मरुत्? संक्षिप्त स्तुति करने वाले? वः आपलोग वृहते बहुत बडी स्तुतिवाले ब्रह्म - सामनामक स्तोत्र को इन्द्र को प्रसन्न करनेके लिए प्रार्चत गाये। इससे प्रसन्न वृत्रहा - पाप के निहन्ता शतक्रतुः - सौ यज्ञ करने वाले अथवा बहुत प्रकार की प्रज्ञा वाले इन्द्र, शतपर्वणा सौधारवाले वज्र से अथवा शतपर्व नामक वज्र से वृत्रम् - अपामावरकम् - मेघ को ढकने वाले वृत्र नामक असुर को हनति - हने वध करें यहा लेडर्थ में लट् मानना चाहिये।

**तीर्था-** विवष्टि – "जुहोत्यादिभ्यः श्लुः" इति सूत्रस्य वेदेऽपवादभूत "बहुलं छन्दसि" इति सुत्रस्थबहुलशब्दस्य क्वचिदन्यदेवेत्यर्थमादाय अदादिगणपठितकान्त्यर्थकवश्धातोर्लटि परस्मैपदे तिबादेशे मध्ये शपि तस्य "जुहोत्यादिभ्यः श्लुः" इत्यनेन श्लौ (लोपे) धातोः "श्लौ" इत्यनेन द्वित्वे अभ्यासादिकार्ये "भृञामित्" इति सूत्रस्थ "बहुलं छन्दसि" इति सूत्रस्थ बहुलशब्दस्य क्वचिदन्यदेवेत्यर्थमादाय वश्धातोरप्यभ्यासस्येत्वे षत्वे, ष्टुत्वे च सति 'विवष्टि' इति रूपं साधु।

---

**विमर्श-** पूर्णां विवष्टि। पूर्णो मन्त्रः –

द्रेवो वौ द्रविणोदाः पूर्णां विवष्ट्यासि चं।
उद्वा सिञ्चध्वमुपं वा पृणध्वमादि द्वौ देव ओंहते॥

(ऋ०वे० म०सू० ७-१६-११)

धनदाता अग्निदेव तुम्हारे हविः पूर्ण स्रुक् एवं चभस की इच्छा करते हैं। सोम द्वारा तुम पात्र सिद्ध करो – सोमदान करो। अनन्ता अग्निदेव तुम्हें वहन करते हैं।

---

**भावार्थ**–यह मन्त्र यज्ञमण्डप में प्रज्वलित अग्नि की स्तुति के प्रसङ्ग में आया है। दमे – यज्ञ गृह में देवः द्योतमानः सः अग्नि (यजमानादि के द्वारा) देवान् = इन्द्रादिदेवताओं को आनमम् – नमस्कार करने के लिए वेद – क्रमशः जानता है। तथा ऋतं – यज्ञ करने की अयते – इच्छा करने वाले यजमान को प्रियाणि चिद्वसु – प्रिय अभीष्ट धन, पश्वादि दाति – ददाति – देता है।

द्रविणं धनं ददतीति द्रविणो दा देवः – धन को देने वाले अग्निदेव (वः) आप लोगों की स्त्रुवा को यज्ञीय हवनीय वस्तुओं से (पूर्णां आसिचं विवष्टि) पूर्ण रूप से आसिक्त देखने की इच्छा करते हैं। इसलिए आप लोग पात्र को सोमरस से भिगो दीजिए। (वा समुच्चयार्थक है) तथा पूर्णरूप से भर दीजिये। आदिद – इसके बाद ही अग्निदेव आप लोगों को (ओहते) प्रसन्न होकर स्वीकार करेंगे। अर्थात् अभीष्ट वस्तु को दे सकेंगे।

धनदाता अग्निदेव तुम्हारे हविः पूर्ण स्रुक् एवं चमस की इच्छा करते हैं। सोम द्वारा तुम पात्र सिद्ध करो – सोमदान करो। अनन्ता अग्निदेव तुम्हें वहन करते हैं।

मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः। २-४-८०॥ एभ्यो लेर्लुक् स्यान्मन्त्रे। अक्षन्नमीमदन्त हि। (ऋ०वे० १-८२-२) घस्लादेशस्य "गमहन" ६-४-९८ इत्युपधालोपे "शासिवसिघसीनां च" ८-३-६० इति षः।

---

**शाङ्करी**- मन्त्रेति – अत्र सूत्रे लेरित्यनेन च्लेरेव ग्रहणमिष्यते। न तु लिङ्गादेः वातिस्थेति २-४-७७ पूर्वसूत्रात् सिच इत्यनुवर्त्य तत्स्थानिनो लेर्ग्रहणात्। नन्वत्र सूत्रे गातिस्थेति पूर्वं सूत्रात् सिच इति पदमनुवर्त्य तस्यैवानेन लुग्विधीयतां किमर्थं लेरिति ग्रहणमिति चेत् सिच्प्रयुक्त आदिः सिचोऽन्यतरस्याम् ६-१-१८७ इति सूत्र विहितसिचप्रयुक्ता-द्युदात्तनिवृत्त्यर्थम्, 'आमः २-४-८१ इत्युत्तरसूत्रेऽनुवृत्त्यर्थमिति ज्ञेयम्। एभ्य इति। मन्त्र विषये घस्, ह्वरः, णश, वृ, दह, आत्, वृच्, कृ, गमि, जनिभ्य उत्तरस्य लेर्लुगित्यर्थः।

---

**तीर्था**- अक्षन्तमीमदन्त हि। भक्षणार्थकाद्धातोर्लुङि अडागमः लुङः झ्यादेशः "लुङ्सनोर्घस्लृ" २-४-३७ इत्यनेन धातोर्घस्लादेशः "च्लिलुङि" ३-१-४३ इत्यनेन च्लिप्रत्यये तस्य प्रकृत सूत्रेण लुक् "झोऽन्तः" ७-१-३ इत्यनेन झस्यान्तादेशः इकारस्य "इतश्च" ३-४-१०० इत्यनेन लोपः तकारस्य "संयोगान्तस्य लोपः" ८-२-२३ इत्यनेन लोपे अघस् अन् इति स्थितौ "गमहनजनखनघसां लोपः क्ङित्यनङि" ६-४-१८ इत्यनेनोपधा अकारस्य लोपः "शासिवसिघसीनां च" ८-३-६० इत्यनेन सकारस्य षत्वं 'अघ्ष् अन्' इति स्थिते घकारस्य जश्त्वेन गकारः, तस्य चर्त्वेन ककारः, 'अक्ष् अन्' इति जाते ककारषकारयोः क्षकारे 'अक्षन्' इति।

---

**विमर्श**- सम्पूर्णो मन्त्रः –

अक्षन्नमीमदन्त ह्यवे प्रिया अधूषत अस्तोष स्वभानवो विप्रानविष्ठया मती। योजान्विद्र ते हरी॥

मन्त्रार्थ – हे इन्द्र तुम्हारा दिया हुआ भोजन करके यजमान लोग यदि तृप्त हुए हैं, एवं अतिशय रसास्वादन से अपना प्रिय शरीर कम्पित किया है। दीप्तिमान मेधावियों ने अभिनव स्तुति द्वारा तुम्हारी स्तुति की है। हे इन्द्र अयने दोनों अश्व शीघ्र योजित करो।

---

**भावार्थ**-यह मन्त्र तैत्तिरीय संहिता के काण्ड १ प्रपाठक ८ अनुक्रमणिका ५ का (३) तीसरा मन्त्र है। यहाँ ८ अष्टम प्रपाठक में राजसूय यज्ञ का निरूपण किया गया है। इसके अन्तर्गत महापितृयज्ञ पङ्क्ति व गायत्री छन्द तथा विश्वेदेवा ऋषि है।

मा ह्व र्मित्रस्य।

धूर्तिः प्रणङ्मर्त्यस्य (ऋ०वे० १-१८-३)। नशे र्वा ८-२-६३ इति कुत्वम्।

---

शाङ्करी- मा ह्वार इति। भ्वादिगणपठितकौटिल्यार्थकह्वृ धातोर्णिचि ऋकारस्य "अचोञ्णिति" ७-२-११५ इत्यनेन वृद्धौ ह्वारि इत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां ततो लुङ्लकारे तस्यान्तरङ्गत्वात्पूर्वं तिबादेशे मध्ये "च्लि लुङि" ३-१-४३ इत्यनेन च्लिविकरणे 'विकरणविशिष्टस्याङ्गस्य "लुङ्लङ्००" ६-४-७१ इत्यादिनाऽडागमे प्राप्ते "न माङ्योगे" ६-४-७४ इत्यनेन निषेधे "इतश्च" ३-४-१०० इत्यनेनेकारलोपे "ह्वारि च्लि त्" इति स्थितौ परत्वादन्तरङ्गत्वाच्च पूर्वं "णेरनिटि" ६-४-५१ इत्यनेन णेर्लोपः "मन्त्रे घस:००" २-४-८० इत्यादिना च्ले र्लोपस्तकारस्य "हलङ्याब्भ्यो०" ६-१-६८ इत्यादिना लोपे 'ह्वार' इति।

प्रणङ् मर्त्यस्येति। प्रपूर्वकाद् दिवादिगणपठितादर्शनार्थकात् णश्धातोर्लुङ्, तस्य तिबादेशेऽडागमे प्राप्ते बहुलं छन्दस्ययाङ्योगेऽपि ६-४-७५ इत्यनेन शाङ्करी-

---

तीर्था तु शाङ्करी व्याख्यैवावगन्तव्या।

---

विमर्श- गुणरपरत्वाभ्यां ह्वर् इति साधनन्तु काशिकाव्याख्याकर्तुर्न्यासकृतः, सिद्धान्तकौमुदीकर्तुर्दीक्षितस्य सुबोधिनीव्याख्याकर्तुश्च प्रमाद एव, तैत्तिरीयसंहितायां दीर्घाकारविशिष्टह्वार इति पाठस्यैव सत्वात्। तथा हि - तत्रत्यः सम्पूर्णो मन्त्रः -

कर्मणे वां देवेभ्यः शकेयं वेषाय त्वाप्रत्युष्टꣳरक्षः प्रत्युष्टा अरातयो धूरसि धूर्व धूर्वन्तं धूर्वतं योऽस्यान् धूर्वति तं धूर्व वयं धूर्वाम स्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवदूतममह्वतमसि हविर्धानं दृꣳहस्व मा ह्वा र्मित्रस्य त्वा चक्षुषा प्रेक्षे मा मे र्मा संविक्था मा त्वा (तै०सं०का १ प्रपा० १ अनु० ४-१)

सायणभाष्ये तु प्रणङ्शब्दस्य निष्पत्तिमित्थं चकार। रुधादिगणपठितसंपर्करूपार्थकात् पृचीधातोर्लङ्लकारस्य प्रथमपुरुषैकवचने तिप्प्रत्यये इतश्चेत्यनेनेकारलोपे तकारस्य हलङ्यादिना लोपे चकारस्य कुत्वं, रुधादिभ्यः श्नम्

---

भावार्थ-इस अठारवें सूक्त में कुल नो (९) ऋचायें है इन सभी में ब्रह्मणस्पति नामक देव की स्तुति की गयी है। ऋषि ब्रह्मणस्पति नामक देव से प्रार्थना कर रहे है। हे ब्रह्मणस्पति (नः अस्मान्) हम लोगों को (प्रणक्) ऐसी शक्तिसम्पन्न वागविशेष दो कि (अशरुषो मर्त्यस्य) हमारे समीप में उपद्रव करने वाले शत्रुरुप

सुरुचो वेन आवः। (वा०सं० १३-३) (प्रयोग अन्वेष्टव्य)
मा न आधक्। (ऋ०वे० ६-६१-१४)

---

**शाङ्करी**- माङ्योगाभावेऽपि अडागमनिषेधः, इतश्च ३-४-१०० इत्यनेनेकारलोपे, तकारस्य हलङ्याब्भ्यो० ६-१-६८ इत्यादिना लोपः, शकारस्य नशेर्वा ८-२-६३ इत्यनेन कुत्वेन खकारः, झलां जशोऽन्ते ८-२-३९ इत्यनेन जश्त्वे, चर्त्वे, तस्य यरोऽनुनासिके० ८-४-४५ इत्यनेनानुनासिके प्रणङ्मर्त्यस्य इति साधुः।

"आवः" इति। वृ इतयनेन वृङ् क्रयादि वृञो (स्वर्गाद् सामान्येन) ग्रहणमिति काशिका।

मा न आधक् इति। भ्वादिगणपठितभस्मीकरणार्थकाद् दहधातोर्लुङ्लकारे तस्यान्तरङ्गत्वात्पूर्वं सिबादेशे नित्यत्वान्मध्ये च्लिविकरणे तस्य मन्त्रे घसह्वरणश०० २-४-८० इति प्रकृतसूत्रेण लुकि ततो व्यवहिताश्च १-४-८२ छन्दस्यापि दृश्यते

---

**तीर्था**- स्वादिगणपठित वरणार्थकाद् वृञ् धातोर्लुङ्, तस्य मध्यपुरुषैकवचने सिबादेशे मध्ये च्लौ तस्य प्रकृतः सूत्रेण लुक् ऋकारस्य गुणे रपरत्वे सिपः इकारस्य इतश्च इत्यनेन लोपे छन्दस्यापि दृश्यते ६-४-७३ इत्यनेनान जादि धातोरप्याडागमे आवर्स् इति स्थितौ सकारस्य हल्ङ्याब्भ्यो० ६-१-६८ इत्यनेन लोपे रेफस्य विसर्गे आवः इति।

---

**विमर्श**- इत्यनेन श्नमि तस्य व्यत्ययो बहुलम् ३-१-८५ इति सूत्रस्यनुसृत्याडागमे यणादेशः। परमत्र सायणे भ्रान्तः - लङ्लकारे च्लेरभावेन प्रकृतसूत्रोदाहरणाभावात् च महर्षिपाणिनिविरोधात्।

सम्पूर्णो मन्त्रश्चेत्थम् -
मा नः शंसो अरुषो धुर्तिः प्रणङ् मर्त्यस्य।
रक्षाणो ब्रह्मणस्पते। (ऋ०वे०म० १ सू० १८-३)

---

**भावार्थ**- मनुष्य (मा प्रणक्) हमारे संपर्क में न आ सकें। (धुर्तिः शंसः) उनका प्रतिकार करने वाला हमें बनावें तथा (नो रक्षा) हमारी रक्षा करो।

हे सरस्वति नः=हम लोगों को, वस्यः=वसु पर्याप्त धन, नेषि=प्राप्त कराओ। स्फरी=वृद्धि, मा अप-धन की वृद्धि न रुके। पयसा नः=अधिक जल प्लावन से हम लोगों को मा आधक्=पीड़ित मत करो और नः सख्या=हम लोगों की मित्रता को, वेश्या=विशप्रवेसने जुषस्व=प्राप्त कर प्रसन्न होवें और त्वत्क्षेत्राणि=तुम्हारे क्षेत्र, अरणानि मा गन्म=अरमणीय न हो जायें। अर्थात् तुम इस क्षेत्र का परित्याग कभी मत करो।

आदित्याकारान्तग्रहणम्। आ प्रा द्यावापृथिवी।

(ऋ०वे०१-११५-१)

**शाङ्करी** - ६-४-७३ बहुलं छन्दस्यमाङ्योगेऽपि ६-४-७५ इति सूत्रत्रयनिर्देशान् नकारव्यवहितादपि आङुपसर्गपूर्वकात् अनजादिधातोरपि, माङ्योगेऽप्याडागमे सिप्, इपावितौ सकारस्य हल्ङ्याब्भ्यो० ६-१-६८ इत्यादिना लुक्, दादेर्धातोर्घः ८-२-३२ इत्यनेन हकारस्य धकारादेशे दकारस्य एकाचो बशो० ८-२-३७ इत्यादिना धादेशे घकारस्य जश्त्वेन गकारे चर्त्वेन ककारः।

आ प्रा इति आङुपसर्गपूर्वकाद् अदादिगण पठितपूर्णार्थक प्राधातोः लुँङि तस्य सिबादेशे मध्ये च्लि विकरणे तस्य प्रकृतसूत्रेणायहारे सियः पकारस्य हलन्त्यम् इत्यनेन इकारस्य च इतश्च इत्यनेन लुक्यपृक्तसकारस्य द्यावा शब्द परे रुत्वयत्वयलोपैरपहारः।

**विमर्श**- सम्पूर्णो मन्त्रश्चेत्थम् -

सरस्वत्यभि नो नेषि वस्यो मापस्फरी पयसा मा न आधक्।
जुषस्व नः सख्या वश्या च मा त्वत्क्षेत्राण्यरणानिगन्म॥१४॥

(ऋ०वे०म० ६ सू० ६, १-१४)

न्यासकारस्तु प्रापूरणे इत्यस्मात् तिप् इति लिलेख। तत्तु न युक्तिसहः अपृक्तकारस्य केनापि विधिना लोपाभावे "आप्रात्" इत्यनिष्ट रुपायन्तेः।

**भावार्थ**-दीव्यन्तीति देवाः तेषां देवानाम् - प्रकाशित होने वाली सूर्यरश्मियों का, चित्रम् अनीकम् - आश्चर्य करने वाला तेजः समूहरुपसूर्यमण्डल, उद्गात् उदयाचल को प्राप्त हुआ है। वह तेजः समूह कैसा है? मित्रस्य वरुणस्य अग्नेश्चचक्षुः- सूर्य वरुण एवं अग्नि से उपलक्षित समस्त जगत् का प्रकाशक है। वह तेज उदित होकर अपने प्रकाश से द्यावापृथिवी अन्तरिक्ष-स्वर्ग पृथिवी एवं आकाश को, आप्रा चारों तरफ से ढक लिया या आच्छादित कर लिया है। इस प्रकार का तेजस्वी प्रकाशस्वरूप सूर्य, जगतः तस्थुषश्च - जङ्गमात्मक एवं स्थावरात्मक कार्य रुप समस्त संसार का अन्तर्यामी के रुप में प्रकाशस्वरूप आत्मा है। अर्थात् 'यतो वा इमानि भूतानि जायन्ते' इत्यादि ब्रह्मसूत्रों के अनुसार परमप्रकाशस्वरूप परमात्मा का अंश सूर्य 'सर्वस्य चाहं हृदि सन्निविष्टः' इत्यादि भगवद् वचनों के अनुसार सभी के आत्मा में प्रविष्ट होकर अपने उदय के द्वारा सभी को अपने अपने कर्त्तव्य कर्म को करने की प्रेरणा दे रहा है। क्योंकि सूर्य उदित होने के साथ समस्त जगत अपने अपने कार्य में प्रवृत्त हो जाता है।

परावग्भारभृद्यथा। (ऋ०वे० म० ८-७५-१२)

अक्रन्नुषासः (ऋ० १-९२-२ पृ० ४१०।

---

**शाङ्करी**- परावर्ग् इति। परोपसर्गपूर्वकात् अदादिगणपठितवर्जनार्थक वृजधातोर्लुङि तस्य तिबादेशे पकारेकारयोर्लोपे मध्येच्लौ तस्य प्रकृतसूत्रेण लुक् लुङ्लङ्लृङ्क्ष्वित्यादिना ६-४-७१ प्राप्ताडागमस्य बहुलं छन्दस्यमाङ् योगेऽपि ६-४-७ इत्यनेन निषेधः ऋकारस्य लघुपधगुणे रपरत्वे तकारस्य हलङ्याप्भ्यादिना लोपे परावर्ज् इत्यवस्थायां जकारस्य संयोगान्तलोपेप्राप्ते तस्य रात्सस्य ८-२-२४ इति नियमसूत्रान्निषेधे जकारस्य चोः कु ८-२-३० इत्यनेन कुत्वेन गकारः परावर्ग इति साधुः।

अक्रन्निति। कृ धातोर्लुङ् तस्य झ्यादेशे मध्ये च्लि तस्य प्रकृतसूत्रेण लुक् अङ्गस्याडागमः अकृ अन्तिं इति स्थिते इतश्च इत्यनेनेकारलोपे तकारस्य संयोगान्तलोपः झेरपित्वेन ङित्वाद् ऋकारस्य गुणाभावे यण्।

---

**विमर्श**- सम्पूर्ण मन्त्रश्चेत्थम् -

चित्रं देवानामुद्गादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आ प्रा द्यावापृथिवी अन्तरीक्षं सूर्य आत्मा जगतस्थुषश्च॥

(ऋ०वे० १-११५-१)

सम्पूर्णो मन्त्रश्चेत्थम् -

मा नों अस्मिन्महाधने परावर्ग्भारभृद्यथा। संवर्ग् संरयिं जंय॥

(ऋ०वे० म० ८ अष्ट ६ अनु० ६ सू० ७५-९२)

---

**भावार्थ**-यह ऋग्वेद के प्रथम मण्डल के बानवें (९२) सूक्त की दूसरी ऋचा है। इस ऋचा में जगती छन्द है।

इस सूक्त में कुल १८ ऋचायें हैं, इस ऋचा का गौतम ऋषि एवं जगती छन्द तथा उषा देवता हैं।

इस ऋचा में उषाकाल से सम्बन्धी प्रातःकाल के सूर्य की रश्मियों के सौन्दर्य एवं भूमण्डल पर पड़ने वाले प्रभाव का वर्णन किया गया है। उषा काल की रक्तवर्ण सूर्य की किरणें स्वयं अनायास ही प्रकाशित हो गयी। तथा शुभ्रवर्ण की इन किरणों को सूर्य सरलता से अपने रथ में जोड़ लिये। तथा इन किरणों से जुते हुये रथ पर सवार होकर उषा देवता पूर्व दिन के समान ही सभी प्राणियों के ज्ञान को प्रकाशित कर दिया। उसके अनन्तर ये किरणें शुभ्रवर्ण के सूर्य के साथ संयुक्त हो गयीं।

रक्त वर्ण की किरणें सूर्य के रथ के साथ अनायास ही जुड़ गयीं।

त्वे र॒यिं जा॑गृ॒वांसो॒ अनु॑ग्मन्। (ऋ०वे० ६-१-३)
(म०४-१३-६२)

मन्त्र ग्रहणं ब्राह्मणस्याप्युपलक्षणम्। अज्ञत वा अस्य दन्ताः (ऐ०ब्रा० ७-१४-२) पृ० ११४८। विभाषाऽनुवृत्तेर्नेह। न ता अगृम्भणन्नजनिष्ट हिषः।

---

**शाङ्करी**- अनुगमन् - अनूपसर्गाद् गमेर्लुङ्लकारः, तस्य झ्यादेशस्तस्यान्तादेशो मध्ये च्लिः तस्य लुक् अङ्गस्याडागमे प्राप्ते तस्य बहुलं छन्दस्यमाङ्योगेऽपि ६-४-७५ इत्यनेन निषेधः, गमहनजन० ६-४-९८ इत्यादिना धातोरुपधालोपः इतश्चेत्यादिना इकारलोपस्ताकरस्य च संयोगान्तलोपः।

---

**विमर्श**- अक्रन्निति। तैतरीयसंहितायान्तु अक्रन् कर्म कर्मकृतः (१-८-३-३) इति पाठो दृश्यते। इदमेवोदाहरणं काशिकायामस्ति। सिद्धान्तकौमुद्युक्तपाठस्तु मन्ये कुत्रचिदन्यत्रास्ति।

सम्पूर्णमन्त्रश्चेत्थम् -
अक्र॒न् कर्म क॒र्मकृतः स॒ह वा॒चा मयो भुवा।
दे॒वेभ्य॒ः कर्म कृत्वाऽस्तं॒ प्रेतं सुदानवः॥ (तै०सं० १-८-३-३)
उदपप्तन्नरु॒णा भा॒नवो वृथा स्वा॒युजो अरु॑षीर्गा अयुक्षत।
अक्र॑न्नु॒षासो व॒युनानि पू॒र्वथा॒ रुश॑न्तं भा॒नुमरु॑षीराशिश्रयुः॥
(ऋ० १-९२-१ पृ० ४१०)

मन्त्रार्थ - अरुण भानु रश्मियां (उषायें) उदित हुई, अनन्तर रथ में जोतने योग्य शुभ्रवर्ण रश्मियों को उषाओं ने रथ में लगाया एवं पूर्व की तरह सारे प्राणियों को ज्ञान-युक्त बनाया। इसके पश्चात् दीप्तिमती उषाओं ने श्वेतवर्ण सूर्य को आश्रित किया।

अनुग्मन्निति सिद्धान्तकौमुद्युक्तमुदाहरणम्। काशिकायान्तु - सद्यः पुष्टिं निरुन्धानासो अग्मन् इत्युदाहृतम्। (ऋ०वे० १-१३२-७) कृष्ण अकादम्या प्रकाशितऋग्वेदसंहितायान्तु १३२ सूक्ते षडेव मन्त्राः सन्तीति अग्मन् इत्युभेऽप्युदाहरणमन्वेषणीयम्।

वृ॒तेव॒ यन्तं बहु॒भिर्वस॒व्यै३स्त्वे र॒यिं जा॑गृ॒वांसो॒ अनु॑ग्मन्।
रुश॑न्तम॒ग्निं दर्श॒तं बृहन्तं व॒पावन्तं वि॒श्वहा दीदि॒वांसम्॥
(ऋ० वे० ६-१-३) पृ० ३३५

**विमर्श**- मन्त्रानुवादः - हे अग्नि! तुम दीप्तिमान, दर्शनीय महान् हव्यभोजी और सम्पूर्णकाल में दीप्तिमान हो। तुम वसुओं के मार्ग से अर्थात् अन्तरिक्ष से (में) गमन करते हो। धनाभिलाषी यजमान तुम्हारा अनुसरण करते हैं। (ऋ०वे० ६-१-३) पृ० ३०६

सूत्रे मन्त्रग्रहणं तु छन्दस उपलक्षणार्थमिति काशिका।

अत्र विशेषः - "मन्त्रब्राह्मणयोर्वेदनामधेयः" इति मतावलम्बिनो ब्राह्मणस्यापि वेदत्वमङ्गीचक्रुः। काशिकारस्त्वार्यसमाजेन प्रभावितः सन् मन्त्रपदेन केवलं वेदमेव ग्रह्णातीति धेयम्। अज्ञत वा अस्य दत्ताः (ऐ०ब्रा० ७-१४-२, पृष्ठ ११४८)

सम्पूर्णो मन्त्रः -

तस्य ह दत्ता जज्ञिरे, तं होवाचाज्ञत वा अस्य दन्ता यजस्व माऽनेनेति, स होवाच, यदा वै यशोर्दन्ताः पद्यन्तेऽथ स मेध्यो भवति, दन्तान्वस्य पद्यन्तामथ त्वा यजा इति, तथेति।

अर्थ - उसके दांत निकल आये। उन (हरिश्चन्द्र) से वरुण ने कहा अब इसके दांत निकल आये। अतः इससे मेरा यजन करो। उन हरिश्चन्द्र ने कहा, जब पशु के प्रथमोत्पन्न दाँत गिर जाते हैं तब वह यज्ञ के योग्य होता है। अतः इसके प्रथमोत्पन्न दाँत जब गिर जायेंगे तभी मैं यजन करूँगा। वरुण ने कहा वैसा ही हो।

॥ इति द्वितीयोऽध्यायः ॥

# ॥ तृतीयोऽध्यायः ॥

(वै०सि०कौ० मूल) अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयांक्रियाद् विदामक्रन्निति च्छन्दसि। (३-१-४२)

आद्येषु चतुर्षु लुङि आम् अक इत्यनुप्रयोगश्च। अभ्युत्सादयामकः। अभ्युदसीषददिति लोके। प्रजनयामकः। प्राजीनदित्यर्थः। चिकयामकः। अचैषीदित्यर्थे चिनोतेराम् द्विवचनं कुत्वं च। रमयामकः। अरीरमत्। पावयां क्रियात्। पाव्यदिति लोके। विदामक्रन्। अवेदिषुः।

---

**शाङ्करी** - अभ्युत्सादयाम................। अत्र सूत्रे विदाङ्कुर्वन्त्वित्यन्यतरस्यां सूत्रेणानेनान्यतरस्यामित्यस्यानुवृत्तः वृत्ते लोटि आमप्रत्ययो गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते। सूत्रे वचनपुरुषयोरविवक्षितत्वात् मध्यमपुरुषेऽपि विद्वाङ्कुरु, विदाङ्कुरुतात् इत्यादीनि रूपाणि निष्पद्यन्ते। अपि च विकल्पपक्षे 'विदन्तु' इत्यादीन्यपि भवन्ति। विदाङ्कुर्वन्त्वित्यन्यतरस्याम् (३-१-४१) इति सूत्राद'न्यतरस्याम्' इति पदमनुवर्तते। अतः, अभ्युत्सादयामक इत्यादीनि षड्रूपाणि छन्दोविषयेऽन्यतरस्यां निपात्यन्त इत्यर्थः सम्पद्यते।

---

**तीर्था** - १. अभ्युत्सादयामकः - अभि-उत् उपसर्गपूर्वकात् विशरण-गत्यवसादनार्थकात् भ्वादिगणपठितात् षद्लृधातोर्लृकारस्येत्संज्ञालोपाभ्यामपहारः, षकारस्य "धात्वादेः षः सः" इत्यनेन सत्वे च हेतुमत्यर्थे णिच्प्रत्ययः, धातोरुपधाऽकारस्य "अत उपधाया" इत्यनेन वृद्धौ ण्यन्तसादिधातोर्लुङ्लकारः, अभि उत् सादि लुङ् इति स्थितौ अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयां क्रियात् विदामक्रन्निति च्छन्दसि इति सूत्रेण लुङि परे आम् इत्यस्य (कृ धातोर्लुङ् लकारप्रथमपुरुषैकवचनान्तस्य अ कृ तिप् मध्ये च्लिः तस्य मन्त्रेघसह्वरे....त्यादिना लुक् ऋकारस्य गुणे पररत्वे तिपः हल्ङ्यादिना लोपे रेफस्य विसर्ग इति प्रक्रियया निष्पन्नस्य) अक इत्यस्य निपातनादनुप्रयोगे इकारस्य गुणेऽयादेशे अभि उत् सादय आम् अक् लुङ् इत्यवस्थायां पूर्वमुत् उपसर्गस्य 'सादयाम्' इति समुदायेन सह "कुगतिप्रादयः" इत्यनेन, सुबन्तस्याभ्युपसर्गस्य च उत्सादयाम् इति समुदायेन "सह सुपा" इत्यत्र सहेति योगविभागेन च समासे समासत्वात् प्रातिपदिकसंज्ञायां सौ तस्य हल्ङ्यादिना लोपे अभ्युत्सादयाम् इति प्रत्ययलक्षणेन

**शाङ्करी** – निपातनं हि – यत्रैकपदसिद्धावनेककार्यविधानार्थमेकसूत्रकर्तव्यता आपतेत्, तत्र नैकमुदाहरणं (ह्रस्वग्रहणं) (सामान्यशास्त्रीयोद्देश्यता-वच्छेदकतावाच्छिन्नं शास्त्रं) प्रयोजयति। इति नामिसूत्रस्थभाष्यस्वारस्यादेकेनैव सूत्रेणानेककार्याणि निपातनाद् विधीयन्ते लाघवात्।

आद्येषु – इति। अभ्युत्सादयामक-प्रजनयामक-चिकयामक-रमयामकेषु इत्यर्थः। अत्रायं विवेकः – अभ्युत्सादयामक इत्यत्र भ्वादिगणपठितविषरणगत्यव-सादनार्थकात् षद्लृधातोः, दिवादि गण पठित प्रादुर्भावार्थकान् जनीधातोः क्रीडार्थकरमुधातोश्च ण्यन्तेभ्य एभ्य लुङि परे आम्प्रत्ययो निपात्यते लिटिपरकत्वाभावेन 'कास्प्रत्ययादाममन्त्रे लिटि' इत्यनेनाप्राप्तत्वादिति भावः। चिकयामक इत्यत्र तु चयनार्थकात् चिञ्धातोराम् प्रत्ययो द्विर्वचनं कुत्वं च निपात्यते। चतुर्ष्वपि आमन्ताल्लुङो लुगपि निपात्यते। 'अक्' इति चतुर्भिरपि प्रत्येकमन्ते सम्बद्धयते। 'अक्' इत्यस्य निष्पत्तिरस्तु – कृ धातो र्लुङि अडागमः, तिप्प्रत्ययः, मध्ये च्लिः,

---

**तीर्था**- प्रथमान्तपदम्। लुङ्श्च अभ्युत्सादयामित्यादिसूत्रेण निपातनाल्लुकि अभ्युत्सादयामक इति साधु। अत्र सूत्रेऽन्यतरस्याम् इत्यस्यानुवर्तनात् छन्दसि अभ्युदसीषदत् इत्यस्यापि प्रयोगः।

**२. प्रजनयामकः** – प्रोपसर्गपूर्वकाद् दिवादिगणपठित प्रादुर्भावार्थकाज्जनीधातोर्हेतुमत्यर्थे णिच् प्रत्यये, धातुत्वाल्लुङ्लकारः, धातोरुपधाऽकारस्य "अत उपधाया" इत्यनेन प्राप्तवृद्धे "र्जनिवध्योश्च" इत्यनेन निषेधः, अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयां क्रियाद् विदामक्रन्निति्छन्दसि, इति सूत्रेण निपातनाल्लुङि परे आम्प्रत्ययस्य, कृ धातोर्लुङ्लकारप्रथमपुरुषैकवचनान्त अ कृ च्लि तिप् च्लेः मन्त्रे घसह्वरेत्यादिना लुकि ऋकारस्य गुणे रपरत्वे तिपो हल्ङ्यादिना लोपे रेफस्य विसर्ग इति प्रक्रियया निष्पन्नस्य अक इत्यस्य चानुप्रयोगः, इकारस्य गुणेऽयादेशे "कुगतिप्रादयः" इति सूत्रेण प्रोपसर्गस्य जनयाम् इत्यनेन सह समासे समासत्वात्प्रातिपदिकत्वात् सौ, तस्य हल्ङ्यादिना लोपे लुङ्श्च अभ्युत्सादयामित्यादिना लुकि 'प्रजनयामकः' इति साधु।

**३. चिकयामकः** – स्वादिगणपठितचयनार्थकाच् चिञ्धातोर्लुङ्लकारे "कास्प्रत्ययादाममन्त्रे लिटि" इत्यनेनाम् प्रत्ययानुप्रयोगस्याप्राप्तत्वात् अभ्युत्सादयां प्रजनयां चिकयां, रमयामकः पावयां क्रियाद् विदामक्रन्निति्छन्दसि इति सूत्रेण आम्प्रत्ययस्य, कृधातोर्लुङ्लकारप्रथमपुरुषैकवचनान्त अ कृ च्लि तिप् च्लेर्मन्त्रे

**शाङ्करी** – तस्य मन्त्रे घसह्वरेत्यादिना लुक् ऋकारस्य सार्वधातुकपरे गुणो रपरत्वं तिप इकारस्य 'इतश्च' इत्यनेन लोपः, तकारस्य "हल्ङ्याभ्यो०" इत्यादिना लोपः, रेफस्य विसर्गः। पावयां क्रियात् इति। भ्वादिगणपठितपवनार्थकात् पूङ्धातोः, क्रयादिगणपठितपवनार्थकात् पूञ् धातोर्वा ण्यन्तादाशीर्लिङ्यामप्रत्ययो निपात्यते। लिटिपरकत्वाभावेन कास्प्रत्ययादाममन्त्र लिटि इत्यनेनाप्राप्तत्वात्। एवमेव क्रियादित्याशीर्लिङ्न्तस्याप्यनुप्रयोगो निपात्यते। कृञ्चानुप्रयुज्यते लिटि इति सूत्रेण लिट्येव कृञोऽनुप्रयोगस्य विहितत्वात्। विदाम् इति। विद्धातोर्लुङि आम्प्रत्यय इकारस्य प्राप्तलघुपधगुणाभावो लुङो लुक् च निपात्यते। अक्रन्निति। कृधातो र्लुङि च्लिप्रत्ययः प्रथमपुरुषबहुवचने झेरन्तादेशः, 'इतश्चे'त्यनेनेकारलोपः, तकारस्य संयोगान्तलोपः, मन्त्रे घसह्वरे००त्यादिना च्लुर्लुक्धातोरडागमः यण् च।

---

**तीर्था**– घसह्वरेत्यादिना लुकि ऋकारस्य गुणे रपरत्वे, तिपो हल्ङ्यादिना लोपे रेफस्य विसर्ग इति प्रक्रियया निष्पन्नस्य अक इत्यस्य च निपातनादनुप्रयोगः, निपातनादेव धातोर्द्वित्वे कुत्वे, लुङः लुकि च चिकयामकः इति साधु।

**४. रमयामकः** – भ्वादिगणपठितक्रीडार्थकाद् हेतुमतिण्यन्तरामिधातो 'मितां ह्रस्वः' इत्यनेन ह्रस्वे, लुङि परे कास्प्रत्ययादाममन्त्रे लिटि इत्यनेनाम्प्रत्ययानुप्रयोगस्याप्राप्तत्वात् 'अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयां क्रियाद् विदामक्रन्नितिच्छन्दसि' इति सूत्रेण लुङि परे आम् प्रत्ययस्य, कृ धातोर्लुङलकारप्रथमपुरुषैकवचनान्त, अकृच्लि तिप्, च्लेः मन्त्रे घसह्वरेत्यादिना लुकि ऋकारस्य गुणे रपरत्वे तिपो हल्ङ्यादिना लोपे रेफस्य विसर्ग इति प्रक्रियया निष्पन्नस्य अक इत्यस्य च निपातनादनुप्रयोगः, इकारस्य गुणेऽयादेशे निपातनाल्लुङो लुकि च रमयामक इति साधु।

**५. पावयां क्रियात्** – भ्वादिगणपठितपवनार्थकात् पूङ्धातोः क्रयादिगणपठित पूञ् धातोर्वा हेतुमतिण्यन्ताल्लिङ्लकारे उकारस्य वृद्धावादेशे च "कास्प्रत्ययादाममन्त्रे लिटि" इत्यनेन लिङ्यामप्रत्ययानुप्रयोगस्याप्राप्तत्वात् "अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयां क्रियाद् विदामक्रन्नितिच्छन्दसि' इति सूत्रेण निपातनात् आम् प्रत्ययस्य, कृधातोराशिषि लिङः तिप् इतश्चेत्यनेनेकारलोपः, यासुडागमः, अनुबन्धलोपः, 'रिङ् शयग्लिङ्सु' इत्यनेन रिङादेशे, 'स्कोः संयोगाद्योरन्ते च' इत्यनेन सलोपे इति प्रक्रियया निष्पन्नस्य क्रियात् इत्यस्य चानुप्रयोगे इकारस्य गुणेऽयादेशे 'आमः' इति सूत्रेण लिङो लुकि च पावयां क्रियादिति साधु।

**शाङ्करी** – अत्रेदमपि बोध्यम् – आम्प्रत्ययस्य "कृदतिङ्" इति सूत्रेण कृत्संज्ञकत्वात् सर्वेषामामन्तानां कृदन्तत्वात् प्रातिपदिकसंज्ञायां सुविभक्तौ आमः पर अपृक्त सकारस्य हल्ङ्यादिना लोपेऽपि सकारस्य 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यनेन प्रथमान्तत्वमेव अतः सर्वत्र आमन्तप्रथमान्तेभ्य एव लुङि 'अकः' इत्यनुप्रयुज्यते। सुबोधिन्यां काशिकायां भावबोधिन्यां च 'अभ्युत्सादयामकः' इत्यत्र आम इति लुङो लुक् इति कथनं प्रामद[१] एव, आमः इत्यनेन लेर्लोपस्यैव विहितत्वात्।

---

**तीर्था** – ६. **विदामक्रन्** – अदादिगणपठितज्ञानार्थक विद्धातोर्लुङि परे 'कास्प्रत्ययादाममन्त्रे लिटि' इत्यनेनामप्रत्ययस्याप्राप्तत्वात् "अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयां क्रियाद् विदामक्रन्निति च्छन्दसि" इति सूत्रेण आम् प्रत्ययस्य, कृ धातो र्लुङि, अडागमः, च्लिः प्रथमपुरुषबहुवचने झेरन्तादेशः, 'इतश्चे'त्यनेनेकारलोपः, तकारस्य संयोगान्तलोपः, च्लेः मन्त्रे घसह्वरेत्यादिना लोपः, ऋकारस्य यण् इति प्रक्रियया निष्पन्नस्य अक्रन्नित्यस्य चानुप्रयोगः विदेः प्राप्तोपधागुणस्याभावे लुङो लुकि च निपातिते विदामक्रन् इति।

---

**भावार्थ** – "अभ्युत्सादयाम्....." (३-१-४२) सूत्र में 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' (३-१-४१) सूत्र से अन्यतरस्याम् पद की अनुवृत्ति हुई है। उस सूत्र का अर्थ है विद धातु से लोट् लकार पर में रहने पर पूर्व में आम् प्रत्यय, धातु को गुण का अभाव, लोट् का लुक्, एवं लोट् परककृञ् का अनुप्रयोग में सभी निपातनात् होते हैं। यहाँ पुरुष एवं वचन की अविवक्षा होने के कारण मध्यमपुरुष में भी विदाङ्कुरु विदां कुरुतात् इत्यादि रूप निपातनात् होते हैं। एवं विकल्प पक्ष में विदन्तु रूप भी निष्पन्न होते हैं।

इस सूत्र में अन्यतरस्याम् पद की अनुवृत्ति होने से अर्थ हुआ वेद में अभ्युत्सादयामकः इत्यादि छः रूप निपातनात् विकल्प से निष्पन्न होते हैं। इन में प्रारम्भ के तीन प्रयोगों अभ्युत्सादयामकः, जनयामकः, रमयामकः में क्रमधः अभि उत् उपसर्गपूर्वक भ्वादिगणपठित विशरणगति एवं अवसादनार्थक ण्यन्त षदलृ धातु से दिवागणपठित प्रादुर्भावार्थक प्र उपसर्गपूर्वक ण्यन्त जनि धातु से एवं भ्वादिगणपठित क्रीडार्थक ण्यन्त रम् धातु से लुङ् लकार परक आम् प्रत्यय विकल्प से निपातनात् होता है। चिकयामकः में स्वादिगणपठित चयनार्थक चिञ् धातु से लुङ्लकारपरक आम् प्रत्यय धातु को द्वित्व एवं द्वितीय चकार को कुत्व सभी प्रयोगों में लुङ् का लुक् भी निपातनात् होता है। इन चार प्रयोगों में आम् से पर में

अकः का अनुप्रयोग हुआ है उसकी निष्पत्ति – कृ धातु से लुङ्लकार अनुबन्धलोप धातु को अडागम लकार के स्थान में तिबादेश मध्य में च्लि तथां उस का "मन्त्रे घसह्वरणश........." इत्यादि सूत्र से लुक् धातु के ऋकार को "सार्वधातुकार्धधातुकयोः" से गुणरपर तिप् के इकार को "इतश्च" सूत्र से लोप तकार का "हल्ङ्याब्भ्यो दीर्घात्...." इत्यादि सूत्र से लुप् रेफ को विसर्ग होता है।

पावयां क्रियात् में ण्यन्त पावि धातु से लिङ् परक आम् एवं आशीर्लिङ् के प्रथमपुरुष के एकवचन क्रियात् का तथा विदामक्रन् में लुङ् परक आम एवं कृधातु के लुङ् लकार प्रथमपुरुष बहुवचन के अक्रन् का विकल्प से निपातनात् अनुप्रयोग हुआ है।

उक्त छः प्रयोगों में धातु से पर में आम् प्रत्यय का अनुप्रयोग "कास्प्रत्ययादाममन्त्रे लिटि" सूत्र से प्राप्त नहीं है इसलिये प्रकृत सूत्र से निपातनात् होता है। इसी प्रकार "पावयां क्रियात्" में आशीर्लिङ् में एवं विदामक्रन् में लुङ्लकार में कृधातु का अनुप्रयोग "कृञ्चानुप्रयुज्यते लिटि" सूत्र से प्राप्त नहीं है इसलिये प्रकृत सूत्र से निपातनात् विकल्प से होता है।

**विशेष** – उक्त छः प्रयोगों में आमन्त भाग प्रथमान्तपद हैं। इनमें अभ्युत्थ्सादयामकः में पहले सुबन्त उत् उपसर्ग का सादयाम् के साथ एवं पुनः अभि उपसर्ग का उत्सादयाम् के साथ "कुगति प्रादयः" सूत्र से समास होकर समासत्वात् प्रातिपदिकसंज्ञा सु विभक्ति, उसका "हल्ङ्याभ्यो दीर्घात्....." से लुप् "प्रत्ययलोपे प्रत्यय लक्षणम्" से प्रथमान्त है। इसी प्रकार प्रजनयाम् को भी समझना चाहिये। अन्य चार प्रयोगों में आम् प्रत्यय तिङ् से भिन्न एवं धातु से विहित होने कारण "कृदतिङ्" सूत्र से कृत्संज्ञक हैं इसलिये कृदन्तत्वात् प्रातिपदिक संज्ञक होने से सु प्रत्यय आया है। उक्त ६ प्रयोग वेद में विकल्प से निपातित होते हैं इसलिये लोक में प्रयुक्त होने वाले अभ्युदसीषवदत्, प्राजीजनत्, अचैषीत्, अरीरमत्, पाव्यात्, अवेदिषुः, प्रयोग वेद में भी प्रयुक्त होते हैं।

**निपातनात्** – आचार्य पाणिनि ने जहां एक प्रयोग की सिद्धि के लिये अनेक कार्य कर्त्तव्य हों वहां अनेक सूत्रों के निर्माण में गौरव होने के कारण एक ही सूत्र से निपातनात् अनेक कार्य किये हैं। भाष्यकार ने भी इस लाघव विधि का निषेध मुखेन "नामि" सूत्र के भाष्य में "नैकमुदाहरणं ह्रस्व ग्रहणं प्रयोजयति" समर्थन किया है। वहाँ केवल "नृणाम्" प्रयोग में नुडागम करने के लिए "ह्रस्व नद्यापो नुट्" सूत्र में ह्रस्वत्वरूप सामान्य धर्म विशिष्ट ह्रस्व ग्रहण का खण्डन किया है।

गुपेश्छन्दसि। ३-१-५०।

च्लेश्चङ् वा। गृहानजूगुपतं युवम्। अगौप्तमित्यर्थः।

**शाङ्करी** - सूत्रे केवल गुपेरिति धातोरुच्चारणात् आयप्रत्ययान्तस्य न ग्रहणम्, तस्य धात्वन्तरत्वात्। अतः गुपुरक्षणे इत्यस्यैव ग्रहणम्, न तु गुप गोपने गुप व्याकुलत्वे इत्यनयोः छन्दसि दृष्टानुविधेः स्वीकारात्। अत्र सूत्रे "च्लेः सिच्"३-१-४४ इत्यतच्लेरिति, णिश्रिद्रुस्रुभ्यः कर्तरिचङ् ३-१-४८ इत्यतश्चङ् इति, विभाषा घेट्श्व्योः ३-१-४९ इत्यतो विभाषा पदञ्चानुवर्तते। अतो गुपेः परस्य च्लेश्छन्दसि विभाषा चङादेशो भवति। अजूगुपतं युवम्। रक्षणार्थकात् गुप्धातोर्लुङि मध्ये च्लिः तस्य प्रकृत सूत्रेण विकल्पेन चङादेशः, लुङ् मध्यमपुरुष द्विवचने थस् प्रत्ययः तस्य "तस्थस्थमिपां तांतंतामः" इत्यनेन तमादेशः, चङि इत्यनेन धातोर्द्वित्वम्, तुजादीनामं दीर्घोऽभ्यासस्य इत्यनेनाभ्यासस्य दीर्घः। लोके अगौप्तम् इत्यर्थः। ऊदित्वादिडभावपक्षे सिजादेशे "वदव्रजहलन्तस्याचः" इत्यनेन वृद्धिः "झलो झलि" इत्यनेन सिचो लोप इति भावः। इट् पक्षे "नेटि" इत्यनेन वृद्धि निषेधे लघुपधगुणे षत्वे ष्टुत्वे च अगोपिष्टम् इति। इत्थम् लोके अगौप्तम् अगोपिष्टम् अगोपायिष्टम् इति त्रीणी रूपाणि प्रसिद्धानि, वेदे तु अजगुपतम् इत्यनेन सह चत्वारि रूपाणि प्रयुज्यन्ते।

**तीर्था** - **अजूगुपतम्** - भ्वादिगणपठितरक्षणार्थकाद् गुपूधातोर्लुङ् लकारे "लुङलङलृङक्ष्वडुदात्तः" इत्यनेना धातोरडागमः लुङः मध्यमपुरुषद्विवचने थस् आदेशः मध्ये च्लि लुङि इत्यनेन च्लि प्रत्यये तस्य गुपेश्छन्दसि इत्यनेन विकल्पेन चङादेशे थसः "तस्थस्थमिपां तांतंतामः" इत्यनेन तमादेशः अगुप् अतम् इति स्थिते "चङि" इत्यनेन धातोर्द्वित्वे "पूर्वोऽभ्यासः" इत्यनेन पूर्वस्य अभ्यास संज्ञायां "हलादिः शेषः" इत्यनेन आदिहल्शेषः "कुहोश्चुः" इत्यनेन अभ्यासगकारस्य जकारः "तुजादीनां दीर्घोऽभ्यासस्य" इत्यनेन दीर्घे अजूगुपतम् इति।

**विमर्श**- काशिकावृत्तौ इमान्नो मित्रावरुणौ गृहानजूगुपतम् युवम् इति वाक्यमुपलभ्यते। मैत्रायणी संहितायान्तु 'इमान् मे मित्रावरुणौ गृहान् जुगुपत युवम्' इत्येव पाठ उपभ्यते। आप दोनों मित्रावरुणों ने हमारे इन घरों की रक्षा की। इत्थं काशिकायां नः इति अस्मद् शब्दस्य षष्ठ्या बहुवचनान्तं रूपमुपलभ्यते, अपि च काशिकायाम् अडागम विशिष्टम् अजूगुपतम् इति रूपम्, संहितायां च जुगुपतँ इति अडागमरहितम्। अनयोः कतरद्युक्तम् इति जिज्ञासायाम्। उभयमित्याह। महर्षि पाणिनिः सूत्रमाह "बहूलं छन्दस्यमाङ्योगेऽपि" ६-४-८५ अस्यार्थः छन्दो विषये

नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः। (३-१-५१)

च्लेश्चङ् न। मा त्वायतो जरितुः काम्र्वमूनयीः ऋ० १-५३-३। मा त्वाग्निर्ध्वनयीत्। ऋ०वे० १-१६२-१५।

---

**शाङ्करी** - अत्र सूत्रे णिश्रिद्रुस्रुभ्यः "कर्तरि चङ्" ३-१-४८ इति सूत्रात् चङ् गुपेश्छन्दसि (३-१-५०) इत्यनश्छन्दसीति चानुवर्तते। अतः ऊन परिहाणे (न्यूनीभावे) ध्वनशब्दे, इलप्रेरण, अर्द गतौ याचने च इत्येतेभ्यो ण्यन्तेभ्यो णिश्रिदुस्रुभ्यः कर्तरि चङ् इत्यनेन प्राप्तच्लेश्चङादेशेच्छन्दसि नेत्यर्थः। एषु ऊनयत्येलयती द्वौ चुरादिण्यन्तौ। ध्वनयत्यपि चुरादिण्यन्तः किन्तु घटादौ पाठाद्दन्तः।

---

"मा त्वायतो जरितुः काममूनयीः" ।

**तीर्था - ऊनयीः** - चुरादिगणपठितपरिहाणार्थकात् (न्यूनीभावार्थकात्) ऊनधातोः "सत्यापपाशरूपवीणातूलश्लोकलोमत्वचवर्मवर्णचुरादिभ्यो णिच्" इति सूत्रात् णिच् प्रत्ययः धातुत्वाल् लुङि "आडजादीनाम्" इत्यनेनाडागमे प्राप्ते "न माङ् योगे" इत्यनेन तस्य निषेधे लुङः स्थाने मध्यमपुरुषैकवचने सिप् प्रत्ययः मध्ये "च्लि लुङि" इत्यनेन च्लिः तस्य स्थाने "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन चङ्ङादेशे प्राप्ते, तस्य नोनयतिध्वनयत्येलयत्यर्दयातिभ्यः इत्यनेन निषेधे सिचि इचावितौ सिचोवलादित्वादिडागमः, अपृक्तातिपो अस्तिसिचोऽपृक्ते इत्यनेनेडागमे "इट ईटि" इत्येनेन सिचो लोपे ऊन् इ इ ई स् इति स्थितौ इकारयोः सवर्णदीर्घः, णिच् इकारस्य "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणायादेशयोः सिपः सकारस्य रुत्वविसर्गे ऊनयीः इति साधु।

---

**विमर्श-** अमाङ्योगेऽपि नभवतः, माङ्योगेऽपि च भवतः। सर्वेविधयश्छन्दसि विकल्प्यन्ते इति भावः। परं भवतु नाम अमाङन्योगेऽपि अडाटोर्निषेधस्य साधुत्वं किन्तु वेदे पाठभेद परम्परायाऽसोढत्वात् संहितोक्त पाठ एव युक्त इति षष्ठ्या एकवचनान्तं मे इति जुगुपतम् इत्यड्रहितपाठ एव युक्त इति मे मतिः।

सम्पूर्णो मन्त्रश्चेत्थम् -काममूनयीः -

शचीव इन्द्र पुरुकृद्युमत्तम् तवेदिदम्भितश्चेकिते वसु।

अतः संगृभ्याभिभूतं आमरमात्वायतो जरितुः काममूनयीः॥ ऋ० १-५३-३ हिन्दी पृ० ४४८

अर्द धातुर्हेतुमण्ण्यन्तः। ऊनयीः मध्यमपुरुषैकवचने "आडजादीनाम्" इत्यनेन प्राप्ताडागमस्य "न माङ् योगे" इत्यनेन निषेधः। औननः इति भाषायामलोके। ध्वनयीत् ण्यन्त ध्वनिधातोर्लुङि प्रथमपुरुषैकवचने तिबादेशः प्राप्ताडागमस्य न माङ्योगे इत्यनेन निषेधः, च्लेः प्राप्तचङादेशस्य प्रकृतसूत्रेण निषेधः, सिजादेशः, तस्य वलादित्वादिडागमः अपृक्ततकारस्ये डागमः सिचः इट इटि इत्यनेन लोपः सवर्णदीर्घः। लोके तु अदिध्वनत्। छन्दसि ऐलयीत्, आर्दयीत्। लोके तु ऐलिलत्, आर्दिदत्।

मा त्वाऽग्निर्ध्वनयीत्।

**तीर्था** – चुरादिगणपठितशब्दार्थकाद् ध्वनधातोः सत्यापपाश..... इत्यादिना णिच् प्रत्ययो धातुत्वात् लुङि, "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे प्राप्ते "न माङ्योगे" इत्यनेन तस्य निषेधे लुङः स्थाने प्रथमपुरुषैकवचने तिबादेशे "इतश्च" इत्यनेनेकार लोपः मध्ये "च्लि लुङि" इत्यनेन च्लि प्रत्ययः तस्य "णिश्रिद्रुस्रुभ्यः कर्तरिचङ्" इत्यनेन चङादेशे प्राप्ते "नोनयति ध्वनयत्येनयत्यर्दयतिभ्यः" इत्यनेन निषेधः "च्लेः सिच्" इत्यनेन सिजादेशः इकारश्चकारयोरित्संज्ञालोपाभ्यामपहारे सकारस्य "आर्धधातुकस्येड्वलादेः" इत्यनेनेडागमे "अस्तिसिचोऽपृक्ते" इत्यनेन तकारस्य ईडागम "इट ईटि" इत्यनेन सकार लोपः सवर्णदीर्घः ईकारस्य "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणेऽयादेशे मात्वाग्निर्ध्वनयीत् इति।

**विमर्श**– अर्थ – हे प्रज्ञावान् प्रभूतकर्मा और अतिशय दीप्तिमान इन्द्र! चारों ओर जो धन है वह तुम्हारा ही है यह हम जानते हैं। हे शत्रु विध्वंसी इन्द्र! वही धन ग्रहण करके हमें दान करो। जो स्तोता तुम्हें चाहते हैं उनकी अभिलषा व्यर्थ न करना।

मात्वाग्निर्ध्वनयीदमगन्धिर्मोश्वा भ्राजन्त्याभिविक्त जघ्रिः।

इष्टं वीतमभिगूत वषट् कृतं तं देवासः प्रतिगृभणन्त्यश्वम्॥ ऋ० १६-२-१५ हिन्दी भाग २ पृष्ठ २४२

अर्थ – हे अश्वगण धूमगन्ध अग्नि (धूम से व्याप्त अग्नि) तुमसे शब्द न करा सके। अत्यन्त अग्नि संयोग से प्राप्त सुगन्धित भांड कम्पित न हो। यज्ञ के लिए अभिप्रेत और हवन के लिए लाया हुआ सम्मुख में प्रदत्त और वषट्कार द्वारा शोभित अश्व शमित देवता ग्रहण करें।

कृमृदृरुहिभ्यश्छन्दसि। ३-१-५९

च्लेरङ्वा। इदं तेभ्यो॑ऽकरं नमः। अमरत्। अदरत्। यत्सानोः सानुमरुहत्।

---

**शाङ्करी - कृमृदृ** - अत्र सूत्रे ''च्लि लुङि'' इत्यतः च्लिरिति च्लेरिति विभक्तिवियरिणा मेन, अस्यातिवक्ति इत्येताऽङिति, इरितो वा इत्यतो वेत्यनवर्तते, अत आह, मूले च्लेरङ् वा। अकरमिति। डुकृञ्करणेयधातोर्लुङ् मिप् ''लुङ्लङ्लृङ्'' इत्यदिना अडागमः, मध्ये च्लिः तस्य विकल्पेनअङ् मिपः 'तस्थस्थमिपांमित्यनेनामादेशः' ऋकारस्य ऋदृशोऽङिगुणः इत्यनेन गुणः।

**अमरत्** - मृङ् धातुः ङित्वादात्मनेपदी अतोव्यत्ययेन परस्मैपदी। मृङ् प्राणत्यागे तुक्षादिस्ततो लुङ्। अदरत् दृ हिंसायां स्वादिः। रुह बीज जन्मनि प्रादुर्भावे च।

---

**तीर्था - अकरम्** - कृधातोः लुङ् लकारः तस्य स्थाने उत्तमपुरुषैकवचने मिप् प्रत्यय मध्ये च्लि लुङि इत्यनेन च्लिः मिपः स्थाने 'तस्थस्थमिपां तांतंतामः' इत्यनेन अमादेशः च्लेः स्थाने 'कृमृदृरुहिभ्यश्छन्दसि' इत्यनेनाङादेशः ऋकारस्य ऋदृशोऽङि गुणः इत्यनेन गुणे रपरे अकरम् इति।

**अमरत्** - मृङ् प्राणत्यागे अत्र ङित्वादात्मने पदे सिदे छन्दसि व्यत्ययेन परस्मैपदम्। मृङ्धातोर्लुङ् लकारः तस्य स्थाने प्रथमपुरुषैकवचनेतिबादेशः अनुबन्धलोपः मध्ये ''च्लि लुङि''त्यनेन च्लिप्रत्ययः तस्य स्थाने ''च्लेः सिच्'' इत्यनेन सिजादेशे प्राप्ते तं प्रबाध्य कृमृदृरुहिभ्यश्छन्दसि इत्यनेन अङादेशः ऋदृशोऽङि गुणाः इत्यनेन ऋकारस्य गुणे रपरे अमरत्।

**अदरत्** - दृ विदारणे इत्यतो वा एवमेव लुङ्, च्लेरङ् ऋदृशोऽङि गुण इत्यनेन गुण रपरौ।

---

**विमर्श**- अकरम् - ऋ०वे० १०-८५-१७ हिन्दी

सूर्यायै देवेभ्यो मित्राय वरुणाय च।

ये भूतस्य प्रचेतस इदं तेभ्योऽकरं नमः॥

अर्थ - सूर्य की पत्नी सूर्या और अन्य देवगण मित्रवरुण आदि वे सभी प्राणियों के शुभचिन्तक हैं अतः उन सभी को मैं नमस्कार करता हूँ।

सानुमारुहत् - (ऋ०वे० १-१०-२) हिन्दी पृ० १११ भाग १

यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम्।

तदिन्द्रोऽर्थं चेतति यूथेन वृष्णि रेजति॥ १-१०-२॥

छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्य-खन्यखान्यदेवयज्यापृच्छयप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्य पृडानि। ३-१-१२३। कृन्ततेर्निष्पूर्वात् क्यपि प्राप्ते ण्यत्। आद्यन्तयोर्विपर्यासो निसः षत्वं च। निष्टर्क्यं चिन्वीत पशुकामः। देवशब्दोपपदे ह्वयतेर्जुहोतेर्वा क्यप् दीर्घश्च। स्पर्धन्ते वा उ देवहूये। प्र उत् आभ्या नयतेः क्यप्। प्रणीयः। उन्नीयः। उत्पूर्वाच्छिषेः क्यप्। उच्छिष्यः। मृङ्स्तृञ्ध्वृभ्यो यत्। मर्यः। स्तर्याः। स्त्रियामे वायम्। ध्वर्यः। खनेर्यण्ण्यतौ। खन्यः। खान्यः। यजेर्यः। शुन्धध्वं दैव्याय कर्मणे देवयज्यायै। आङ्पूर्वात्पृच्छेः क्यप्। आपृच्छच्छर्य धरुर्णं वाज्यर्षति। सीव्यतेः क्यप् षत्वं च। प्रतिषीव्यः। ब्रह्मणि वदेर्ण्यत्। ब्रह्मवाद्यम्। लोके तु वदः सुपि क्यप् च इति क्यब्ण्यतौ। भवतेः स्तौतेश्च ण्यत्। भाव्यः। स्ताव्यः। अपपूर्वाच्चिनोतेर्ण्यत् आयादेशश्च पृडे उत्तरेपदे। उपचाय्य पृडम्। हिरण्य इति वक्तव्यम्। उपचेयपृडमन्यत्। मृड सुखने पृड चेत्यस्मादिगुपधलक्षणः कः।

---

शाङ्करी - (क) क्यपि प्राप्ते - ऋदुपधाच्चाक्लृपिचितेः इत्यनेन। आद्यन्तयोः ककारतकारयोः। देवशब्दे - यदा ह्वेञ् स्पर्द्धायाम् इत्यतः क्यप् तदा "वचिस्वपिजादीनां किति च" इत्यनेन संप्रसारणम्, "हलः" इत्यनेन दीर्घः। यदा हु दाने इत्यस्मात्

---

तीर्था - अरुहत् - रुह् बीजजन्मनिप्रादुर्भावे वा इत्यतो लुङ्तिवादेशाऽनुबन्धलोपः मध्येच्लिः अङादेशः ङित्वाद् क्ङिति च इत्यनेन गुणनिषेधः अरुहत् इति।

लोके तु अकार्षीत्, अमत्, अदाहीत्, अरुक्षत् इति।

अस्य सूत्रस्य तीर्था तु शाङ्करी व्याख्ययैव सुस्पष्टा।

---

**विमर्श**- अर्थ - जब सोमलता के लिए एक पर्वत मार्ग से दूसरे पर्वत प्रदेश को यजमान जाता है और अनेक कर्म सिर पर उठाता है, तब इन्द्र यजमान का मनोरथ जानते हैं और इच्छित वर्षण के लिए उत्सुक होकर मरुद् बल के साथ यज्ञ स्थल में आने के लिए प्रस्तुत होते हैं।

निष्टर्क्यं चिन्वीत पशुकामः। एतेरेय आरण्यक ५-१-३

देवहूय - स्पर्धन्ते वा उ देवहये (शतपथ ब्राह्मण २-१-३-२। देवाः पितर स यो हैवं विद्वान्देवादं पितरऽ इति ह्वयत्या हाऽस्य देवा देवहूयं गच्छन्त्या

तदा तुगभावो दीर्घत्वञ्च निपात्यते। देवा हूयन्तेऽस्मिन्निति देवहूयः। उच्छिष्यः। शिष्लृ विशरणे इत्यस्मात् क्यप्। शश्छोऽटि इत्यनेन शकारस्य छकारः "स्तो श्चुना श्चुः" तकारस्य श्चुत्वम् मर्यः, स्तर्या, ध्वर्यः क्रमेण मृङ् प्राणत्यागे, स्तृञ् आच्छादने, ध्वृ हूर्छने, एतेभ्यो यत् प्रत्ययः। स्तर्या इत्यस्य स्त्रियामेव निपातनम्। ऋकारऽन्तत्वाण्यति प्राप्ते ऋहलोर्ण्यत् इत्यनेन रवान्यः वनेरेवण्यत्। देवयज्या देवशब्दे उपपदे यजेर्यः स्त्रीलिङ्ग निपातनम्। आपृच्छयम्। आङ्पूर्वात् प्रच्छ ज्ञीप्सायामित्यस्मात् क्यप् प्रत्ययः "ग्रहिज्या...." इत्यादिना सम्प्रसारणम्। प्रतिषीव्य। प्रतिपूर्वात् सीव्यतेः क्यप्, हलि च इत्यनेन दीर्घः। ब्रह्मवाद्यम्। ब्रह्मण्युपपदेर्वदः सुपि क्यप् च इत्यनेन क्यपि यति च प्राप्ते छन्दसिनिष्टर्क्य इत्यादिना ण्यत् प्रत्ययः। भाव्यम्, स्ताव्यः भवतेः स्तौतेश्च यदपवादो ण्यत्। उपचाय्यपृडम्। उपपूर्वा च्चिनोतेर्ण्यत् उपचाय्यं च तत्पृडं चेति कर्मधारयः। हिरण्य इति वक्तव्यम् हिरण्य अभिधेये इत्यर्थः।

(क) शतपथ ब्रा० काण्ड २ अध्या १ ब्रा० ३ पृ० १५५ (ख) श० ब्रा० ३-१-३-१ पृ० २५९

अस्य सूत्रस्य तीर्था तु शाङ्करी व्याख्ययैव सुस्पष्टा।

(क) यदिह छन्दसि लक्षणेननिष्पन्नं तन्निपातनात् सिध्यति। अन्यथा स्तर्योति स्त्रीलिङ्ग निर्देशोऽनर्थकः स्यात्।

---

पितर पितृ हूयभवन्ति हैनं देवा देवहूयेऽवन्ति पितरः पितृहूये यऽएवं विद्वान् देवा पितरऽइति ह्वयति। २- पृ० २५९

**विमर्श-** प्रणीयः - शतपथब्राह्मण ३-१-११) अप प्प्रणीय। अग्ना वैष्णवमेका दशकपालं पुरोडाशं निर्व्वपत्यग्निर्वै सर्व्वा देवताऽग्नौ हि सर्वाभ्यो देवताभ्यो जुहुत्यग्निर्वै यज्ञस्याऽवराद्धर्थो विष्णु...... उन्नीयः शतपथब्राह्मण ३-५-१६-१२

स्पर्धन्ते वा उ देवहूयें अत्र येषु ध्वजेषु दिद्यवः पतन्ति। ऋ० ७-८५-२ हि० पृ० ३७६ युवं ताँ इन्द्रावरुणावमित्रान्हतं परोचः शर्वा विषूचः॥

अर्थ - परस्पर स्पर्द्धावाले युद्ध में हमसे शत्रु स्पर्द्धा करते है। जिस युद्ध में ध्वजा के ऊपर आयुध गिरते हैं, उसमें हे इन्द्र और वरुण, तुम लोग हिंसक आयुध द्वारा पराङ्मुख और विविध गतियों वाले शत्रुओं का नाश करो।

प्राणीयः - शतपथब्राह्मण ३-१-३-१ पृ० २५९ अयः प्रणीयः। अग्नावैष्णवमेकादशकपालं पुरोडाशं निर्व्वपत्यग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वत्यग्निर्वै यज्ञस्याऽवराद्धर्यो विष्णुः

उच्छिष्यः - मैत्रायणी संहितायाम् 'उच्शिष्यः' इत्येव पाठ उपलभ्यते,

तथाहि – यदपरुषि वृश्चेद्यथा पुरर्ष्यवकृत्तमेवस्या दनक्ष संगंःस्थाणुरुच्छिष्यात् यदक्षसंगंःस्थाणुमुच्छिषै द्वज्रो भूत्वा यजमानस्य पशून् प्रतिहन्यात् पृष्ठ २८१।

**विमर्श**– मर्यः – ऋ०वे० १–७७–३

स हि क्रतुः स मर्यः स साधु र्मित्रो नभूदद्भुतस्य रथीः।

तं मेघेषु प्रथमं देवयन्ती र्विश उपब्रुवते दस्ममारीः॥

अर्थ – वह अग्नि यज्ञकर्ता हैं, अग्नि संसार के उपसंहारक और जनयिता हैं। सरवा की तरह अग्नि अलब्ध धन देते हैं। देवाभिलाषी प्रजागण उन दर्शनीय अग्नि के समीप जाकर अग्नि को ही यज्ञ का प्रथम देवता मानकर स्तुति करते हैं।

स्तर्यः – ऋ०वे० ४–१९–७। हिन्दी पृष्ठ ४७० भाग ३

प्रागुवो नभन्वोग्न वक्को ध्वस्रा अपिन्वद्युवतीर्ऋतज्ञाः।

धन्वान्यज्राँ अपृणक्तृषाणाँ अधोगिन्द्रः स्तर्यो३दं सुपत्नीः॥

अर्थ – इन्द्र ने शत्रु हिंसक सेना की तरह तटध्वंसिनी जलयुक्ता तथा अन्न जनयित्री नदियों को भली–भांति पूर्ण किया है। इन्द्र ने जलशून्य देशों को वृष्टि द्वारा पूर्ण किया है, तथा पिपासित पथिकों को तृप्त किया है। इन्द्र ने दस्युओं की अधिकता, प्रसवनिवृत्ता गौवों को दुहा था।

विशेष – स्तर्या स्त्रियामेवायम् यह कथन उचित नहीं है स्तर्यः इस प्रयोग की उपलब्धि से।

रवन्या – तैत्तिरीय संहिता ७–४–१३–१ पृष्ठ ३१७

कूप्याभ्यः स्वाहा कूल्याभ्यः स्वाहा विकर्याभ्यः स्वाहा ह्यवय्याभ्यः स्वाहा रवन्याभ्यः स्वाहा ह्रद्याभ्यः स्वाहाः सूद्याभ्यः स्वाहां

देवयज्या – हिन्दी पृष्ठ ५११ ऋ०वे० १०–३०–११ भाग ७

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम्।

ऋतस्य योगे विष्यं ध्वमूधः श्रुष्ठीवरीर्भूतनास्मभ्यमापः॥

अर्थ – हे जल! देवों के यज्ञ के लिए हमारे यज्ञकार्य में सहायता करो। धनप्राप्ति के लिए हमारे पास पवित्रता प्रेरित करो। यज्ञानुष्ठान के समय अपने दुग्ध स्थान का द्वारा खोलो। हमारे लिए सुखकर होवो।

आपृच्छ्य – ऋ०वे० १–६०–२। हिन्दी ४९१ – ९२ भाग १

अस्य शासुरुभयासः सचन्ते हविष्मन्त उशिजो ये च भर्ताः।

दिवश्चित्पूर्वो न्यसादि होता पृच्छयो विश्यति विंक्षुवेधाः॥

अर्थ – हव्य ग्राही देव और मानव दोनों इन शासनकर्ता की सेवा करते हैं,

छन्दसि वनसनरक्षिमथाम्। ३-२-२७।

एभ्यः कर्मण्युपपदे इन् स्यात्। ब्रह्मवनिं त्वा क्षत्रवनिम्। वाजसनेयिसंहिता १-१७ (पृष्ठ १६०) उत नो गोषणिं धियम्। (ऋ०वे० ६-५३-१०) हिन्दी पृ० ५८० भा० ४। ये पथां पथिरक्षयः (वाजसनेयि संहि० १६-६०) चतुरक्षौ पथिरक्षी। अथर्ववेद (८-१-९) (ऋ०वे० १०-१४-११) हिन्दी पृ० ४०५। हविर्मथीनाभिः। ऋ०वे० ७-१०४-२१) हिन्दी पृ० ४५५ भाग ५।

---

**शाङ्करी** - ब्रह्मव वनति इति ब्रह्मवनिं क्षत्रं वनति इति क्षत्रवनिम् (क) अत्र इनन्ताद् द्वितीया विभक्तिः ब्रह्मविनं त्वा क्षत्रविनम्। उपपदसमासः तैत्तिरीय संहिता १-३-१ पृष्ठ १३। अत्र वन षण संमक्ताविति भ्वादिगण पठितयोरेव ग्रहणम्, न तु वनु याचने षणु दाने इति तानादिकयोः सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् इति न्यायात् निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम् इति न्यायाच्च। गां सनतीत्यर्थे

---

**तीर्था** - ब्रह्म वनि त्वा क्षत्रवनिम् - ब्रह्मवनति, क्षत्रं वनति इति विवक्षायां ब्रह्म उपपदे क्षत्रम् उपपदे च ''उपपदमतिङ्'' इत्यनेन उपपद तत्पुरुष समासः भ्वादिगणपठित संभक्तार्थक वनधातोः छन्दसि वनसन रक्षिमथाम् इत्यनेन इन् प्रत्ययः तदन्ताद् द्वितीयैकवचनम्, युष्मच्छब्दाद् द्वितीया विभक्तेः ''त्वामौ द्वितीयायाः'' इति त्वादेशः ब्रह्मवनिं त्वा क्षत्रवनिम् इति।

---

क्यों कि ये पूज्य प्रजापालक और फलदाता अग्नि सूर्योदय से भी पहले यजमानों के बीच स्थापित हुए हैं।

**विमर्श**- ब्रह्मवाद्यम् तैत्तिरीय संहिता २-५-८-३ पृष्ठ ९७

ब्रह्मवाद्यमवदेतामस्मिन् दारावार्देऽग्नि जनयाव यतरो नौ ब्रह्मीयानिति नृमेधोऽभ्यवदत् सोऽग्निमजनयदृष् इत्यब्रवीत्।

भाव्यम् - (अथर्ववेद काण्ड १३ अनुवाक् १ सूक्त १ ऋचा ५४ पृष्ठ २६७ भाग ३

गीर्भिरुर्ध्वान् कल्पयित्वा रोहितो भूमिमब्रवीत्।
त्ययीदं सर्वं जायतां यद् भूतं यच्चे भाव्यम्॥

ब्रह्मवनित्वा क्षत्रवनि ...... शुक्लयजुर्वेद माध्यन्दिनसंहिता १-१७ पृष्ठ १६० वाजसनेय सं० १/१७

सन धातोः इन् प्रत्ययः। गोषणिम् इत्यत्र सुषामादित्वात् षत्वम् ति सुबोधिनीव्याख्याकारः। शेखरकारो नागेशः सनोतेरनः (८-३-१०८) इति सूत्रेण अनकारान्तस्यैव सकारस्य मूर्द्धन्यादेशविधानात् गोसनिशब्दस्य सवनादिषु पाठः करिष्यते इति सनोतेरनः इति सूत्रस्थभाष्याच्च यद्यप्यत्र षत्वं न प्राप्नोति तथापि दन्त्यस्यैव मूर्द्धन्यवत्पाठो वैदिक संप्रदायः। अत एव पदकाले दन्त्यमेव पठन्ति। यत्तु सुषामादित्वात् षत्वमिति तन्न उक्त सूत्रस्थभाष्य विरोधादिति नागेशभट्टः शेखरे।

---

**तीर्था** - गोषणिम् - गां सनति इति विग्रहे - उपपदमतिङ् इत्यनेनोपपदतत्पुरुष समासः सनन्तात् "छन्दसिवनसनरक्षिमथाम्" इत्यनेनेन् प्रत्ययान्ताद् द्वितीयैकवचने अम् विभक्तिः अमिपूर्वः इत्यनेन पूर्वरूपे गोषणिम् इति।

पथि रक्षयः - पन्थानं रक्षयन्तीति विग्रहे रक्षधातोश्च छन्दसि "वनसन रक्षिमथाम्" इत्यनेनेन् प्रत्ययः बहुवचने पथिरक्षयः।

(क) (ख) इनन्ताद् द्वितीया तस्याः सुपां सुलुक् इति लुक् इति न्यासकारस्य लेखः प्रमाद एव ब्रह्मवनिं त्वा क्षत्रमवनिम् इत्यत्र द्वितीयायाः श्रुतत्वात्।

हविर्मथीनाम्- हविर्मथन्तीति विग्रहे मथ धातोः "छन्दसि वनसन रक्षिमथाम्" इत्यनेनेन् प्रत्ययः तदन्तात् षष्ठ्याः बहुवचने हविर्मथीनाम् इति।

---

**विमर्श**- धृष्टिरस्य पाग्नेऽअग्निमामादं जहि निष्क्रव्यादंᳲसेधा देवयजं वह। ध्रुवमसि पृथिवी ᳲह ब्रह्मवनि त्वा क्षत्रवनि सजातृ वन्युपदधामि भ्रातृव्यस्य वधाय।

अर्थ - हे उपवेष! तुम प्रगल्भ हो आमात (अपक्व पदार्थ को भक्षण करने वाला लौकिक) क्रव्याद् (प्रेतमांस को भक्षण करने वाला चिताग्नि) और तीसरा यज्ञीय अग्नि इस प्रकार से अग्नि के तीन भाग हैं। हे गार्हपत्य अग्ने तुम आमात् अग्नि का त्याग करो और क्रव्याद् अग्नि को दूर करो और तीसरे याज्ञिय अग्नि को समीप में ले लो। हे कपाल तुम स्थिर हो उस कारण पृथिवी को स्थिर करो। ब्राह्मण क्षत्रिय और यजमान कुल के लोग पुरोडाश की निष्पत्ति के लिये जिसको स्वीकार करते हैं ऐसे हे कपाल! तुम्हें मैं अङ्गारों पर रखता हूँ। उससे मेरे शत्रुओं का वध हो।

तैत्तिरीय संहिता १-३-१-२ पृष्ठ १३

ब्रह्मवनि त्वा क्षत्रवनिम् सु प्रजावनिं रायस्पोषवनिं पूर्यषामि -

छन्दसि सहः। ३-२-६३।

सुप्युपपदे सहेर्ण्वि स्यात्। पृतनाषाट्।

---

**शाङ्करी** - सुपि स्थः - ३-२-४ इत्यतः सुपि इत्यनुवर्तत अत आह सुप्युपपद इति। पृतनाषाट्। षह मर्षणे भ्वादिः। न तु दिवादि नापि चुरादिः। होढः इति ढत्वं जश्त्वेन डकारः "वाऽवसाने" इति विकल्पेन चर्त्वेन टकारौ "सहेः साडः सः" इति षत्वम् "अत उपधायाः" इत्यनेनाकारस्य वृद्धिः।

---

**तीर्था** - पृतनाषाट् - पृतनां (सेना) सहते इति विग्रहे पृतनामुपपदे सह धातोः "छन्दसि सहः" इत्यनेन ण्वि प्रत्ययः णकारस्य "चुटू" इत्यनेन इकारस्य "उपदेशेऽजनुनासिक इत्" इत्यनेन वकारस्य "वेरपृक्तस्य" इत्यनेन च निवृत्तिः (अयमेव सर्वापहारी लोप इति शब्देनोच्यते) प्रत्ययस्य णित्वात् "अत उपधायाः" इत्यनेन उपधा अकारस्य वृद्धिः हकारस्य "होढः" इत्यनेन ढत्वं ढकारस्य "झलां जशोऽन्ते" इत्यनेन जश्त्वेन डकारः तस्य "वाऽवसाने" इत्यनेन विकल्पेन चर्त्वेन टकार-डकारौ "सहे साडः सः" इत्यनेन षत्वम् पृतनाषाट् पृतनाषाड् इति।

---

(क) चतुरक्षौ पेथिरक्षी (ऋ० १०-१४-११) हिन्दी पृ० ४०५ भाग ७

**विमर्श**- यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ।
ताभ्यामेनं परिदेहि राजन्त्स्वस्ति चास्मा अनमीवं च धेहि॥ १३॥

(ख) पथिरक्षी श्वानौ अथर्ववेद काण्ड अनुवाक् १ सूक्त ऋचा ९

श्यामश्च त्वा मा शबलश्च प्रेषितौ यमस्य यौ पथिरक्षी श्वानौ।
अर्वाङेहि मा वि दीध्यो मात्रे तिष्ठः पराङ्मनाः॥

अर्थ - हे राजन्! यम तुम्हारे गृह के रक्षक चार आखों वाले, मार्ग के रक्षक और मनुष्यों के द्वारा प्रशंसनीय जो दो कुक्कुर हैं उनसे इस मृत व्यक्ति की रक्षा करो। राजन्! इसे कल्याणभागी और निरोगी करो।

पृतनाषाट् - ऋग्वे० १-१७५-२) हिन्दी पृष्ठ ३५८ भा० २

आ नस्ते गन्तु मत्सरो वृषा मदो वरेण्यः।
सहावाँ इन्द्र सानसिः पृंतनाषाक मर्त्यः॥ १-१७५-२। ऋ०वे०

अर्थ- हे इन्द्र! तुम्हें हर्षित करने वाला - अभीष्टवर्षी तृप्त करने वाला वरण करने योग्य, सहायक शत्रुशैन्य विनाशक और अविनाशी सोम प्राप्त होवे।

लोके तुषाराड् इत्यादि प्रयोगाश्चिन्त्याः इति पदमञ्जर्यां हरदत्तः।

वहश्च ३-२-६४।

प्राग्वत्। दित्यवाट्। योगविभाग उत्तरार्थः।

काव्यपुरीषपुरीष्येषु ञ्युट्। ३-२-६५।

एषु वहेञ्युट् स्याच्छन्दसि। कव्यवाहनः। (तैत्ति०सं० २-५-८-६ पृष्ठ ९७) पुरीषवाहन (वाजसनेयि संहिता ११-४४) पुरीष्यवाहनः (मैत्रा० संहिता २-७-४-५१) पृष्ठ १५३

---

**शाङ्करी** - प्राग्वत् - छन्दसि विषये सुबन्ध उपपदे वहेर्धातोण्वि प्रत्ययो भवतीति। दित्यवाट् - ढत्वजश्त्व चर्त्वानि पूर्ववत् इति भावः। योगविभाग उत्तरार्धः - काव्यपुरीषपुरीष्येषु ञ्युट् ३-२-६५ इति सूत्रे "वहश्च" इत्यस्यैवानुवृत्ति यथा स्यात् एकयोगे तू सहवहोरुभयोः स्याताम्।

पूर्वेण ण्वौ प्राप्ते ञ्युड् विधानार्थमयमारम्भः। टकारो ङीबर्थः ञकारः स्वरार्थः वृद्धयर्थश्च। यु इत्यस्य युवोरनाकौ इत्यनादेशः।

---

**तीर्था** - दित्यवाट् - दित्यं वहति इति विग्रहे दित्यवाट् इत्यत्र वह् धातो वहश्चे त्यनेन ण्वि प्रत्ययः ण्कारस्य "चुटू" इत्यनेन इकारस्य "उपदेशेऽजनुनासिक इत्" इत्यनेनेत्संज्ञायां वेरपृक्तस्येत्येनेन अपृक्तवकारस्य लोपः "होढः" इत्यनेन हकारस्य ढत्वं "झलां जशोऽन्ते" इत्यनेन जश्त्वेन ढकारस्य डकारः तस्य "वाऽवसाने" इत्यनेन विकल्पने चर्त्वे दित्यवाट् दित्यवाड् इति रूपद्वयम्।

कव्यवाहनः, पुरीषवाहनः, पुरीष्यवाहनः, काव्य-पुरीष-पुरीष्येषूपपदेषु कव्यपुरीषपुरीष्येषु इति सूत्रेण वहधातोर्ञ्युट् प्रत्ययः "चुटू" इत्यनेन ञकारटकारस्य

---

**विमर्श**- कव्यवाहनः (तैत्तिरीय संहिता २-५-८-६ पृष्ठ ९७)

त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणा सहरक्षा असुराणाम्-

पुरीषवाहणः (शुक्ल यजु-माध्यन्दिन संहिता अध्याय ११ मन्त्र ४४ पृष्ठ ५५)

स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन्। पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः।

मन्त्रार्थ - हे गमन में कुशल रासभ? तुम स्थिर काय वाले हो, वेगवान हो, अन्न को पैदा करने वाले हो। हे पुरीष्य अग्नि, तुम पृष्ठ को विस्तीर्ण करते हो, अग्नि देह रूप मृत्तिका में सुख से स्थिति के योग्य हो।

हव्येऽनन्तः पादम्। ३-२-६६।

अग्निश्चे हव्यवाहनः। पादमध्ये तु वहश्च इति ण्विरेव।

हव्यवालग्निरजरः पिता नः (ऋ०वे० ५-४-२) हिन्दी पृष्ठ ६४२।

---

**शाङ्करी** - अन्तः शब्दो मध्यार्थकः। अनन्तः पादमिति - पादयोर्मध्ये नेत्यर्थः। ''अव्ययं विभक्ति'' इत्यादिना विभक्त्यर्थेऽव्ययीभावसमासः। न अन्तः पादमनन्तः पादमित्यर्थः। छन्दसीत्यनवृत्तेः पादशब्दः ऋक्पादं बोधयति। अत एव हव्यशब्दे उपपदे छन्दसि विषये वहेर्धातोर्ञ्युट् प्रत्ययो भवति यदि पादमध्ये न स्यात्तदा इति सूत्रार्थः। प्रत्युदाहरणे हव्यवालग्निरजरः पिता नः इत्यत्र पादमध्य एवास्ति। अत एव वहश्चेत्यनेन ण्विरेव भवति। हव्यवाहनः इत्यत्रापि पूर्वेण ण्विः प्राप्तः तं प्रबाध्यानेन ञ्युड् विधीयते। अत्रापि यदि ण्विः स्यात्तदा तस्य सर्वापहारलोपे हकारस्य पदान्तत्वात् होढः इत्यादिना ढत्वादि के सत्यनिष्टरूपापत्तिः स्यात्।

---

**तीर्था** - ''हलन्त्यम्'' इत्यनेनेत्संज्ञायां यु इत्यस्य ''युवोरनाकौ'' इत्यनेनानादेशः, ''अत उपधायाः'' इत्यनेन वह धातोरुपधाऽकारस्य वृद्धि ''कृत्तद्धितसमासाश्च'' इत्यनेन प्रातिपदिकत्वात् सौ सस्य विसर्गे च कव्यवाहनः इत्यादयः सिद्धाः।

हव्यवाहनः- हव्यशब्दे उपपदे वह धातोर्हव्यं वहतीति विग्रहे वहश्चेत्यनेन ण्विः प्राप्तः तं प्रवाध्य हव्येऽनन्तः पादम् इत्यनेन ञ्युट्प्रत्ययः ञकारस्य ''चुटू'' इत्यनेन, ट्कारस्य हलन्तयमित्यनेन निवृत्तिः, यु इत्यस्य ''युवोरनाकौ'' इत्यनेन अनादेशः धातोरकारस्य ''अत उपधायाः'' इत्यनेन वृद्धिः हव्यवाहन इत्यस्य ''कृत्तद्धितसमासाश्चे''त्यनेन प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च हव्यवाहनः इति।

---

**विमर्श**- पुरीष्यवाहनः (मैत्रायणी संहिता २-७-४-५१ पृष्ठ १५३)

स्थिरो भव वीड्वङ्ग आशु भव वाज्यर्वन्। पृथुर्भव सुषदस्त्वमग्नेः पुरीष्यवाहनः।

अग्निश्च हव्यवाहनः (अथर्ववेद ७-२१-१) पृष्ठ ३४७

अन्वद्यनोऽनुभातिर्यज्ञं देवेषु मन्यताम्।

अग्निश्च हव्यवाहनो भवतां दाशुषे ममे॥

ऋग्वेद १-४४-२ हिन्दी पृष्ठ ३७२-७३

जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम्। सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत्॥

जनसनखनक्रगमो विट्। ३-२-६७।

विड्वनोः। ६-४-४१। इत्यात्वम्। अब्जाः। गोजाः। गोषा इन्दे। नृषा असि। सनोतेरनः इति षत्वम्। इयं शुष्मैभिर्विसरवा इवारुजत्। (ऋ०वे० ६-६१-२)। आदधिक्राः शवसा पञ्चकृष्टीः। ऋ०वेद ४-३-१०। अग्रेगाः। तैत्तिरीय संहिता (१-३-६) पृष्ठ १४।

**शाङ्करी** – सुप्युपपदे जनादिधातुभ्यः छन्दसि विट् स्यात्। विशेषानुपादानात् जनशब्देन जन जनने इति जुहोत्यादिः, जनीप्रादुर्भावे दिवादिरूयमपि गृह्यते। सनशब्देन षणु दाने तनादिः गृह्येत्। विट् इत्यत्र टकारेऽसति वेरपृक्तस्य इत्यत्र एकानुबन्धकपरिभाषयाऽस्यैव ग्रहणं स्यात्, न तु विजादीनाम् सति टकारे तु 'विड्वनोरननुनासिक स्यात्' इत्यत्रास्यैव ग्रहणं भवति न तु क्विबादीनाम्। अब्जाः अप्सु जायत इति अब्जाः। एवं गोषु रश्मिषु जायत इति गोजाः – अग्निः। एवमवेव गां सोनोतेरनः इति षत्वम्। नरं सनोतीति नृषां। विसं – तटं खनहीति विसखा सरस्वती नदी। दधिक्रामतीति दधिक्राः। अग्रे गच्छतीति अग्रेगाः। हलदन्तात् ससम्यासंज्ञायाम् इत्यनेन ससम्या अलुक्।

**तीर्था** – अब्जाः। अप्सु जायत इति विग्रहे जनधातोः "जनधनखनक्रमगमो विट्" इति सूत्रेण विट् प्रत्ययः तस्य (सर्वापहारी लोप) हलन्त्यम् इत्यनेन टकारस्य इकारस्य "उपदेशेऽजनुनासिक इत्" इत्यनेन वकारस्य "वेरपृक्तस्य" इत्यनेन लोपः, "विड्वनोरनुनासिकस्यात्" इत्यनेन धातोः नकारस्याकारादेशः, "कृत्तद्धितसमासाश्चे'त्यनेन प्रातिपदिकत्वात् सौ तस्य रुत्वे विसर्गे अब्जा इति।

एवमेव गोः जातः गोजाः इति, गां सनोतीति गोषा, नृषा इत्यत्र सनोतेरनः इत्यनेन सकारस्य षत्वम् विसं (कमलस्य मूलम्) रजनतीत्यनेन विसखा इति, दधि क्रामतीत्यनेन दधिक्राः इति, अग्रे गच्छतीत्यनेन अगेगाः इति।

**विमर्श**- अर्थ – हे अग्नि! तुम देवों के सेवित दूत हो। हव्य वहन करो। तुम यज्ञ को रथ की तरह वहन करने वाले हो। तुम अश्विनीकुमारों और उषा के साथ शोभनीय वीर्य युक्त और प्रभूत धन हमें दान करो।

अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजः सुषीदन्॥ ऋ०वे० (७-३४-१६) हि० पृष्ठ २००

अर्थ – मेघों के नदी में जो घातक जल बैठे हुए। भाग ५ हैं उनसे उत्पन्न अग्नि की स्तोत्र द्वारा स्तु ति की जाती है।

गोजाः (ऋ०वे० ४-४०-५) हिन्दी पृष्ठ ५६६

हंसः शुचिषद्वसुरन्तरिक्ष सद्धोता वेदिषदतिथि र्दुरोणसत्।
नृषद्वरसदृतसद्व्यामसदब्जा गोजा ऋतजा अदिजाऋतम्॥

हिन्दी पृ० ५६६ भाग ३

**विमर्श-** अर्थ - हंस (आदित्य) दीप्त आकाश में अवस्थित रहते हैं। वस (वायु) अन्तरिक्ष में अवस्थिति करते हैं। होता (वैदिकाग्नि) वेदी स्थल पर गार्हेपत्यादि रूप से अविस्थति करते हैं एवं अतिथिवत् पूज्य होकर गृह में पाकादिसाधन रूप में अवस्थित रहते हैं। ऋत (सत्य-ब्रह्म-यक्ष) मनुष्यों के मध्य में अवस्थित रहते हैं और वरणीय स्थान में यज्ञ स्थल में विद्यमान रहते हैं एवं अन्तरिक्ष में भी अवस्थित रहते हैं। वे जल में उत्पन्न हुए हैं, रश्मियों में उत्पन्न हुए हैं सत्य में उत्पन्न हुए हैं और पर्वतों में भी उत्पन्न हुए हैं।

गोषा - (ऋ०वे० ९-२-१०) हिन्दी पृष्ठ ५७१ भाग ६

गोषा इन्दो नृषा अस्य श्वसा वाजसा उत। आत्मा यज्ञस्य पूर्व्यः।॥

अर्थ - हे इन्द्र तुम यज्ञ की पुरानी आत्मा हो। तुम गौ, पुत्र अन्न और अश्व प्रदान करो।

विसरवा - ऋ०वे० (६-६१-२) हिन्दी पृष्ठ ६०३-४ भाग ४ वि

इयं शुष्मेभिर्विसरवा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः।
पारावतघ्नी भवसे सुवृक्तिभिः सरस्वतीमाविवासेमधीतिभिः॥

अर्थ - हे सरस्वती (नदी) मृणाल खननकारी की तरह प्रबल और वेगवान् तरंगों के साथ पर्वत तटों को मग्न करती है। रक्षा के लिए हम स्तुति और यज्ञ द्वारा दोनों तटों का विनाश करने वाली सरस्वती की परिचर्या करते हैं।

आदधिक्राः (ऋ०वे० ४-३८-१०) हिन्दी पृष्ठ ५६०-६१) भाग ३

आदधिकाः शवसा पञ्चकृष्टीः सूर्य इव ज्योतिषापस्ततान।
सहस साः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि॥

अर्थ - सूर्य जिस प्रकार अपने तेज द्वारा जल प्रदान करते हैं उसी प्रकार से दधिक्रादेव बल द्वारा पञ्चकृष्टी (देव-मनुष्य-असुर-राक्षस और पितृगण अथवा चारों वर्ण और निषाद) को विस्तृत करते हैं। शत-सहस्रदाता वेगवान् (दधिक्रा देव) हमारे स्तुति वाक्य को मधुर फल द्वारा संयोजित करें।

अग्रेगाः (तैत्तिरीय संहिता ३-६) पृष्ठ १४

पृथिव्यै त्वा अन्तरिक्षाय त्वा दिवे त्वा शुन्धंतां लोकः पितृषदनो यवोऽसि यवयास्मद् द्वेषो यवयारांतीः पितृणांᳪ सदनमसि स्वावेशोऽस्य ग्रेगा नेतृणां वनस्पतिरधि त्वा स्थास्यति..............।

मन्त्रे श्वेतवहोक्थशक्ष्पुरोडाशोण्विन्। ३-२-७१।

(वा) श्वेतवहादीनां डसपदस्येति वक्तव्यम्। यत्र पदत्वं भावि तत्रण्विनोऽपवादो। डस्वक्तव्यः इत्यर्थ। श्वेतवाः श्वेतवाहौ श्वेतवाहः। उक्थानि उक्थैर्वा शंसति उक्थशा, यजमानः। उक्थशासौ उक्थशासः। पुरोदाश्यते दीयते पुराडाः।

---

**शाङ्करी** - अस्मिन् सूत्रे श्वेतवहादिषूपपदेषु सुपि स्थः ३-२-४ इति सूत्रात् सुपीत्यनुवर्तते। अतो मुचे सुबन्ते ण्विन् प्रत्ययो भवति। वार्तिककार मते श्वेतवहादिषूपपदेषु यत्र पदत्वं सम्मान्यते तत्र ण्विनोऽपवादो डस्प्रत्ययः कर्त्तव्य इत्यर्थ। अत एव श्वेता एनं वहन्ति इति श्वेतवाः सूर्यः। अत्र डस् प्रत्यये कृते डित्वात् ''टेः'' इति सूत्रेण टि लोपे कृते श्वेतव् अस् कृते ''अत्वसन्तस्य चाधातोः'' इत्यनेन उपधादीर्घे सुप्रत्ययस्य ''हल्ङ्याभ्यो दीर्घात्सुतिस्यपृक्तं हल्'' इत्यनेन लोपे सस्य रुत्वे विसर्गे श्वेतवाः इति। एवमेव उक्थशाः, पुरोडाः इत्यपि बोध्यम्। अत्र सूत्रे सुपिस्थः ३-२-४ इति सूत्रात् सुपीत्यनुवर्तते। अतो मन्त्रे श्वेतवहादिषूपपदेषु ''ननु स्वादिष्वसर्वनामस्थाने'' इत्यत्र असर्वनामस्थाने इति निषेधात् श्वेतवाः इत्यादौ सौ कथं पदत्वम्, हलादौ सावपि पदं इति ''स्वादिष्वसर्वनामस्थाने'' १-४-१७ इति सूत्रस्थ भाष्य स्वारस्यात् हलादौ सा वपि पदम् इति निष्कर्षात्।

---

**तीर्था** - श्वेतवाः श्वेता एवं वहन्ति इति विग्रहे श्वेतोपपदपूर्वकात् वहधातोः मन्त्रे श्वेतवहो ''क्थशस्पुरोडाशो ण्विन्'' इति सूत्रात् ण्विन् प्रत्ययप्राप्ते तं प्रबाध्य 'श्वेतवहादीनां डस्पदस्येति वक्तव्यम्' इति वार्तिकात् प्रथमाया एकवचने डस् प्रत्यये ''चुटू'' इति सूत्रेण डकारस्येत्संज्ञायां श्वेतवह अस् इति स्थितौ डित्वसामर्थ्यात् अभस्यापि टेर्लोपः इति नियमात् अह् इत्यस्य टेर्लोपे। श्वेतवस् इत्यस्य प्रातिपदिकत्वात् सौ श्वेतवस् सु इति स्थिते ''अत्वसन्तस्य चा धातो'' इत्यनेन उपधादीर्घे सुप्रत्ययस्य ''हल्ङ्याभ्यो दीर्घात् सुतिस्यपृक्तं हल्'' इत्यनेन लोपे सस्य रुत्वविसर्गे श्वेतवाः।

एवमेव - उक्थानि उक्थैर्वा शंसति उक्थशाः। पुरो दाश्यते दीयते पुरोडाः। श्वेतवाहौ, श्वेतवाहः, उक्थशासौ, उक्थशासः, पुरोडाशौ पुरोडाशः इत्यादौ तु न डस् प्रत्ययः तत्र ''यचि भम्'' इति सूत्रेण भ संज्ञया पद संज्ञया वाधात्

अवे यजः ३-२-७२

अवयाः। अवयाजौ। अवयाजः।

---

**शाङ्करी** – अव उपसर्गपूर्वकात् यज्धातो ण्विन् प्रत्ययो भवति। अवयाः इत्यत्र तु हलादौ सौ पदत्व सम्भावनायां डस् एव। ननु पुराडाः पुरोडाशौ पुरोडाशः इव अवयाः अवयाजौ अवयाजः इत्यादि रूपाणि भवन्ति तर्हि कथं न पुरोडाशावयजोर्ण्विन् इत्येक योग एव विधेय इति चेन्न एकयोगे कर्त्तव्ये श्वेतवहादीनामपि उत्तरसूत्रेऽनुवृत्तिः स्यादेकयोग निर्दिष्टत्वात्। यजेश्च केवलस्यावपूर्वस्यैवोत्तरत्रानुवृत्तिरिष्यते।

(विजुपे छन्दसि ३-२-७)

---

''मन्त्रेश्वेवहोक्थशस्पुरोडाशो ण्विन्'' इत्यनेन ण्विन् एव। श्वेतवाहौ – श्वेता एनं वहन्ति इत श्वेतवाः सूर्यः, अत्र श्वेत उपपदपूर्वक वह् धातोः औ विभक्तौ ''मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्'' इति सूत्रेण ण्विन् प्रत्ययः तस्य सर्वापहारलोपः (णकारस्य 'चुटू' इत्यनेन, इकारस्य 'उपदेशेऽजनुनासिक इत्' इत्यनेन, नकारस्य 'हलन्त्यम्' इत्यनेन, वकारस्य 'वेरपृक्तस्य' इत्यनेन) णित्वात् ''अत उपधाया'' इत्यनेन उपधावृद्धौ श्वेतवाहौ इति साधु। एवमेव उक्थ शासौ उक्थशासः, पुरोडाशौ पुरोडाशः इत्यपि बोध्यम्।

---

**विमर्श**– उक्थशासः – ऋ०वे० ४-२-१६

अधायथांनः पितरः परासः प्रत्नासौ अग्न ऋतमाशुषाणाः।

शुचीदयं दीधितिमुक्थशासः क्षमामिन्दन्तौ अरुणीरपंवन्॥ ऋ०वे० ४-२-१६ हिन्दी पृ० ३७२ भाग ३

अर्थ – हे अग्नि, हम लोगों के श्रेष्ठ पुरातन और सत्यभूत यज्ञ में रत पितपुरुषों में दीप्तस्थान तथा तेज प्राप्त किया था। उन्होंने उक्थों का उच्चारण करके अन्धकार को विनष्ट किया था तथा पणियों द्वारा अपहूत अरुणवर्णा गौओं को या उषा को प्रकाशित किया था।

पुरोडा ऋ०वे० ३-२८-२

पुरोला अग्ने पचतस्तुभ्यं वाद्या परिष्कृतः। तं जुषस्व यविष्ठ्यः। हिन्दी भाग ३ पृ० १११

अर्थ – हे युततम (प्रदीप्त) अग्नि तुम्हारे लिये, पुरोडाश का पाक किया गया है, उसे संस्कृत किया गया है, तुम उसका सेवन करो।

अवयाः श्वेतवाः पुरोडाश्च (८-२-६७)

एते सम्बुद्धौ कृतदीर्घा निपात्यन्ते। चादुक्थशाः।

विजुपे छन्दसि (३-२-७३) उपे उपपदे यजेर्विच्। उपयट्।

---

**शाङ्करी** – ननु मन्त्रे श्वेतवहेत्यादिना डसि कृते ''अत्वसन्तस्य चाधातोः'' इत्यनेन दीर्घे रुत्वे च कृते श्वेतवाः इत्यादि सिद्धे व्यर्थमेवायं योग इति चेन्न सूत्रवृत्तावेवोक्तम्, एते सम्बुद्धौ कृत दीर्घा निपात्यन्ते इति संबुद्धौ ''अत्वसन्तस्य चाधातोः'' इत्यनेन दीर्घस्याप्रवृत्तेः।

विजुपे – ननु पूर्वसूत्रात् मन्त्रे इत्यस्यानुवर्तनादेव भाषायामप्रवृत्ते छन्दसी इति ग्रहणं व्यर्थमिति चेत् ब्राह्मणस्यापि संग्रहार्थं छन्दसि ग्रहणस्य सार्थक्यात्। मन्त्रव्यतिरिक्तो हि ब्राह्मण भागो वेदः। छन्दोब्राह्मणाति इति सूत्रे पृथक् ब्राह्मणे मुख्य छन्दत्वस्यानङ्गीकारात्।

---

**तीर्था** - अवयाः अव उपसर्गपूर्वकयज् धातोः सौ पदत्व संभावनायां अवे यजः इति सूत्रात् डस् प्रत्ययः डकारस्य ''चुटू'' इति सूत्रेण इत्संज्ञायां ''टेः'' इति सूत्रेण यज्धातोः टेः इत्यंशस्य लोपः अवयस् इति स्थिते कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ ''अत्वसन्तस्य चाधातोः'' इत्यनेन उपधादीर्घे सु विभक्तेः उकारस्य ''उपदेशेऽजनुनासिक इत्'' इत्यनेन इत्संज्ञायां सकारस्य ''हल्ङ्याभ्यो दीर्घात्सुतिस्यपृक्तं हल्'' इत्यनेन दीर्घे सकारस्य रुत्वे विसर्गे च अवयाः इति साधु।

अवयाजौ – अवयाजः इत्यनयोस्तु पूर्ववत् अवे यजः इति सूत्रात् औ जस् विभक्तौ च परतो ण्विन् प्रत्यये सति तस्य सर्वापहारलोपे श्वेतवाहौ श्वेतवाहः इतिवत् कर्त्तव्यः।

उपयट् – उपोपसपर्गपूर्वयज् विजुपे छन्दसि इति सूत्रात् विच् प्रत्यये तस्य सर्वापहारलोपे (चकारस्य हलन्त्यम् इत्यनेन, हकारस्य 'उपदेशेऽजनुनासिक इत्' इत्यनेन, वकारस्य वेरपृक्तस्येत्यनेन) धातोः जकारस्य ''व्रश्चभ्रस्जसृजमृजयज्-राज्भ्राजच्छशां षः'' इत्यनेन षत्वे उपयष् इति स्थिते झलां जशोऽन्ते इत्यनेन जश्त्वेन डकारे वाऽवसाने इत्यनेन चर्त्वेन टकारे उपयट् इति साधुः।

---

**विमर्श**- अवेयजः -

अवयाः काठकसंहिता ३५-६५ पृष्ठ ३५०

तस्यै त एना हविषा विधेमत्वं यज्ञे वरुणस्यावया असि।

आतो मनिन्क्वनिब्वनिपश्च (३-२-७४)

सुप्यपसर्गे चोपपदे आदन्तेभ्यो धातुभ्यश्छन्छसिविषये मनिनादयस्त्रयः प्रत्ययाः स्युः। चाद्विच्। सुदामा। सुधीवा। सुपीवा। भूरिदावा। घृतपावा। विच्। कीलायाः।

---

**शाङ्करी** – सुदामा – सु उपसर्ग पूर्वकात् जुहोत्यादिगण पठित डु दाञ् दाने धातोः मानिन् प्रत्ययः नकारस्य "हलन्त्यम्" इत्यनेन इकारस्य "उपदेशेऽजनुनासिक इत्" इत्यनेन इत्संज्ञायां सुदामन् सर्वनामस्थाने चासम्बुद्धौ इत्यनेन उपधादीर्घः "न लोप प्रातिपदिकान्तस्य" इत्यनेन नकारलोपः। सुधीवा, सुपीवा "घुमास्था" इत्यनेनेत्वम्। भूरिदावा घृतपावा इत्यादौ वनिपि तु नेत्वं प्रत्ययस्य कित्वाभावात्। कीलालं जलं तत् पिवतीति कीलालपाः। पयः कीलालममृतं जीवनं भुवनं वनम्, इत्यमरः। कीलालं पिवतीति विग्रहे विच्। सर्वापहार लोपः।

---

**तीर्था** – तीर्था तु शाङ्करी व्याख्ययैव बोध्या।

---

**विमर्श**– सुदामा ऋ० वेद ६-२०-७ भाग ४ पृष्ठ ४१३

विपिप्रोरहिमायस्य दृल्हा पुरोवर्जिञ्छवसा नदर्दः।

सुदामन्तद्रेकणौ अप्रमृष्य मृजिश्वने दात्रं दाशुषै दाः॥

अर्थ – हे वज्रधर इन्द्र? तुमने तुरन्त मायावाले विप्रु नामक असुर के दृढ दुर्गों को बल द्वारा विदीर्ण किया था। हे शोभन दान सम्पन्न इन्द्र तुमने हव्यरूप धन प्रदान करने वाले राजर्षि ऋद्यजिश्वा को अप्रतिवाध धनप्रदान किया था।

भूरिदावा ऋ० वेद ९-८७-४ हिन्दी ७ पृष्ठ १९६

एष स्य ते मधु माँ इन्द्र सोमो वृषा वृष्णे परि पवित्रे अक्षाः।

सहस्रसाः शतसा भूरिदावा शश्वत्तमं बर्हिरा वाज्यस्थात्॥

अर्थ – हे वर्षक इन्द्र, तुम्हारे लिये मधुर और वर्षक सोम पवित्र क्षरित होते हैं। वही हजारों एवं सैकड़ों असीमित धनों के दाता बलवान निरन्तर यज्ञ में रहते हैं।

अर्थववेद १३-१-२४ घृतपावा

सूर्यस्याश्व हरयः केतुमन्तः सदो वहन्त्यमृताः सुखं रथम्।

घृतपावा रोहितो भ्राजमाजो दिवं देवः पृषतीमा विवेश॥ अथ १३-१-२४

कीलालपाः – ऋग्वेद १०-९१-१४ भाग ८ पू० २९६

यस्मिन्नश्वास ऋषभास उक्षणो वशा मेधा अवसृष्टास आहुताः।

ब्रह्मभ्रूणवृत्रेषु क्विप् ३-२-८७।

बहुलं छन्दसि ३-२-८८।

उपपदान्तेरेऽपि बहुलं क्विप् स्यात्। मातृहा। पितृहा।

छन्दसि लिट्। ३-२-१०५।

भूतसामान्ये। अहं द्यावापृथिवी ततान। तै०ब्राह्मण १-२-१-३३।

लिटः कानज्वा ३-२-१०६

क्वसुश्च ३-२-१०७। छन्दसि लिटः कानक्वसू वास्तः। चक्राणा वृष्णि। यो नों अग्ने अररिवाँ अघायुः।

---

**शाङ्करी** - बहुलम् - मातृहा, पितृहा। मारतं हतवान्, पितरं हतवान् इति विग्रहे बहुलं छन्दसि इति क्विप् सर्वापहारलोपः। "सर्वनामस्थाने चासम्बुद्धौ" इत्यनेनोपधादीर्घः हल्ङ्यादिना सुलोपः "न लोप प्राति०" इत्यादिना नकारलोपः।

आङुपसर्गपूर्वात् ततान तनु विस्तारे धातोः छन्दसि लिट् इत्यनेन भूत सामान्ये लिट् तस्य पित् तिपः णल्, "परोक्षे लिट्" इत्यनेन लिट् तस्यानद्यतन-परोक्षार्थवृत्तेरेव प्रवृत्तिस्वीकारात्। णलुत्तमो वा इति णित्व पक्षे उपधावृद्धिः। चक्राणा कानचि रूपम्। स्थानिवत्वेन लिटिधातोरित्यनेन द्वित्वादिकार्यम्। अररिवाँ क्वसुप्रत्यये रूपम्। दा दाने धातोः लिटः क्वसु द्वित्वादिकार्ये वस्त्वेकाजाद्धसांमित्यनेन इडागमः

---

**तीर्था** - चक्राणा कृ धातोः लिटः कानच् वा इत्यनेन कानच् प्रत्ययः अनुबन्धलोपः "स्थानिवदादेशोऽनल्विधौ" इत्यनेन स्थानिवद्भावाद् "लिटिधातोरनभ्यासस्य" इत्यनेन धातोर्द्वित्वे "पूर्वोऽभ्यासः" इत्यनेन पूर्वस्य कृ इत्यस्य अभ्याससंज्ञा तस्यैव उरत् इत्यनेन अत्वे "उरण् रपरः" इत्यनेन रपरे कर् कृ आन् इति स्थिते "हलादि शेषः" इत्यनेन अभ्यासस्यादिहल् शेषे क कृआन "इको यणचि" इत्यनेन ऋकारस्य यणि "अट्कुप्वांनुम्व्यवायेऽपि" इत्यनेन णत्वे छन्दानुरोधात् चक्राणा इति।

अररिवाँ - रा दाने धातोः छन्दसि लिट् इति सूत्रेण भूत सामान्ये लिट् लकारः तस्य "क्वसुश्च" इति सूत्रेण क्वसु आदेशे अनुबन्धलोपे "लिटिधातोरन-

**विमर्श**- कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनये चारुमग्नये॥ १४

अर्थ - जिस अग्नि में घोड़ों, बलीवृषों और पौरुषहीन मेषों की अश्वमेघ यज्ञ में आहुति दी जाती है, जो जल पीते हैं, जिनके ऊपर सोम रहता है और यज्ञानुष्ठाता है, उस अग्नि के लिए हम हृदय से अच्छी कल्याणकारी स्तुति बनाते है।

णेश्छन्दसि ३-२-१३७।

ण्यन्ताद्धातोश्छन्दसि इष्णुच् स्यात्तच्छीलादौ। वीरुधः पारयिष्णवः। भुवश्च ३-३-१३८। अस्मात् केवलात् प्राग्वत्। भविष्णु। छन्दसि परेच्छायां क्यच् उपसंख्यानम् (वा०) क्याच्छन्दसि ३-२-१७० उप्रत्ययः स्यात्। अघायु। एरजधिकारे जवसवौ छन्दसि वाच्यौ। जवे याभिर्यूनः। ऊर्त्वो मे जवः। देवस्य सवितुः सवे।

---

नतो नञ् समासः उगिदचां सर्वनामस्थानेऽधातोः इत्यनेननुमागमः दीर्घादटि समानपादे इत्यनेन नस्य रुत्वम् आतोऽटिनित्यम् इत्यनेन रोः पूर्वस्यातो नित्यमनुनासिकः।

**पारयिष्णवः** – पारं गन्तुं शीलमेषाम्। पृधातोर्ण्यन्तादिष्णुचि णेर्लोपं बाधित्वा अयामन्ताल्वाय्येत्न्विष्णुषु इत्यनेन इष्णुचिणेरयादेशो भवति। छन्दसीति– ''सुप आत्मनः'' इत्यत्र आत्मन इति विशेषणात् परेच्छायां न प्राप्नोतीति वचनम्। क्याच्छन्दसि ''सनासनभिक्ष उः'' इति सूत्रात् उः वर्तते। क्यजन्ताद्धातोः उः स्याच्छन्दसि। अघायुः। पर स्थाघमिच्छतीत्यर्थे क्यच्। अश्वाघस्यात् इत्यनेन क्यचिपरे अघशब्दाकारस्य आत्वम्। तदन्तादुप्रत्ययः। जवसवौ। जु इति सौत्रो धातु षूङ्

---

भ्यासस्य'' इत्यनेन धातोर्द्वित्वे रा रा वस् इति स्थिते पूर्वस्य अभ्याससंज्ञायां ह्रस्वे लस्वेकाचादघसाम् इत्यनेन वसोः इडागमः ''आतो लोप इटि च'' इत्यनेन आकारलोपे ''अत्वसन्तस्य चाधातोः'' इत्यनेन उपधादीर्घे ''उगिदचां सर्वनामस्थानेऽधातोः इत्यनेन नुमागमे अररिवान्स् सु इति स्थितेः हल्ङ्याभ्यो इत्यादिना सोर्लोपे संयोगान्तस्यलोपः इत्यनेन स्कारस्य लोपे ''दीर्घादटि समानपदे'' इत्यनेन नकारस्य रुत्वे। अघायुः इति पदेपरतः आतोऽटिनित्यमित्यनेन आकारस्यनित्यमनुनासिकः रु इत्यस्य ''भोभगोऽपूर्वस्य योऽसि'' इत्यनेन रु इत्यस्य यत्वे तस्य लोपः शाकल्यस्येत्यनेन यकारस्य लोपे अररिवाँ अघायुः इति साधुः।

तीर्था तु शाङ्करी व्याख्यैवावगन्तव्या।

---

**विमर्श–** ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः।
अश्वा इव सजित्वरी र्वीरुधः पारयिष्णवः॥

अर्थ – ओषधियों! तुम फूल और फलवाली होवो। तुम रोगी के प्रति हृष्ट पुष्ट और सन्तुष्ट होवो। तुम घोड़ों के समान रोगों के लिए जयशील होओ, और पुरुषों को रोगों से पार ले जाने वाली होओ।

मन्त्रे वृषेषपचभनविदभूवीरा उदात्तः (३-३-९६) वृषादिभ्यः क्तिन् स्यात् सञ्चोदात्तः। वृष्टिं दिवः। सुम्नमिष्टये। पचात्पक्तीरुत। इयं ते नव्यसी मतिः। वित्तिः। भूतिः। अग्न आ याहि वीतये। रातौ स्यामोभयासः।

---

प्राणिगर्भविमोचने। णु प्रसवैश्वर्ययोः। आभ्याम् "ऋदोरप्" इति अपि प्राप्तेऽज्विधीयते। स्वरे भेदः।

"स्त्रियां क्तिन्" इत्यतः क्तिन् इति वर्तते। वीराः इति पञ्चम्यर्थे प्रथमा तदाह वृषादिभ्य इति। वृष्टिमिति। वृष सेचने भ्वादिः। इष्टये। इषु इच्छायां तुदादिः। पक्तिः। (डु) पचष् पाकेभ्वादिः। मतिः। मन ज्ञाने दिवादिः। वित्तिः। विद सत्तायां दिवादिः। भूतिः। भू सत्तायां भ्वादिः। वीतये। वी गतिव्याप्तिप्रजननकान्त्यसनखादनेषु अदादिः। दातौ। दा दाने अदादिः।

---

**तीर्था** - वृष्टिम् वृष् सेचने धातोः "मन्त्रेवृषेषपञ्चमनविद् भूवीरा उदात्तः" इति सूत्रेण क्तिन् प्रत्ययः अनुबन्धलोप वृष्ति इति ष्टुत्वे कृदन्तत्वात् प्रातिपदिकसंज्ञायाम् अम विभक्तिः वृष्टिम् इति। एवमेव सर्वे प्रयोगा अवगन्तव्याः।

---

**विमर्श**- भविष्णुः मैत्रायणी संहिता १-८-१ पृष्ठ ६६

सत्येनाग्निहोत्रं जुहोति य एवंविद्वान् जुहोति भविष्णुः सत्यं भवति य एवंवेद, कस्मै कमग्निहोत्रं हूयता.....

वृष्टिम् ऋ०वे० २-६-५

स नो वृष्टिं दिवस्परि स नो वाजमनर्वाणम्।। सनः सहस्रिणीरिषः।

अर्थ - वही अग्नि हमारे लिए अन्तरिक्ष से वृष्टि प्रदान करते हैं। वे हमें महान् बल और अनन्त प्रकार के अन्न प्रदान करें।

सुम्नसिष्टये - ऋग्वेद ६-७०-४

घृतेन द्यावापृथिवी अभीवृते घृतश्रिया घृतपृचा घृतावृधा।

उर्वी पृथ्वी होतृवूर्ये पुरोहिते ते इद्विप्रा ईलते सुम्नमिष्टये॥४॥

अर्थ - आकाश और जल द्वारा ढकी हुई हैं और जल के आश्रय हैं। वे जल से ओतप्रोत हैं, जलवर्षाविधायिनी और विस्तृता हैं, प्रसिद्धा और यज्ञ में पुरस्कृता हैं। यज्ञ के लिए विद्वान् उनसे सुख की याचना करते हैं।

षचात्पक्तीरुत - ऋ०वे० ४-२४-७

य इन्द्राय सुनवत्सोममद्य पचात्पक्तीरुत भृज्जाति धानाः।

प्रति मनायोरुचथानि हर्यन्तस्मिन्दधद्वृषणं सुकमिन्द्रः॥ ४-२४-७

**विमर्श**- अर्थ- जो आज इन्द्र के लिए सोमाभिषव करते हैं, जो पुरोडाश प्रस्तुत करते हैं, और भर्जनयोग्य जव को भूजते हैं, उसी स्तोत्रकारी स्तोत्र को स्वीकार करके इन्द्र यजमान की अभिलाषा के पूरकबल को धारण करते हैं।

इयं ते नव्यसी मतिः ऋग्वेद ८-७४-७

इयं ते नव्यसी मतिरग्ने अधाय्यस्मदा।
मद्रं सुजात सुक्रतो अमूर दस्मातिथे॥

अर्थ - हे अच्छी प्रकार से प्रज्वलित शुभकर्म करने वाले प्रसन्न एवं अतिथिवत् पूज्य अग्नि तुम्हारी उस समय की जाने वाली नइ स्तुति हम लोगों की अपनी है उसे स्वीकार करें।

वित्तिः शुक्लयजुर्वेदीय वाजसनेय संहिता अध्याय १८-१४

अग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे ग्राम्याश्च मे पशव आरण्याश्च मे वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे यज्ञेन कल्पन्ताम्।

अर्थ - पृथ्वी पर अग्नि की तथा अन्तरिक्ष में जल की अनुकूलता, छोटे-छोटे तृण तथा पकते ही सूखने वाली औषधियाँ, हलचलाकर उत्पन्न होने वाले तथा बिना हल चलाए उत्पन्न होने वाले अन्न, गाय भैंस आदि ग्राम्य पशु तथा हाथी आदि जंगली पशु, पूर्व लब्ध तथा भविष्य में प्राप्त होने वाला धन विद्यमान पुत्र आदि तथा अपना उपार्जित किया हुआ धन यज्ञ के फल के रूप में मेरे पास सुरक्षित रहें।

वीतिः अथर्ववेद २०-५९-३

अग्न आयाहि वीतये ऋ० वेद ६-१६-१० हिन्दी भा० ४ पृष्ठ ३७३

अग्न आयाहि वीतये गृणानो हव्य दातये। निहोता सन्सि बर्हिषि।

अर्थ - हे अग्नि तुम हव्य भक्षण करने के लिए आगमन करो, और देवों के समीप हव्य वहन करने के लिए स्तुति भाजन होकर होता रूप से कुश के ऊपर उपवेशन करो।

राति - ऋ०वे० १-३४-१ हिन्दी भाग पृष्ठ २९९

त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना।
युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः॥

अर्थ - हे अश्विनी कुमारद्वय! हमारे लिए तुम आज तीन बार आओ। तुम्हारा रथ और दान बहुव्यापी है। जिस प्रकार रश्मियुक्त दिन और हिमयुक्त रात्रि का परस्पर नियम रूप सम्बन्ध है उसी प्रकार तुम दोनों के बीच भी सम्बन्ध है। अनुग्रह करके तुम मेधावी ऋत्विकों के वशवर्ती हो जाओ।

छन्दसि गत्यर्थेभ्यः ३-३-१२९।

ईषदादिषूपपदेषु गत्यर्थेभ्यो धातुभ्यश्छन्दसि युच् स्यात्। खलोऽपवादः। सूपसदनोऽग्निः।

अन्येभ्योऽपि दृश्यते। ३-३-१३०।

गत्यर्थेभ्यो ये अन्ये धातवस्तेभ्योऽपि छन्दसि युच् स्यात्। सुवेदनामकृणोब्रह्मणे गाम्।

छन्दसि लुङ्लङ्लिटः। ३-४-६।

धात्वर्थानां सम्बन्धे सर्वकालेष्वेते वा स्युः। पक्षे यथास्वं प्रत्ययाः। देवो देवेभिरागमत्। लोडर्थेलुङ्। इदं तेभ्योऽकरं नमः। लङ्। अग्निमद्य होतारमवृणीतायं यजमान। लिट्। अद्या मभार। अद्य म्रियते इत्यर्थः।

लिङर्थे लेट्। ३-४-७।

विध्यादौ हेतुहेतुमद्भावादौ च धातोर्लेट् स्याच्छन्दसि।

सिब्बहुलं लेटि। ३-१-३४।

इतश्च लोपः परस्मैपदेषु (३-४-९७)

लेटस्तिङामितो लोपो वा स्यात् परस्मैपदेषु।

---

**शाङ्करी** - सूपसदनोऽग्निः, इषद्दुःसुषुकृच्छाकृच्छ्राषु खल् ३-३-१२६ इत्यनेन प्राप्त खलोऽपवादः। सु इत्यस्य युवोरनाकौ इत्यनेन अनादेशः।

सुवेदनाम् - विद्ज्ञाने धातोः युच् "पुगन्तलघूपधस्य च" इत्यनेन गुणः।

---

**विमर्श**- तैत्तिरीय संहिता ७-५-२०-१। यज्ञि बीज वर्ष्टा पर्यन्यः पक्ता सस्यं सुपिपल्ला ओषधयः स्वधिचरणेयं सूपसदनोऽग्निः स्वध्यक्षमन्तरिक्षंसुपावः पवमानः सूपस्थाना द्यौः ...........

सुवेदनामकृणोर्ब्रह्मणे। ऋ०वे० १०-११२-८ हिन्दी भाग ८ पृष्ठ ४४१

प्रत इन्द्र पूर्व्याणि प्र नूनं वीर्या वोचं प्रथमा कृतानिं।

सीतनमन्युरश्रथायो अद्रिं सुवेदनामकृणोर्ब्रह्मणे गाम्॥

अर्थ - हे इन्द्र पूर्वकाल में सब से आगे तुमने जो वीरत्व दिखाया था, उसकी मैं प्रशंसा करता हूँ। जल के लिए तुमने मेघ को फाड़ा था और स्तोता के लिए गाय की प्राप्ति सुलभ कर दी थी।

लेटोऽडाटौ ३-४-९४(

लेटः अट् आट् एतावागभौ स्तस्तौच पितौ। वा० सिब्बहुलं णिद्वक्तव्यः। वृद्धिः। प्रण आर्यूंषि तारिषत्। सुपेशसस्करतिजोंषिषद्धि। आसा विष दर्शसानाय। इलोपस्य चाभावे। पताति दिद्युत्। प्रियः सूर्ये प्रियो भवाति।

---

शाङ्करी - छन्दसि लुङलङिति। आगमत् आङुपसर्गपूर्व गम्लृ गतौ लृदित्वात् पुलाद्युतादित्वात् च्लेः अङ्। अकरम्। कृमृदृरुहिभ्यश्छन्दसि इति च्लेरङ् ''ऋदृशोऽङिगुणः गुणः'' इति गुणः। अवृणीतेति। वृञ् वरणे। लङ्। क्रयादिभ्यः स्ना। ई हल्यघोः इति ईत्वम्। इतश्च लोपः परस्मैपदेषु। पित्झिसिप्मिपामिकारस्य लोपः परस्मैपदे इत्यर्थः। लेटोऽडाटो। आगमौ स्तः तौ च पर्यायेण न तु यौगपद्येन अड्विधिसामर्थ्यात्। अन्यथा सवर्णदीर्घे कृते विशेषाभावात्। तौ च पितौ। आडुत्तमस्येति सूत्रान्मण्डुकप्लुत्या पिच्चेत्यनुवर्तत इत्यर्थः। तारिषत्। तृ प्लवनसंतरणयोः। लिङर्थे लेट्। लेटः स्थाने तिप्। सिब्बहुलं लेटि इत्यनेन सिप्। इकारपकारावितौ इति- लेटोऽडाटावित्यनेन अट् लघुपधगुणः आर्धधातुकस्येड्वलादेः इत्यनेनेडागमः आदेशप्रत्ययोः इत्यनेन षत्वम्। आसाविषत्। आङ्पूर्वात् षुप्रसवैश्वर्ययोरित्यस्मालेट्। तस्य तिप् मध्ये सिब्बहुलं लेटीत्यनेन सिप् तस्य इडागमः

---

तीर्था - तारिषत् तृधातो लिङर्थे लेट् इत्यनेन लेट् तस्य तिबादेशः।

---

विमर्श- देवो देवेभिरागमत् ऋ०वे० १-१-५ हिन्दी भाग १ पृष्ठ ४४

अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः। देवो देवेभिरागमत्॥ ऋ०वे० १-१-५

अर्थ - हे अग्नि! तुम होता, अशेष बुद्धिसम्पन्न या सिद्धकर्मा सत्यपरायण अतिशय कीर्ति से युक्त और दीप्तिमान् हो। देवों के साथ इस यज्ञ में आओ।

इयं तेभ्योऽकरं नभः। ऋग्वेद (१०-८५-१७) हिन्दी भाग ८

सूर्यायै देवेभ्यो मित्राय वरुणाय च।

ये भूतस्य प्रचेतसय इदं तेभ्योऽकरं नमः॥ ऋ०वे० १०-८५-१७ पृष्ठ २२४

अर्थ - सूर्या (सूर्य की पत्नी) देवगण मित्र और वरुण प्राणियों के शुभचिन्तक हैं। उन्हें मैं नमस्कार करता हूँ।

अग्निमद्य होतारमवृणीताय यजमानः (मैत्रायणी संहिता ४-१३-९ पृष्ठ ४६४

णिद् वद्भावाद् उकारस्य वृद्धिः आबादेशः। आदेशप्रत्यययोः इत्यनेन षत्वम्। सिपः इलोपस्यचाभावेति। सिब्बहुलं लेटि इतश्च लोपः परस्मैपदेषु इति सूत्राभ्याम् इति भावः। पताति पत्लृ पतने। भवाति। जोषिषत्। जुषी प्रीतिसेवनयोः। लिङर्थे लेट्। अनुदात्तेत् न्यत्ययेन परस्मैपदम्। आसाविषत्। आङ्पूर्वात् षुप्रसवैश्वर्ययोरित्यस्माल्लेट्। लिङर्थे लेट् इत्यर्थः। पूर्वसूत्रात् सर्वेषुप्रसूत्रेषु छन्दसीत्यनुवर्तते। लेटः तिप् मध्ये सिप् द्वयोरिकारयोर्लोपः, मध्येऽडागमः। पताति, भवाति, पत्लृपतने, भू सत्तायाम् उभे आडागमस्योदाहरणेन।

**शाङ्करी** – सिब्बहुलमिति – लेटि परे धातोः परे सिप् स्यात्। अयं विकरण इति नागेशः इतश्च लोपेति। लिटोऽडाटौ' इत्यतः लेट इति, वैतोऽन्यत्र इत्यत वेति चानुवर्तते। तदाह लेटस्तिङामिति। परस्मैपदेषु इत्यत्र षष्ठ्यर्थेनेन षत्वे सप्तमी। परस्मैपदग्रहणेनात्मनेपदे इड्वहिमहिङ्षु नास्य प्रवृत्तिः। न च आत्मने पदे "टित आत्मनेपदानां टेरे" इत्यनेनास्य बाधितत्वा नास्य प्रवृत्तिः इति टेरेत्व स्यान्य लकारेषु चारितार्थ्यात् परत्वादिदं बाधकं स्यात्। लेटो। अट् आटौ आगमौ तौ च पर्यायेण न तु यौगपद्येन अड्विधा न सामर्थ्यात्। अन्यथा सवर्णदीर्घे कृते विशेषाभावात्। आडुत्तमस्य पिच्च इति सूत्रान्मण्डूकप्लुत्या पिच्चेत्यनुवर्तते इत्याशयेनाह तौ च पिताविति। णिद्भावस्य फलम् अचोऽञ्णिति इत्यनेन वृद्धिः। तारिषत्। तृप्लवनतरणयोः भ्वादिः। लेट् तस्य तिप् मध्ये सिब्बहुलं लेटि इत्यनेन सिप् इकारपकावितौ लेटोऽडादौ इत्यनेनाट् णिद्वद्भावात् ऋकारस्य वृद्धिः "आर्धधातुकस्येड्वलादेः" इत्यनेन सिप इडागमः।

---

**विमर्श**- पचन् पक्तीः पचन् पुरोडाशं गृह्णन्नग्नया आज्यं गृह्णनसोमायाज्यं बध्नन्निन्द्राग्निभ्यां छाग सूपस्था अद्य देवो वनस्पतिरभवदग्नया............

अ॒द्य म॒मार ऋग्वेद १०-५५-५

वि॒धुं द॑द्रा॒णं सम॑ने ब॒हूनां॒ युवा॑नं॒ सन्तं॑ पलि॒तो ज॑गार।

दे॒वस्य॑ पश्य॒ काव्यं॑ महि॒त्वाद्या म॒मार॒ स ह्यः समा॑न॥

अर्थ- जिस समय (कालात्मक) इन्द्र युवा रहते हैं, उस समय सब कार्य करते हैं, उन द्रावक के भय से युद्ध में कितने ही शत्रु भागते हैं, परन्तु अनेक कालों का युद्ध काल उन का ग्रास कर लेता है। उनकी महत्वजनक जनता देखिए कि, वे कल जीवित थे आज मर गये।

जोषिषत्। जुषी प्रीतिसेवनयोः लिङर्थे लेट् तस्य तिवादेशः सिब्बहुलं लेटि इत्यनेन सिप् इकऽपकाराविती लेटोऽडाटावित्यनेन अट् लघुपधगुणः "आर्धधातुकस्येड्" इत्यनेनेडागमः "आदेशप्रत्यययोः" इत्यनेन षत्वम्। आसाविषत्। आङ् पूर्वात् षुप्रसवैश्वर्ययोरित्यस्माल्लेट्। तस्य तिप् मध्ये सिब्बहुलेटीति सिप् तस्येडागमः णिद्वत्वमावाद् उकारस्य वृद्धिः आवादेशः। आदेशप्रत्यययोः इत्यनेनषत्वम्। सिप इलोपस्य चाभावेति सिब्बहुलं लेटि इतश्च लोपेति सूत्राभ्यामिति भावः। पताति। पत्लृपतेन। भवाति।

---

**तीर्था** – तारिषत् – तॄ धातोः "लिङर्थे लेट्" इत्यनेन लेट् तस्य तिबादेशः अनुबन्धलोपः मध्ये "सिब्बहुलं लेटी"त्यनेन सिप् अनुबन्धलोपः "आर्धधातुकस्येड्वलादेः" इत्यनेन सिप इडागमः तस्यैव सिब्बहुलं णिद्वक्तव्य इत्यनेन णिद्वद्भावे "अचोऽञ्णिति" इत्यनेन ऋकारस्य वृद्धिः "आदेशप्रत्ययो" इत्यनेन षत्वे तारिषत्। इति।

जोषिषत् – जुषी (प्रीतिसेवनयोः) धातोरिकार उच्चारणार्थः "लिङर्थे लेट्" इत्यनेन लेट् लकार तस्य "तिप्तस्झिसिप्थस्थे"त्यादिना प्रथमपुरुषैकवचने तिबादेशः अनुबन्धलोपः मध्ये "सिब्बहुलं लेटि" इत्यनेन सिप् तस्य आर्धधातुकत्वात् "आर्धधातुकस्येड्वलादे" इत्यनेनेडागमः लेटोऽडाटौ इत्यनेनाडागमः पुगन्तलघुपधस्य चेत्यनेनोकारास्य गुणे आदेशप्रत्ययो इत्येनेन षत्वे जोषिषत् इति।

आसाविषत् – आङ् उपसर्गपूर्वात् षु (प्रसवैश्वर्ययोः) धातोः "लिङर्थे लेट्" इत्यनेन लेट् लकारः तस्य "तिप्तस्झिसिप्थस्थ०" इत्यादिनातिवादेशः अनुबन्धलोपः मध्ये "सिब्बहुलं लेटि" इत्यनेन सिप् इतश्च लोपः परस्मैपदेषु इत्यनेनेकारलोपः आसु सत् इति स्थिते "आर्धधातुकस्येड्वलादेः" इत्यनेन सिपः इडागमः अनुबन्धलोपः "लेटोऽडाटौ" इत्यनेन लेटः अडागमः "धात्वादेः षः सः" इत्यनेन षकारस्य सत्वे "सिब्बहुलं णिद्वक्तव्यः" इत्यनेन सिपः णिद्वद्भावेः "अचोञ्णिति" इत्येनेनोकारस्य वृद्धाववादेशे च "आदेशप्रत्यययोः" इत्यनेन सिपः सकारस्य षत्वे आसाविषत् इति।

---

**विमर्श**– तारिषत् शुक्लयजुर्वेद माध्यनदिन संहिता अध्याय २३ मन्त्र ३२

दधिक्राव्णों अकारिषं जिष्णोरश्वस्य वाजिनः।
सुरभि नो मुखां करत् प्रण आयूंषि तारिषत्॥ २३-३२

स उत्तमस्य (३-४-९८)

लेडुत्तमसकारस्य वा लोपः स्यात्। करवाव। करवामः।

टेरेत्वम्। आत ऐ (३-४-९५) लेट आकारस्य ऐ स्यात्। सुतेभिः सुप्रयसा भादयैते। आतामित्याकारस्य ऐकारः। विधिसामर्थ्यादाट ऐत्वं न। अन्यथा हि ऐटमेव विद्ध्यात्। यो यजाति यजात इत्।

---

**शाङ्करी** - करवाव (डु) कृञ् करणे तुदादिः, ततो वस् तनादिकृञ्भ्यः उः धातोः गुणः रपरः। लेटोऽडाटौ इत्याट्। तस्य पित्वेनाङित्वाद् विकरणस्योकारस्य गुणावादेशौ। अत उत्सार्वधातुके इति उत्वाभावश्च। स उत्तमस्य इत्यनेन सलोप

---

**तीर्था** - पताति - (पद् गतौ दिवादिः, अनुदात्तेत् व्यत्ययेन परस्मैपदम् तस्मात् ''लिङर्थे लेट्'' इत्यनेन लेट् इति न्यासकारः), सुबोधिनीकारस्तु पत्लृ पतने भ्वादेः परस्मैपदे तस्मात्''लिङर्थे लेट्'' इत्यनेन लेट् लकारः तस्य तिप्तस्झिसिप्थस्थेत्यादिना तिबादेशः अनुबन्धलोपः लोटोऽडाटौ इत्यनेनाडागमः सिब्बहुलं लेटि इत्यनेन सिपः इतश्चलोपः परस्मैपदेषु इत्यनेन च सिपः इडागमः चाभावे पताति इति।

भवाति। भू धातोः लिङर्थे लेट् इत्येनन लेट् लकारः तस्य तिप्तसझिसिप्थस्थेत्यादिना तिबादेशः अनुबन्धलोपः लेटोऽडाटौ इत्यनेन आडागमः ''सार्वधातुकार्धधातुकयोः'' इत्यनेन गुणोऽवादेशे ''सिब्बहुलं लेटि'' इत्यनेन सिपः ''इतश्चलोपः परस्मैपदेषु'' इत्यनेनेकार लोपस्य चाभावे भवाति इति।

---

**विमर्श**- अर्थ - अध्वर्यु, ब्रह्मा उद्गाता होता और क्षता महिषी को उठाकर पढ़ते हैं कि सवोरी को धारण कर चलते, जयशील, गमनशील, वेगगामी अश्व का हमने संस्कार किया है। मन्त्रपाठ से हमारे मुखों को सुगन्धित किया है। अश्वाभि मानी देव हमारी बाल्या आदि तीनों अवस्थाओं को बढ़ायें।

भवाति, पताति - ऋग्वेद ४-१६-१७

तिग्मा यदन्तरशनिः पताति कस्मिंश्चिच्छूर मुहुके जनानाम्।

घोरा यदर्य समृतिर्भवात्यध स्मा नस्तन्वो बोधि गोपाः॥ ४-१६-१७

अर्थ - हे शूर इन्द्र मनुष्यों के किसी भी युद्ध में अगर हम लोगों के मध्य में तीक्ष्ण अशनिपात हो अथवा शत्रुओं के साथ अगर हम लोगों का घोर युद्ध हो, तब हे स्वाभिन्! तुम हम लोगों के शरीर की रक्षा करना।

**शाङ्करी-** पक्षे। तदभावेकरवावः इति। टेरत्वम् - ''टित आत्मने पदानां टेरे'' इत्यनेन आताम् इत्यत्र टेः - आम् इत्यस्येत्यर्थः। नित्यत्वात्। न च आमः आकारस्यापि लेट्त्वात कथं न तस्यापि ऐकार इति वाच्यम्? कृतेऽपि ऐकारेऽकृतेऽपि टेरत्वस्य प्राप्तत्वात् न च शब्दान्तरस्य प्राप्तत्वाद् नित्योऽयं विधिः क्वचित्कृताकृतप्रसङ्गित्व मात्रेणापि नित्यता स्वीकारात्। मादयैते। मदतृप्तियोगे चुरादिः ततो स्वार्थे णिच् उपधावृद्धिः। मादि ततो लिङर्थे लेट् आत्मनेपदे प्रथमपुरुष द्विवचने आताम्। अत्र प्रथमाकारस्य आत ऐ इत्यनेन ऐकारः। ''लेटोऽडाटौ'' इत्यनेन लेट् आडागमः। मादि आ ऐते। ''वृद्धिरेचि'' इत्यनेन आ ऐ इत्यनयोः स्थाने ऐ वृद्धिः इकारस्य गुणेऽयादेशे। विधिसामर्थ्यादिति। यद्याट ऐत्वमिष्टं स्यात्तदा आकारस्य स्थाने लेटोऽडाटौ इति सूत्रेणैकारविधानमेव क्रियेत आडागमस्य फलमाह यजाति यजात इति। यजदेवपूजासंगतिकरणदानेषु भ्वादिः। आडागमस्य स्थाने ऐकार विधाने उक्तोदाहरणे न स्याताम्। अत्र लेटोऽडाटौ इत्यनेन आडागमः।

---

**तीर्था -** मादयैते - मद् तृप्ति योगे चुरादिः ततः स्वार्थे सत्यापपशरूपवीणेत्यादि सूत्रेण स्वार्थे णिच् अनुबन्धलोपः अत उपधाया इत्यनेनोपधावृद्धिः आयादेशः। ततो ण्यन्तात् लिङर्थे लेट् इत्यनेन लेट्लकारः तस्य स्थाने प्रथमपुरुषस्य द्विवचने आताम् लेटोऽडाटौ इत्येनातामित्यस्य आडागमः मादय् आ आताम् इति स्थिते आत ऐ इत्यनेनाताम् इति प्रथमाकारस्यैकारादेशः मादय् आ ऐताम् ''टित आत्मने पदानां टेरे'' इत्यनेन आमित्यस्य एत्वम्। ''वृद्धिरेचि'' इत्यनेन आकारैकारयोः स्थाने ऐ वृद्धौ मादयैते इति। यजति, यजात इति यज देव पूजासंगतिकरणदानेषु भ्वादिः। आडागमस्योदाहरणे।

---

**विमर्श-** यो यजाति यजात इत् (ऋग्वेद ८-३१-१) हिन्दी भाग ६

यो यजाति यजात इत्सुनवच्च पचाति च। ब्रह्मेदिन्द्रस्य चाकनत्। ८-३१-१

अर्थ - जो यजमान यज्ञ करता है, जो पुनः यज्ञ करता है, वह सोम का अभिषव और पुरोडाशादि का पाक करता है और इन्द्र के स्तोत्र की बार बार कामना करता है।

वैतोऽन्यत्र। (३-४-९६)

लेट एकारस्य ऐ स्याद्वा 'आत ऐ' इत्यस्य विषयं विना। पशूनाभीशै। ग्रहा गृह्यान्तै। अन्यत्र किम्। सुप्रयसा भादयैते।

उपसंवादाशङ्कयोश्च। (३-४-८)

पणबन्धे आशङ्कायां च लेट् स्यात्। अहमेव पशूनामीशै। नेज्जिह्मायन्त्यो नरकं पताम।

---

**शाङ्करी** – वैतो – अन्यत्र किमपेक्ष्यते जिज्ञासायां पूर्व सूत्रविषयादितिलभ्यते सन्निधानात् तदाह वृत्तौ आत ऐ इत्यादिः। ईशै इति। ईश ऐश्वर्ये अदादिः ततो लेट् उत्तमपुरुषैकवचने इट्। इतश्चेति इटो लोपो नास्ति परस्मैपदेष्वित्युक्तेः। ईकारस्य "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे तस्यानेन ऐः। गृह्यान्तै। क्र्यादिगणीय ग्रह उपादाने धातोः कर्मवाच्ये लेट् ततो भावकर्मणोः इत्यनेनात्मनेपदम्। लेटः प्रथमपुरुषबहुवचने झादेशः। "लेटोऽडाटौ" इत्यनेनाडागमः। तस्य "सार्वधातुके यक्" रेफस्य गहिज्यावयिव्य-धीत्यादिना संप्रसारणम् ऋकारः, "झोन्तः" इत्यनेनान्तादेशः, टेरेत्वे तस्य वैतोन्यत्र इत्यनेनैत्वं यकः अकारेण सवर्णदीर्घः, वृद्धिरेचि इत्यनेन वृद्धिः। अन्यत्रेति मादयैते इत्यत्र आत ऐ इत्यनेन आट आकारस्य ऐकारो जातः। अत एवात्र टेरेकारस्य नैत्वम्।

उपसंवादेवि। उपसंवादः – पणबन्धः – कर्तव्येबन्धनम्, तस्मिन् आशङ्कायां – संभावनायां च लेट् भवति। उपसंवादे – अहमेव पशूनामीशै। पताम् – पत्लृपतने भ्वादिः, तत उत्तमपुरुषबहुवचने मस् उपसंवादाशङ्कयोश्च इत्यनेन लेट्, लेटोऽडाटौ इत्यनेनाडागमः स उत्तमस्य इत्यनेन सलोपः।

---

**तीर्था** – ईशै – अदादि गणीय ऐश्वर्यार्थक ईश धातोः उपसंवादाशङ्कयोश्च इत्यनेन लेट् तस्यस्थाने उत्तमपुरुषैकवचने इट् प्रत्ययः अनुबन्धलोपः इकारस्य "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे तस्य वैतोऽन्यत्र इत्यनेन ऐकारे ईशै इति।

गृह्यान्ते – क्र्यादिगणीय उपादानार्थक ग्रहधातोः कर्मणि लिङर्थे लेट् इत्यनेन लेट् लकारः तस्य स्थाने भावकर्मणोः इत्यनेन आत्मनेपदबहुवचने झप्रत्ययः लटोऽडाटौ इत्यनेनाडागमः, "सार्वधातुके यक्" गृह् य आ झ इति स्थिते झोऽन्तः इत्यनेन झकारस्य अन्तादेशः "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे ग्रहिज्यावयिव्यधीत्यादिना संप्रसारणे रेफस्य ऋकारे गृह्य आ अन्ते येन रेफस्य ऋकारे इति स्थिते वैतोऽन्यत्रेत्यनेन एकारस्य ऐकारे अकाराणां सवर्णदीर्घे गृह्यान्ते इति।

हलः श्नः शानज्झौ। (३-१-८३) हलः परस्य श्नः शानजादेशः स्याद्धौ परौस्तभान। छन्दसि शायजपि। (३-१-८४) अपि शब्दाच्छानच्। हृग्रहोर्भश्छन्दसि इति हस्य भः। गृभाय जिह्वया मधु। बधान देव सवितः। अनिदिताम् इति बध्नातेर्नलोपः। गृभ्णामि ते। मध्वा जभार।

---

**शाङ्करी** - छन्दसि शाय - छन्दसि श्नः शायजप्यादेशः स्याद्धौ परे। गृभायेति क्र्यादिगणीय ग्रह उपादाने धातोर्लेट् तस्य मध्यमपुरुषैकवचने सिप् तस्य हिः ततः क्र्यादिभ्य श्ना ग्रहिज्यावयिव्यधि इत्यादिना रेफस्य ऋ संप्रसारणम्। बधान। बन्धबन्धने क्र्यादिः। ततो लोट्। तस्मिन् परे "क्र्यादिभ्यः श्ना" इति श्ना लोटः सेर्हि अतो हेः इति हेर्लुक्। अनिदितां हल इत्यनेन बध्नातेर्नलोपः। गृभ्णामि। ग्रह उपादाने धातोर्लट् तस्योत्तमपुरुषैकवचने मिप् "क्र्यादिभ्यः श्ना" इति श्ना "हृग्रहोर्भश्छन्दसि" इत्यनेन हकारस्य भकारः। जभार। हृ हरणे लिट् तस्य णल् ऋकारस्य वृद्धिः हकारस्य भकारः। गृह्णामि जहार इत्यर्थः।

---

**तीर्था** - गृभाय - ग्रह उपादाने धातोर्लोट् तस्य मध्यमपुरुषैकवचने सि(प्) तस्य सेर्ह्यपिच्चेत्यनेन हि आदेशः तस्य स्थाने छन्दसिशायजपि इत्यनेन शायजादेशः शकारस्य "लशक्वतद्धिते" इत्यनेन निवृत्तिः चकारस्य "हलन्त्यम्" इत्यनेन हृग्रहोर्भश्छसि इत्यनेन हकारस्य भकारः गृभाय इति।

बधान - बन्ध बन्धने धातोर्लोट् तस्य मध्यमपुरुषैकवचने सि(प्) तस्य सेर्ह्यपिच्च इत्येनन हि आदेशः क्र्यादिभ्यः श्ना इत्यनेन श्ना अनुबन्धलोपः छन्दसि शायजपि इति सूत्रे अपि शब्दात् हलः श्नः शानज्झौ इत्यनेन श्नः स्थाने शानजादेशः अनुबन्धलोपः बधान इति।

गृभ्णामि - ग्रह् उपादाने धातोर्लट् उत्तमपुरुषैकवचने मि(प्) तस्य क्र्यादिभ्यः श्ना इत्यनेन श्नाप्रत्ययः ग्रहिज्यावयिव्यधीत्यादिना रेफस्य संप्रसारणेन ऋकारः हकारस्य हृग्रहोर्भश्छन्दसि इत्यनेन हकारस्य भकारः अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन णत्वे गृभ्णामि इति।

---

**विमर्श**- इशै काठकसंहिता २५-१ पृष्ठ २६४ सोऽब्रवीद्वार्यं वृणा अहनेव पशूनामीशा इति तेऽमन्यन्त ..........

ग्रहागृह्यान्ता - सोऽब्रवीद्वरं वृणै मदग्रा एव वो ग्रहा गृह्यान्ता इति तस्मादेन्द्र वायवाग्रा ग्रहो गृह्यन्ते तैत्तिरीय संहिता ६-४-७ पृष्ठ २७६

व्यत्ययो बहुलम्। (३-१-८५)

विकरणानां बहुलं व्यत्यय स्याच्छन्दसि। आण्डा शुष्णस्य भेदति। मिनत्तीति प्राप्ते। जरस्या भरते पतिः म्रियत इति प्राप्ते। इन्द्रो वस्तेन नेषतु। नयतेर्लेटि शप्सिपौ द्वौ विकरणौ। इन्द्रेण युजा तरुषेम वृत्रम्। तरेम इत्यर्थः तरनेर्विध्यादौ लिङ्। उः शप् सिप चेति त्रयो विकरणाः।

सुप्तिङुपग्रहलिङ्गनराणां कालच्स्वरकर्तृयङां च।

व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन॥

धुरि दक्षिणायाः। दक्षिणस्यामिति प्राप्ते। चषालं ये अश्वयूपायतक्षति। तक्षन्तीति प्राप्ते। उपग्रहः परस्मैपदात्मनेपदे। ब्रह्मचरिणमिच्छते। इच्छतीति प्राप्ते। मधोस्तृप्ता इवासते। मधुन इति प्राप्ते। नरः पुरुषः। अधा स वीरैर्दशभिर्वियूयाः। वियूयादिति प्राप्ते। कालः कालवाची प्रत्ययः। श्वोऽग्नीनाधास्यमानेन। लुटो विषयेलृट्। तमसो गा अदुक्षत्। अधुादिति प्राप्ते। मित्र वयं चे सूरयः। मित्रावयमिति प्राप्ते। स्वरव्यत्ययस्तु वक्ष्यते। कर्तृशब्दः कारकमात्रपरः। तथा चतद्धचिनां कृत्तद्धितानां व्यत्ययः। अन्नादाया अण्विषये अच्। अवग्रहे विशेषः। यङो यशब्दाराभ्य लिङ्याशिष्यङ् इति ङकारेण प्रत्याहारः। तेषां व्यत्ययो भेदतीव्यादिरुक्त एव।

---

**शाङ्करी** - व्यत्ययः - व्यतिपूर्वादि णो भावे एरच् - व्यतिक्रम्य गमनम्विषयान्तरे विधानम्। अन्यस्यान्यविषयेऽवगाहनमित्यर्थः। व्यत्ययप्रकारं दर्शयति। रौधादिकाद् भिदिरविदारणात् श्नमिप्राप्ते शप्। भिनत्तीति प्राप्ते भेदति। मरते। मृङ् प्राणत्यागे

---

**तीर्था** - जभार - भ्वादिगणीय हृञ् हरणे धातोर्लिट् लकारः तस्य प्रथमपुरुषैकवचने तिप् प्रत्ययः तिपः स्थाने ''परस्मैपदानां णलतुथुस्'' इत्यादिना णलादेशः अनुबन्धलोपः धातो ''लिटि धातोरनभ्यासस्य'' इत्यनेन द्वित्वं ''पूर्वोभ्यासः'' इत्यनेन पूर्वस्य हृ इत्यस्याभ्यास संज्ञा ऋ इत्यस्य उरत् इत्यनेनात् रपरे हर् हृ अ हलादिः शेषः इत्यनेन आदिहलेशेषे ह हृ अ इति स्थिते कुहोश्चुः इत्यनेन श्चुत्वेन हकारस्य झकारः ''अभ्यासे चर्चः'' इत्यनेन जश्त्वेन झकारस्य जकारः ''सार्वधातुकार्धधातुकयोः'' इत्यनेन ऋकारस्य गुणे रपरे ''अत उपधायाः'' इत्यनेनाकारस्य वृद्धिः जहार इति हृग्रहोर्भश्छन्दसि इत्यनेन हकारस्य झकारे जभार इति।

**शाङ्करी** – तुदादिः। श प्राप्ते शप्। म्रियत इत्यर्थः। शेकृते रिङ्यिङावितिभावः द्विविकरणं दर्शयति नेषतु। नयतेर्लोट् तिप्, एरुः, सिप्, तस्मात् परः शप् धातोर्गुणः, सिपः षत्वम्। अत्र शप् विकरण एव प्राप्तो व्यत्ययेन सिबपि। त्रिविकरणमुदाहरति। तरुषेम। तृ प्लवनतरणार्थकधातोर्विध्यादौ लिङ् तस्य मस्, यासुडागमस्तन उः सिप् शप् त्रयो विकरणाः। मसः सकारस्य "नित्यं ङितः" इति लोपः। अत्र सिब् विकरणः यद्यपि "सिब्बहुलं लेटि" इत्यनेन लेट् लकार एव विहितस्तथापि बहुल् ग्रहणाल्लिङ्यपि भवति। तरुष यास् मस् यासः सकारस्य लिङः सलोपोऽन्त्यस्येत्यनेन लोपः। अतो येयः। लोपो व्योर्वलि। अत्र तरु इत्युप्रत्ययान्तस्य सिपं प्रत्यङ्गत्वात् सार्वधातुक इति गुणः प्राप्तः सिबन्तस्य तरुष् इत्यस्य शपः अकारे परे उकारस्य लघुपधगुणश्च प्राप्तो बाहुलकान्न भवति। इमानि त्रीण्युदाहरणानि व्यत्ययो बहुलमिति सूत्रस्य। अस्यैव सूत्रस्योपरि महाभाष्यकारस्येष्टिरस्ति सा चेत्थं – सुप्तिङुपग्रहेति – शास्त्रकृत्पाणिनिराचार्य एषां सुप्रभृतीनां व्यत्ययं – व्यतिक्रममिच्छति। सोऽपि – तथाविधव्यत्ययोऽपि बाहुलकेन सिध्यति। विकरणप्रकरणे व्यत्यय इत्येव सिद्धे बहुलग्रहणं सर्वविधि व्यभिचारार्थः तदाह सुप्तिङिति। बहूनर्थान् लाति – आदत्ते इति बहुलं तस्य भावो बाहुलकम्। मनोज्ञादित्वाद् वुञ्।

---

**तीर्था** – आण्डाशुष्णस्य भेदति। भिनत्ति, इति प्राप्ते। भिदिर् विदारणे इति रुधादिगणीयधातोः इर इत्संज्ञा वाच्या इति वार्तिकात् इर इत्संज्ञायां भिद् इत्यस्माद् लट्लकारेतिबादेशे "रुधादिभ्यः श्नम्" इत्यनेन श्नमि शकारस्य "लशक्वतद्धिते" इत्यनेन मकारस्य हलन्त्यमित्यनेनेत्संज्ञायां मित्वादन्त्यादचः परत्वेन विधाने भिनद्ति इति स्थिते "खरि च" इत्यनेन चर्त्वे दकारस्य चर्त्वे भिनत्तीति प्राप्ते श्नमः विकरणस्य स्थाने "व्यत्ययो बहुलम्" इत्यनेन व्यत्ययेन "कर्तरि शप्" इत्यनेन शपि अनुबन्धलोपे "पुगन्तलघूपधस्य" चेत्यनेनेकारस्य गुणे भेदति इति।

मरते पतिः म्रियते – इति प्राप्ते – तुदादिगणीय मृङ् धातोः अनुबन्धलोपे वर्तमाने लट् इत्यनेन लटि तस्य स्थाने "तिप्तस्झि" इत्यादिना तादेशे "तुदादिभ्यः शः" इत्यनेन श विकरणे शकारस्य "लशक्वतद्धिते"इत्यनेनेत्संज्ञायां मृ अ त इति स्थिते "रिङ्शयग्लिङ्क्षु" इत्यनेन ऋतो रिङादेशे "म्रि अ त" इति अचिश्नुधातुभ्रुवां य्वोरियुङवङौ" इत्यनेन ऋकारस्येडादेशे अनुबन्धलोपे म्रियते इति प्राप्ते, "व्यत्ययो बहुलम्" इत्यनेन विकरण व्यत्यये श इत्यस्य स्थाने "कर्तरि शप्" इत्यनेन शपि अनुबन्धलोपे "सार्वधातुकार्धधातुकयोः" इत्यनेन ऋकारस्य गुणे रपरे चे मरते इति।

**शाङ्करी** – १. सुब्व्यत्ययः– दक्षिणायाः। दक्षिणाशब्दस्य सप्तम्या एकवचने "सर्वनाम्नः स्याड्ढ्रस्वश्च" इत्यनेन स्याटिह्रस्वे च कृते दक्षिणस्याम् इति प्राप्ते, तस्या व्यत्ययेन षष्ठ्या एकवचने याडापः इत्यनेन याडागमे कृते दक्षिणायाः इति।

२. तिङ्व्यत्ययः – संवरणार्थक तक्ष धातोः प्रथमपुरुषबहुवचने तक्षन्ति इत्यस्य स्थाने तक्षतीति एकवचने व्यत्ययः।

उपग्रहः – परस्मैपदात्मनेपदे – इच्छते – तुदागणपठितेच्छार्थक इषु धातुः परस्मैपदीततो लट् लकारे तस्य स्थाने तिबादेशे प्राप्ते तं प्रबाध्य व्यत्ययेन आत्मनेपदे तादेशे "तुदादिभ्यः शः" इत्यनेन श प्रत्ययः अनुबन्धलोपस्ततः "इषुगमियमां छः" इत्यनेन षु इत्यस्य स्थाने छादेशे "छे च" इत्यनेने तुकि अनुबन्धलोपे "स्तो श्चुना श्चुः" इत्यनेन तकारस्य श्चुत्वेन चकारे इच्छति इत्यस्य स्थाने इच्छते इति।

लिङ्ग्व्यत्ययः – मधु शब्दः नित्य नपुंसकलिङ्ग अतस्तस्याः षष्ठ्या एकवचने ङसि "नपुंसकस्य झलचः" इत्यनेन नुमागमे मधुन इति भाव्यम्, किन्तु लिङ्गव्यत्ययेन पुल्लिङ्गे मधोः – मधु शब्दात् षष्ठ्या एकवचने ङसि अनुबन्धलोपे "घेर्ङिति" इत्यनेन उकारस्य गुणेन ओकारे ङसिङसोश्च इत्यनेन पूर्वरूपे सकारस्य रुत्वे विसर्गे च कृते मधोः इति।

---

**तीर्था** – नेषतु (अत्र द्वौ विकरणौ सिष् शपौ) भ्वादिगणीय णीञ् प्रापणे धातोर्लोट् लकारे तस्य स्थाने प्रथमपुरुषस्यैकवचने तिबादेशे कर्तरि शप् इत्यनेन शपि अनुबन्धलोपे सिब्बहुलं लेटि इति सूत्रेण "व्यत्ययो बहुलम्" इति सूत्रनिर्देशात् बाहुलकात् सिब् विकरणः इकारपकारयोरित्संज्ञालोपाभ्यां निवृत्तौ एरुः इत्यनेन इकारस्योकारे आदेशप्रत्यययोः इत्यनेन षत्वे नेषतु इति। लोकेनयतु इति।

तरुषेम (अत्र त्रयो विकरणाः उः शप् सिप्) भ्वादिगणीय तृप्लवनतरणार्थकाद् धातोर्विधिलिङ् लकारे तस्य स्थाने उत्तमपुरुषबहुवचने मस् आदेशे व्यत्ययो बहुलम् इति सूत्रनिर्देशात् उः सिप् शप् इति विकरणत्रये यासुट् परस्मैपदेषूदात्तो ङिच्च इत्यनेन यासुटि अनुबन्धलोपे तृ उस् अ यास् मस् इति स्थिते "लिङः सलोपोऽनन्त्यस्य" इत्यनेन यासः सकारस्य लोपः, नित्यं ङितः इत्यनेन मसः सकारस्य लोपः (तृ उ स् अ या म) इति स्थिते अतो येयः इत्यनेन या इत्यस्य इय् आदेशे लोपो व्योर्वलि इत्यनेन यकारस्य लोपः "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे रपरे च "आदेशप्रत्यययोः" इत्यनेन षत्वे उकारस्य "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे प्राप्ते बाहुलकात् तदभावे तरुष इम इति स्थिते आद्गुणः इत्यनेन अकारेकारयोः स्थाने एकार गुणे तरुषेम इति लोके तरेम इति। तृ धातोः शपि यासुटि च कृते तर या भस् अन्यत् सर्वं पूर्वत ज्ञेयम्।

**शाङ्करी** – नरः – पुरुषः तस्य व्यत्ययः वियूयात् इत्यस्य स्थाने मध्यमपुरुषस्यैकवचने वियूयाः इति। अदादिगणीय युधातुः मिश्रणे। विपूर्वात् युधातोः, आशिषि लिङ् तस्य प्रथमपुरुषे तिबादेशे प्राप्ते तस्य व्यत्ययेन मध्यमपुरुषस्यैकवचने सिबादेशे इकारपकारावितौ सस्य रुत्वे विसर्गे च वियूयाः इति। कालशब्देन कालवाचीप्रत्ययो गृह्यते, तस्य व्यत्ययः– श्वोऽग्नीनाधास्यमानेन इति वाक्ये श्वशब्दप्रयोगेणानद्यतने लुट्'' इत्यनेन लुट्लकारस्य प्राप्ति किन्तु कालव्यत्ययेन ''लृट् शेषे च'' इत्यनेन सामान्य भविष्यत् काले लृट् लकारः। हल् व्यत्ययः – अधुक्षत् इत्यस्य स्थाने अदुक्षत् इति। अच् व्यत्ययः मित्रा इत्यस्य स्थाने मित्र इति। स्वरव्यत्ययः – गवामिव श्रियसे इत्यत्र तुमर्थे से सेनसे असेन इत्यादिना क्सेन् कृते ञ्नित्यादिना आद्युदात्ते प्राप्ते व्यत्ययेन मध्योदात्तता। कारकमात्र परेति। तेन तद्वाचिनां कृत्तद्धितानां व्यत्ययः। कृदन्त व्यत्ययः – अन्नादाय। इत्यत्र अन्नमत्तीति विग्रहे कर्मण्यण् इत्यनेनाणि कृते ''अत उपधायाः'' इत्यनेनोपधावृद्धौ अन्न आदस्तस्मै अन्नादाय इति। अचि तु उपधावृद्ध्यभावे अन्न अदाय इति। यद्यपि सवर्णदीर्घे अन्नादाय इत्युभयत्रापि समानमेव रूपम्, तथापि अवग्रहे पदपाठे उभयोर्मेयोर्भेदः – अणि अन्न आदाय इति, अचि तु अन्न अदाय इति प्रतीयत एव। अत्र अण् प्रत्यय प्राप्तौ व्यत्यत्येन अच् प्रत्ययः। यङ्व्यत्ययः। अत्र यङ्शब्देन ''सार्वधातुके यक्'' ३-१-६७ इति सूत्रस्थ यशब्दादारभ्य लिङ्याशिष्यङ् (३-१-८६) इति सूत्रस्थ ङकारेण यङ्प्रत्याहारो गृह्यते। अस्मिन् यङ् प्रत्याहारे ''सार्वधातुके यक्'' ३-१-६७, कर्तरि शप् ३-१-६८, दिवादिभ्यः श्यन् ३-१-६९, वा भ्राश भ्लाशभ्रमु.... ३-१-७०, इत्यादि सूत्रोल्लिखितधातुभ्यो विकल्पेन श्यन् विदधाति, ''यसोऽनुपसर्गात्'' ३-१-७१, संयसश्च ३-१-७२, इत्यादि सूत्रैरारम्य लिङ्याशिष्यङ् ३-१-८६ इति सूत्रेण विधीयमानाङ् प्रत्ययं यावत् यङ् प्रत्याहारो गृह्यते। तेषामपि परस्परं व्यत्ययो भवति। यथा रुधादिगण पठित विदारणार्थकाद् भिदिरधातोः रुधादिभ्यः श्नम् (३-१-७८) इत्यनेन श्नमि प्राप्ते व्यत्ययेन ''कर्तरि शप्'' (३-१-६८) इत्यनेन शपि भेदति इति उक्त एव।

---

**तीर्था** – विशेषः– अत्र तीर्थायां यद्वक्तव्यं तत्सर्वं शाङ्करी व्याख्ययैवावगन्तव्यम्।

---

**विमर्श**– तं शिशीता स्वध्वरं सत्यं सत्वानमृत्वियम्।

उतो नु चिद्य ओहत आण्डा शुष्णस्य भेदत्यजैः स्वर्वतीरपोरभतामन्येकसमे।

अर्थ – हे स्तोताओं, सुन्दरयज्ञ वाले अविनाशी, धनी और यागयोग्य इन्द्र को स्तुतिद्वारा संस्कृत करो। जो इन्द्र यज्ञ के अभिमुख जाते हैं। वे शुष्म के अण्डों

को तोड़ते हैं और स्वर्गीय जल को जीतते हैं। इन्द्र और अग्नि सारे शत्रुओं को मारें।

**विमर्श-** जरसा मरते पतिः। ऋ०वे० १०-८६-११ हिन्दी भाग ८ पृष्ठ २४४

इन्द्राणिमासु नारिषु सुभगामहमश्रवम्।

नह्यस्या अपरं च न जरसा भरते पतिर्विश्वस्मादिन्द्र उत्तरः।

अर्थ – (इन्द्र की इन्द्राणी के प्रति उक्ति) सब स्त्रियों में मैंने इन्द्राणी को सौभाग्य वाली सुना है। अन्यान्य पुरुषों के समान इन्द्राणी के पति को बुढ़ापे में पड़ कर नहीं मरना पड़ता है। अतः इन्द्र सर्वश्रेष्ठ हैं।

इन्द्रेण युजा तरुषेम वृत्रम् (ऋ०वे० ७-४८-२) हिन्दी भाग ५ पृ० २४८

ऋभुर्ऋभुभिरभिवः स्यामविभ्वो विभुभिः शवसा शवांसि।

वाजो अस्माँ अवतु वाजसाता बिन्द्रेण युजा तरुषेम वृत्रम्॥

अर्थ – हम तुम्हारे द्वारा विभु (प्रथित) हैं। तुम लोग समर्थ हो। हम तुम्हारी सहायता से समर्थ होकर तुम्हारे बल द्वारा शत्रुओं को दबायेंगे वाज नाम के ऋभु युद्ध में हमारी रक्षा करें। इन्द्र को सहायक पाकर हम वृत्र के हाथ से बच जायेंगे।

सुबन्तव्यत्ययः

धुरि दक्षिणायाः – ऋ०वे० १-१६४-९) भाग २ पृष्ठ २६४

युक्ता मातासीद्धुरि दक्षिणाया अतिष्ठद्गर्भो वृजनीष्वन्तः।

अमीमेद्वत्सो अनु गामपश्यद्विश्वरूप्यं त्रिषु योजनेषु॥

अर्थ- पिता (द्युलोक) अभिलाष पूरण में समर्थ पृथिवी का भार वहन करने के लिए नियुक्त थे। गर्भभूत जल राशि मेघमाला के बीच थी। पुत्रस्थानीय वृष्टि के जलने शब्द किया है और तीन (मेघ-वायु-राश्मि) के योग से विश्वरूपिणी गौ (पृथिवी) हुई शस्याच्छादित।

तिङन्तव्यत्ययः। चषालं ये अश्वयूपाय तक्षति – ऋ०वे० १-१६२-६ हि०भाग २ पृष्ठ २३७

यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति।

ये चार्वते पचनं संभरन्त्युतो तेषामभिगूर्तिर्न इन्वतु॥

अर्थ – जो यूप के योग्य वृक्ष काटते हैं, जो यूप वृक्ष ढोते हैं, जो अश्व को बाँधने के यूप के लिये काष्ठमण्डप आदि तैयार करते हैं, जो अश्व के लिये पाक पान का संग्रह करते हैं, हमारा संकल्प भी उन्हीं का हो।

नर – पुरुषव्यत्ययः। अघा स वीरैर्दशभिर्वियूयाः। ऋ०वे० ७-१०४-१५ हिन्दी भाग ५ पृष्ठ ४५२

लिङ्याशिष्यङ्। (३-१-८६)

आशिर्लिङि परे धातोरङ् स्याच्छन्दसि। वच उम्। मन्त्रं वोचेमाग्नये। दृशेरग्वक्तव्यः। पितरं च दृशेयं भातरं च। अङि तु ऋदृशोऽङि गुणः। (७-४-१६) इति।

छन्दस्युभयथा (३-४-११७)

धात्वधिकार उक्तः प्रत्ययः (छन्दसि) सार्वधातुकार्धधातुकोभयसंज्ञः स्यात्। वर्धन्तु त्वा सुष्टुतयः। वर्धयन्त्वित्यर्थः। आर्धधातुकत्वाण्णिलोपः। विश्रृंण्विरे। सार्वधातुकत्वात् श्नुः श्रृभावश्च। हुश्नुवोः सार्वधातुके (६-४-

---

**शाङ्करी** - वाचम् - वचेराशीर्लिङो मस् अङ्। वच उम् १७-४-२०) इति सूत्रेण वच उमागमः। लिङो यासुडागमः। लिङः सलोपोऽनन्त्यस्य १७-२-७९ इत्यनेन सलोपः। तस्य अतो येयः (१७-२-८०) इत्यनेन इयादेशः। लोपो व्योर्वलि। ६-१-६६ इत्यनेन यलोपः। दृशेयम्। भ्वादिगणीयदृशिर प्रेक्षणे धातोर्लिङ् लकारः तस्य मिप् ''तस्थस्थमिपां तान्नन्तामः'' इत्यनेन मिपः अमादेशः ''लिङ्याशिष्यङ्'' इत्यनेन अङ् प्रत्यये प्राप्ते तं प्रबाध्य दृशेरग्वक्तव्यः इति वार्तिकेनाक् प्रत्ययः तस्य कित्वात् ''क्ङिच्चे''त्यनेन गुणनिषेधः यासुडागमादिः पूर्ववज् ज्ञेयः। अङितु गुणे दर्शेयम् इति स्यात्।

---

**तीर्था** - तीर्था तु शाङ्करीव्याख्ययैव गतार्था।

---

**विमर्श**- अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य।
अधा स वीरैर्दशभिर्वियूया: यो मा मोघं यातुं धानेत्याह॥

अर्थ - यदि मैं (वशिष्ठ) राक्षस हूँ अथवा मैं पुरुष की आयु नष्ट करता हूँ तो मैं अभी मर जाऊँ, अथवा मुझे जो वृथा राक्षस कहकर सम्बोधित करता है, उसके दस वीर पुत्र (सारा परिवार) नष्ट हो जायें। या वियुक्त हो जाँय।

पितरं च दृशेयं मातरं च। ऋ०वे० (१-२४-१) हिन्दी भाग १ पृष्ठ २१३
कस्यं नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम।
को नो मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च॥

अर्थ - देवों में किस श्रेणी के किस देवता का सुन्दर नाम उच्चारण करूँ? कौन - कौन मुझे फिर इस पृथिवी पर रहने देगा, जिससे मैं पिता और माता का दर्शन कर सकूँ।

८७) इति यण्। आदृगमहनजनः किकिनौ लिट् च (३-२-१७१) आदन्तादृवर्णान्तादृगमादेश्च किकिनौ स्तस्तौ च लिड्वत्। बभ्रिर्वज्रं पपिः सोमं ददिर्गाः। जग्मिर्युवा। जघ्निर्वृत्रममित्रियम्। जज्ञिः। लिड्वद्भावादेव सिद्धे ऋच्छत्यृताम् (७-४-११) इति गुणबाधनार्थं कित्त्वम्। बहुलं छन्दसि। (७-१-१०३) इत्युत्वम्। ततुरिः। जगुरिः।

---

**शाङ्करी** - धातोः इत्यस्याधिकारे विहित प्रत्ययेषु केचन सार्वधातुकसंज्ञकाः केचन चार्धधातुकसंज्ञकाः सन्ति। लोके तेषामस्ति विभागः सामान्यरूपेण, यथा तिङ्शित्सार्वधातुकम् (३-४-११३), आर्धधातुकं शेषः। (३-४-११४), लिट् च। (३-४-११५), लिङाशिषि। ३-४-११६ एषु लिट् च, लिङाशिषि, इति द्वाभ्यां सूत्राभ्यां विधीयमाना आर्धधातुकसंज्ञा सार्वधातुकसंज्ञायां, अपवादभूता। वेदे तु छन्दस्युभयथा। (३-४-११७) इति सूत्रनिर्देशात् क्वचित् सार्वधातुकसंज्ञाविषयेऽपि आर्धधातुकसंज्ञा प्रवर्तते, यथा लोके चुरादिगणीय वृद्ध्यर्थक वृध् धातो "सत्यापपाशरूपवीणा" इत्यादि सूत्रेण स्वार्थे णिञ् विधीयते णिजन्तस्य धातुत्वात् ततो लोट् लकारः तस्य स्थानेझिः तस्य "झोऽन्तः" इत्यनेन अन्तादेशः "एरुः" इत्यनेनेकारस्योकारे वृधि अन्तु इति स्थिते लोट्लकारस्य सार्वधातुकसंज्ञकत्वात् "पुगन्तलघूपधस्य च" इत्यनेन ऋकारस्य "सार्वधातुकार्धधातुकयोः" इत्यनेनेकारस्य गुणेऽयादेशे च वर्धयन्तु इति भवति। वेदे तु लोटः छन्दस्युभयथा इत्यनेनार्धधातुकत्वात् तस्मिन् परे "णेरनिटि" इत्यनेन णेर्लोपे वर्धन्तु इति भवति।

**विश्रृण्विरे** - अत्र वि उपसर्गपूर्वकात् श्रवणार्थकश्रुधातोर्लिट् लकारः तस्य झादेशः तस्येरेच् आदेशः, लिट् लकारस्य लोके "लिट् च" इत्यनेनार्धधातुक संज्ञैव भवति, किन्तु वेदे सार्वधातुकसंज्ञकत्वात् "श्रुवः श्रृ च" इत्यनेन श्रु इत्यस्य स्थाने श्रृ आदेशः शपोऽपवादः श्नुप्रत्ययश्च "रषाभ्यां णोनः समानपदे" इत्यनेन णत्वम्, "हुश्नुवो सार्वधातुके" इत्यनेन इरे इति सार्वधातुके परे श्नु उकारस्य यणि विश्रृण्विरे इति रूपं सम्पद्यते। बभ्रिर्वज्रम्। जुहोत्यादि गृणीय (डु) भृञ् धारणपोषणयोः धातोः कि अथवा किन् प्रत्यये लिङ्वद्भावे च "लिटि धातोरनभ्यासस्य" ६/९/८। इत्यनेन धातार्द्वित्वे पूर्वस्य अभ्यास संज्ञा "उरत्" ७-४-६६ इत्यनेन ऋकारस्य अत्वे रपरे "हलादिः शेषः" ७-४-६० एकशेषः "अभ्यासे चर्चः" ८-४-५४ इत्यनेन जश्त्वे ऋकारस्य यणि कि किन् प्रत्यययोः कृदन्तत्वात् प्रातिपदिकत्वात् सौ रुत्वे विसर्गे बभ्रिः।

पपिः सोमम् (सोम पान किया)। भ्वादिगणीय पानार्थकात् पाधातोः

''आदृमहन्'' इत्यादि (३-२-१७१) सूत्रात् कि अथवा किन् प्रत्ययः लिड्वद्भावाद् धातोर्द्वित्वं पूर्वस्याभ्याससंज्ञा ह्रस्वः अभ्यासात् परस्य आकारस्य अजादावार्धधातुके किति परे लोपः पपि इत्यस्य कृदन्तत्वात् प्रातिपदिकत्वात् सौ रुत्वे विसर्गे पपिः।

ददिर्गाः। (गायों को दिया) जुहोत्यादिगणीयदानार्थकदाधातोः कि अथवा किन् प्रत्ययः शेषं पूर्ववत्।

जग्मिर्युवा - भ्वादिगणीय गमनार्थकाद् गम् (गम्लृ गतौ) धातोः कि अथवा किन् प्रत्ययः अनुबन्धलोपः लिड्वद्भावात् पूर्ववत् द्वित्वादिकार्ये अभ्यास गकारस्य ''कुहोश्चुः'' इत्यनेन चुत्वेन जकारः किति प्रत्यये परे गम् उपधा अकारस्य ''गमहनजनखनघसां लोपः क्ङित्यनङि'' इत्यनेन लोपः जग्नि इत्यस्य प्रातिपदिकत्वात् सौ रुत्वे विसर्गे जग्मिः इति। (युवक गया)।

जघ्निर्वृत्रममित्रियम्। (शत्रुवृत्र को मारा)

अदादिगणीय हन् (हिंसागत्योः) धातोः कि अथवा किन् प्रत्ययः लिडवद्भावात् द्वित्वादिकार्ये अभ्यासगकारस्य ''कुहोश्चुः'' इत्यनेन चुत्वेन जकारः अभ्यासात् परस्य हनः हकारस्य ''अभ्यासाच्च'' ७-३-५५? इत्यनेन कुत्वं सौ रूत्वे विसर्गे जघ्निः इति।

जज्ञिः। दिवादिगणीयप्रादुर्भावार्थक (जनी) जन धातोः कि अथवा किन् प्रत्ययः लिड्वद्भावाद् द्वित्वादिकार्यं पूर्ववत् द्वितीय जनेः उपधा अकारस्य ''गमहनजनखनघसां लोपः क्ङित्यनङि'' इत्यनेन लोपः ज ज् न् इ इति स्थिते तवर्गनकारस्य चवर्गजकारेण योगे ''स्तोः श्चुना श्चुः'' ८-४-४० इत्यनेन श्चुत्वेन ञकारः जञोर्ज्ञः जज्ञिः इति।

लिड्वद्भावादेवेति - आदृगमहन इत्यादि प्रकृतसूत्राद् विधीयमानकिकिन् प्रत्ययोः कित्व किमर्थं लिड्वद्भावेना ''असंयोगाल्लिट् कित् (१-२-५)'' इत्यनेनैव लिटः कित्वारोपेण ''क्ङिति च'' (१-१-५) इत्यनेनैव गुणनिषेधसिद्धिः इति प्रश्नः? लिटिपरे विशेष गुणविधानार्थम् ''ऋच्छत्यृताम्'' ७-४-११ इति सूत्रेण प्राप्त गुणस्यापि बाधनार्थं कित्वम्।

आगमहन इत्यादि सूत्रे आकारस्योच्चारणे मुखसुखार्थं दकारग्रहणं न तु तकारः अत एव तपस्तत्कालस्य विषयाभावात् दीर्घस्यापि ॠकारस्य ग्रहणं भवति। ततुरिः। तॄप्लवनतरणयोः भ्वादिः। जगुरिः गॄनिगरणे तुदादिः।

तॄधातोः गॄधातोश्च ''आदृगमहन..'' इत्यादिना कि प्रत्ययः द्वित्वात् परत्वात् ''बहुलं छन्दसि'' (७-१-१०३) इत्यनेनोत्वे प्राप्ते ''द्विर्वचनेऽचि'' (१-१-५९)

इत्यनेन निषेधादुत्वाभावे पूर्वं द्वित्वं प्रथमस्याभ्याससंज्ञा तस्य उरत् (७-४-६६) इत्यनेन अत्वे रपरत्वं तत उत्तरस्यं ऋकारस्योत्वं रपरत्वं ततुरिः। एवमेव गृधातोः जगुरिः। "कुहोश्चुः" (७-४-६३) इत्यनेनाभ्यास गकारस्य जकार इति विशेषः।

---

**तीर्था** – अत्र तीर्थायां यद्वक्तव्यं तत्सर्वं शाङ्करी व्याख्ययैवावगन्तव्यम्।

---

**विमर्श**– वर्धन्तु त्वा सुष्टुतयः (ऋग्वेद (७-९९-७)

वषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।

वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः॥ ७-९९-७

अर्थ – विष्णु तुम्हारे लिए यज्ञ में मैंने वषट्कार किया है। शिशिविष्ट (तेजवाले) विष्णु हमारे उस हव्य का आश्रय करो। हव्य को स्वीकार करो। हमारी शोभनस्तुति और वाक्य तुम्हें बढावें। तुम सदा स्वस्ति द्वारा हमारा पालन करो।

विश्रृण्विरे (ऋ०वेद ४-८-६)

ते राया ते सुवीर्यैः ससवांसो विशृण्विरे। ये अग्ना दधिरे दुवः। ४-८-६

अर्थ – जो यजमान अग्नि की परिचर्या करते हैं वे अग्नि का सम्भजन करके धन द्वारा विख्यात होते हैं, और पुत्र पौत्र आदि के द्वारा भी विख्यात होते हैं।

पपिः सोमं ददिर्गाः (ऋ०वे० ६-२३-४) हिन्दी भाग ४ पृष्ठ ४२९

गन्ते यान्ति सवना हरिभ्यां बभ्रिर्वज्रं पपिः सोमं ददिर्गाः।

कर्ता वीरं नर्यं सर्वं वीरं श्रोता हवं गृणतः स्तोमं वाहाः॥

अर्थ – इन्द्र अपने अश्वद्वय के साथ हृदय स्थानीय तीनों सवनों में गमन करते हैं। इन्द्र वज्र धारण करने वाले, अभिषुत सोम के पान करने वाले गो दाता मनुष्यों के हित के लिए बहुपुत्रोपेत पुत्र प्रदान करने वाले और स्तवकारी यजमान के स्तोत्र को श्रवण करने वाले तथा स्वीकार करने वाला हैं।

जग्निर्युवा ऋ०वे० ७-२०-१ हिन्दी भाग ५ पृष्ठ १४१

मन्त्र – उग्रो जज्ञे वीर्याय स्वधावाञ्च क्रिरपो नर्यो यत्करिष्यन्।
जग्मिर्युवा नृषदनमवोभिस्त्राता न इन्द्र एनसो महश्चित्॥

अर्थ – बरनी ओजस्वी इन्द्र वीर्य (प्रकाश) के लिए उत्पन्न हुए हैं। मनुष्य के जिस हितकारी कार्य को करने की इच्छा इन्द्र करते हैं उसे अवश्य ही करते हैं। तरुण और रक्षा के लिए यज्ञ गृह को जाने वाले इन्द्र महापाप से हमें बचावें।

जज्ञिर्बीजं (तैत्तिरीय संहिता ७-५-२०-१) पृष्ठ ३२७

तुमर्थे सेसेनसे असेन् क्से कसेनध्ये अध्यैन् कध्यै कध्यैन्शध्यै शध्यैन् तवैतवेङ् तवेनः। (३-४-९)

से। वक्षे रायः। सेन्। ता वा मेषे। असे। शरदों जीवसे धाः। असेन्। नित्वादाद्युदात्तः। क्से। प्रेषे। कसेन्। गवामिव। श्रियसे। अध्यै। अध्यैन्। जठरं पृणध्यै। पक्षे आद्युदात्तम्। कध्यै कध्यैन्। आहुवध्यै। पक्षे नितस्वरः शध्यै। राधसः सह मादयध्यै। शध्यैन्। वायवे पिबध्यै। तवै। दातवाउ। तवेङ्। सूतवे। तवेन्। कर्तवे।

---

**शाङ्करी** - छन्दसि इत्यनुवर्तते अतः छन्दस्येव से प्रभृतयश्चदश प्रत्ययाः भवन्ति। कस्मिन्नर्थे इति जिज्ञासायां यद्यपि कर्तरिकृत् इति वचनात् कर्तृरूपोऽर्थ उपस्थितो

---

**विमर्श**- जज्ञि बीजं वर्ष्टा पर्जन्यः पक्ता सस्य सुपिप्पला ओषधयः स्वधिचरणेयं सूपसदनोऽग्निः.......

मित्रावरुणा ततुरिम् (ऋ०वेद ४-३९-२ हिन्दी पृष्ठ ५६१ भाग ३

महश्चर्कर्म्यर्वतः क्रतुमा दधि क्राव्णः पुरुवारस्य वृष्णः।

यं पुरुभ्यो दीदिवांसं नाग्निं ददथुर्मित्रावरुणा ततुरिम्॥

अर्थ - हम यज्ञ के सम्पादक है। हम बहुतों द्वारा वरणीय महान औ अभीष्टवर्षी दधिक्रा देव की स्तुति करेंगे। हे मित्रावरुण तुम दोनों दीप्तिमान अग्नि की तरह स्थित तथा त्राणकर्त्ता दधिक्रा देव को मनुष्यों के उपकार के लिए धारण करते हो।

जगुरिः (ऋ०वेद १०-१०८-१) हिन्दी भाग ८ पृष्ठ ४१५

किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः।

कास्मेहितिः का परितकम्यासीत्कथं रसाया अतरः पयांसि॥

अर्थ - सरमा, तुम क्या किसी प्रार्थना के लिए यहाँ आई हो? यह मार्ग तो बहुत दूर का है। इस मार्ग पर आते समय पीछे की ओर दृष्टि फेरने पर नहीं आना हो सकता। हमारे पास ऐसी कौन सी वस्तु है। जिसके लिए तुम आई हो? कितनी रातों में आई हो? नदी के जल को पार कैसे किया?

जघ्निर्वृत्रममित्रियम् - (ऋ०वेद ९-६१-२०) हिन्दी भाग ७ पृष्ठ ३३

जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवे दिवे। गोषा उ अश्वसा असि॥

अर्थ- हे सोम तुमने शत्रुवृत्र का वध किया है। तुम प्रति दिन संग्राम को प्रश्रय देते हो। तुम गौ और अश्व देने वाले हो।

भवति तथापि सूत्रे तुमर्थे इति वचनात्। तुमर्थस्य कस्तर्हि तुमर्थ, इति जिज्ञासायां तुमर्थो भाव एव कथं ज्ञायते, "अनिर्दिष्टाः प्रत्ययाः स्वार्थे भवन्ति" इति परिभाषा निर्देशात्। स्वार्थश्च धातूनां, धातोः प्रत्ययानां विधानात् धात्वर्थे एव कस्तर्हि धात्वर्थः भावः साध्यमानतारूपः। घञादि वाच्यो भावस्तु धात्वर्थव्यतिरिक्तः सिद्धरूपः। १. बक्षे इति। "वच परिभाषणे" इत्यतः से प्रत्ययः "चोःकुः" इति कुत्वं सकारस्य "आदेशप्रत्ययोः" ७-३-५९ इत्यनेन षत्वं क ष संयोगे क्षः। २. एष इति "इण् गतौ" धातोः सेन् प्रत्ययः नकारस्येत्संज्ञालोपाभ्यामपहारः। इकारस्य गुणः सस्य षत्वम्। नकारो "ञ्नित्यादिर्नित्यम्" इत्यनेनाद्युदात्तार्थः। ३-४ शरदो जीवसे। जीवप्राणधारणे धातोः असे असेन् प्रत्यययोः एकमेवोदाहरणं स्वरे भेदः। ५. क्से-प्रेषे-प्रोपसर्गपूर्वकात् इणगतौ धातोः क्सेप्रत्ययः ककारस्य "लशक्वतद्धिते" इत्यनेनेत्संज्ञा लोपाभ्यामपहारः, सस्य "आदेशः प्रत्यययोः" इत्यनेन षत्वम् "आद्गुणः" इत्यनेन गुणः। ६ कसेन् - गवामिव श्रियसे - श्रिञ् (सेवायाम्) धातोः कसेन् प्रत्ययः ककारनकारयोः इत्संज्ञा लोपाभ्यामपहारे (असे) श्रि असे इति स्थितौ "अचिश्नुधातुभ्रुवां य्वोरियङुवङौ" इत्यनेन इयङ्। ङकारस्य "हलन्त्यम्" इत्यनेन अकारस्य "उपदेशेऽजनुनासिक इत्" इत्यनेन इत्संज्ञालोपाभ्या-मपहारः। ७-८ अयै अध्यैन् जठरं पृणध्यै - पृ (पालनपूरणयोः) धातोः अध्यै-अध्यैन् प्रत्ययः "क्र्यादिभ्यः श्ना" इत्यनेन श्ना प्रत्ययः "श्नाभ्यस्तयोरातः" इत्यनेन आकारस्य लोपः "रषाभ्यां णोनः समानपदे" इत्यनेन नकारस्य णत्वं "प्वादीनां ह्रस्वः" इत्यनेन ऋकारस्य ह्रस्वे पृणध्यै इति। अध्यैन् पक्षे आद्युदात्तम्।

---

**विमर्श**- ३-४, शरदो जीवसे धाः ऋ०वे० ३-३६-१० हिन्दी भाग ३ पृष्ठ २०१

अ॒स्मे प्रय॑न्धि मघवन्नृजीषि॒न्निन्द्र॑ रा॒यो वि॒श्ववा॑रस्य॒ भूरेः॑।
अ॒स्मे श॒तं श॒रदो॑ जी॒वसे॑ धा अ॒स्मे वी॒राञ्छश्व॑त इन्द्र शिप्रिन्॥

अर्थ - हे ऋजीषी (उच्छिष्ट) सोमवाले इन्द्र? तुम सबके वरणीय हो, हमें प्रभूत धन दो। जीने के लिए हमें सौ वर्ष दो। सुन्दर जबड़ों वाले इन्द्र हमें बहुत वीर पुत्र दो।

६-कस्येन्। गवामिव श्रियते (ऋ०वेद ५-५९-३) हिन्दी भाग ४ पृष्ठ २१०

गवा॑मिव श्रि॒यसे॒ शृङ्ग॑मुत्त॒मं सूर्यो॑ न चक्षू॒ रज॑सो वि॒सर्ज॑ने।
अत्या॑ इव सु॒भ्व॒श्चार॑वः स्थन॒ मर्या॑ इव श्रि॒यसे चेतथा नरः॥

**शाङ्करी** - ९-१० कध्यै कध्यैन्। आहुवध्यै। आङुपसर्गपूर्वकात् (हुदानादानयोः) धातोः कध्यै कध्यैन् प्रत्ययः "लशक्वतद्धिते" इत्यनेन ककारस्य निवृत्तिः (आहु अध्यै इति दशायां) अचिश्नुधातोरिङुवङौ इत्यनेन उवङ्।

११. शध्यै - मादयध्यै - मद तृप्तियोगे इत्यस्मात् ण्यन्तात् शध्यै प्रत्ययः "लशक्वतद्धिते" इत्यनेन शकारस्य निवृत्तिः ण्यन्तात् अकारस्योपधावृद्धिः इकारस्य "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणेऽयादेशे मादयध्यै इति।

१२. वायवे पिबध्यै - पा पाने धातोः शध्यैन् प्रत्ययः शकारस्येत्संज्ञा लोपाभ्यां निवृत्ति "पाघ्राध्मास्थाम्नादाण्दृश्यर्ति०" इत्यादिना पाइत्यस्यपिबादेशः, "अतो गुणे" इत्यनेन पररूपे पिबध्यै।

१३. दातवा उ। दाधातोः तवै प्रत्ययः दा तवै उ इति स्थिते "एचोऽयवायावः" इत्यनेन ऐकारस्य आयादेशः "लोपः शाकल्यस्य" यकारस्य लोपे दातवा उ इति।

१४. तवेङ् - सूतवे - षूङ् (प्राणिगर्भविमोचने) धातोः तवेङ् प्रत्ययः।

१५. तवेन् प्रत्ययः कर्तवे कृधातोः तवेन् प्रत्ययः ऋकारस्य "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे रपरे कर्तवे इति।

---

**विमर्श**- अर्थ - हे मरुतों तुम लोग शोभा के लिये गोभृङ्ग की तरह उत्कृष्ट शिरोभूषण धारण करते हो। दिवस के नेता सूर्य जिस प्रकार से निज रश्मि विकीर्ण करते हैं, उसी तरह लोग वृष्टि के लिए सर्वप्रकाशक तेज धारण करते हो। तुम लोग अश्वों की तरह वेगवान् और मनोहर हो। हे नेता मरुतों तुम यजमान आदि जैसे यज्ञादि कार्य को जानते हैं वैसे ही तुम लोग भी जानते हो।

९-१० कध्यै, कध्यैन् - इन्द्राग्नी आहुवध्यै। हिन्दी भाग ४ पृष्ठ ६०१-२

उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै।
उभा दाताराविषां रयीणामुभा वाजस्य सातयै हुवे वाम्॥

अर्थ - हे इन्द्र और अग्नि! होमद्वारा तुम्हें अनुकूल करने के लिए मैं तुम दोनों को बुलाता हूँ। हव्यद्वारा तुरन्त तृप्ति करने के लिए मैं तुम दोनों को बुलाता हूँ। तुम दोनों अन्न और धन को देने वाले हो। इन दोनों के लाभ के लिए तुम दोनों को बुलाता हूँ।

११. शध्यै - मादयध्यै- ऋ०वेद ६-६०-१३ हिन्दी भाग ४ पृष्ठ ६०१-२

**विमर्श**– उभा वामिन्द्राग्नी आहुवध्या उभाराधसः सह मादयध्यै।

उभा दातारविषां रयीणामुभा वाजस्य सातयें हुवे वाम्॥

अर्थ – हे इन्द्र और अग्नि! होमद्वारा तुम्हें अनुकूल करने के लिए मैं तुम दोनों को बुलाता हूँ। हव्यद्वारा तुरन्त तृप्ति करने के लिए मैं तुम दोनों को बुलाता हूँ। तुम दोनों अन्न और धन को देने वाले हो। इसलिए मैं अन्न लाभ के लिए दोनों को बुलाता हूँ।

१२. शध्यैन – मदाय प्रतिधत् पिबध्यै (ऋ०वेद ४-२७-५) हिन्दी भाग ३ पृष्ठ ५०७-८

अर्थ श्वेतं कलशं गोभिरक्तमापिप्यानं मघवाशुक्रमन्धः।

अध्वर्युभिः प्रयतं मध्वो अग्रमिन्द्रो मदाय प्रतिधत् पिबध्यै शूरो मदाय प्रतिधत् पिबध्यै।

अर्थ – इस समय विक्रमवान् एवं धनवान् इन्द्र श्वेत और शुभ्र पात्रस्थित, गव्यमिश्रित तृप्तिकर, सारसमन्वित एवं अध्वर्युओं द्वारा प्रदत्त सोमलक्षण अन्न का मधुर सोमरस का हर्ष के लिए पहले ही पान करें।

१३. तवै दातवाउ

१४. तवेङ् – सूतवे (ऋ०वेद १०-१८४-३) हिन्दी भाग ८ पृष्ठ ६९०

हिरण्ययीं अरणीयं निर्मन्थतो अश्विनां।

तं ते गर्भं हवामहे दशमे मासि सूतवे।

अर्थ – पत्नी तुम्हारी गर्भस्थ सन्तान के लिए अश्विद्वय जो सुवर्णनिर्मित दो अरणियों का घर्षण किये हुए हैं, दसवें मास में प्रसव होने के लिए तुम्हारी उसी गर्भस्थ सन्तान को हम बुला रहे हैं।

१५. तवेन् – सूतवे (ऋ०वेद १-८५-९) हिन्दी भाग १ पृष्ठ ६४९-५०

त्वष्टा यद्वज्रं सुकृतं हिरण्ययं सहस्रभृष्टिं स्वपा अवर्तयत्।

धत्त इन्द्रो नर्यपांसि कर्तवेऽहन्वृत्रं निरपामौब्ज दर्णवम्॥

अर्थ – शोभनकर्मा त्वष्टा ने जो सुनिर्मित सुवर्णमय और अनेकधार सम्पन्न जो वज्र इन्द्र को दिया था, उसे इन्द्र ने लड़ाई में कार्य साधन करने के लिए, लेकर जलयुक्त मेघ या वृत्र का बध किया था, तथा वारिधारा गिराई थी।

प्रयै रोहिष्यै अव्यथिष्यै। (३-४-१०)

एते तुमर्थे निपात्यन्ते। प्रयातु रोढुमव्यथयितुमित्यर्थः।

दृशे विख्ये च। (३-४-११)

द्रष्टुं विख्यातुमित्यर्थः।

शकि णमुल्कमुलौ। (३-४-१२)

शक्रौतावुपपदे तुमर्थे एतौ स्तः। विभाजं नाशकत्। अपलुपं नाशकत् विभक्तुमपलोप्तुमित्यर्थः।

ईश्वरेतासुन्कसुनौ (३-४-१३) ईश्वरो विचरितो। ईश्वरो विलिखः। विचरितुं - विलेखितुमित्यर्थः।

---

**शाङ्करी** - प्रयै - प्रपूर्वकात् यातेः कै प्रत्ययः। ककारस्येत्संज्ञालोपाभ्यामपहारः। आकारस्य "आतो लोप इटि च" इत्यनेन लोपः। रोहिष्यै - रुह् धातोः इष्यै प्रत्ययः "पुगन्तलघूपधस्य च" इत्यनेना उकारस्य गुणः। दृशे। दृशेः विपूर्वात् "ख्यातेश्च" के प्रत्ययः। कित्वाद् दृशेर्नगुणः विर्वात् ख्यातेः "आतो लोप इटि च" इत्यनेन आकारलोपः।

विभाजमिति। विपूर्वात् भजतेर्णमुल्। णित्वात् "अत उपधायाः" इत्यनेन अकारस्य वृद्धिः। णमुल् इत्यत्र णकारः उपधावृद्ध्यर्थः। कमुल् इत्यत्र ककारः गुणवृद्धिप्रतिषेधार्थः। अपलुपम्। अपपूर्वात् लुपेः कमुल् (अम्) प्रत्ययः।

ईश्वरे। ईश्वरशब्दे उपपदे धातोस्तोसुन्कसुनौ स्तः छन्दसि। विचरितोः। विपूर्वात् चरगतौ धातोः तोसुन् प्रत्ययः। उकारनकारयोरित्संज्ञा। "आर्धधातुकस्येड्वलादेः" इत्यनेनेडागमः, सस्य रुत्व विसर्गौ। ईश्वरो विलिखः। विपूर्वाल्लिखधातोः कसुन् (अस्) प्रत्ययः। कित्वाद् गुणनिषेधः। सस्य रुत्व विसर्गौ।

---

**विमर्श**- प्रयै (ऋ०वेद १-१४२-६) हिन्दी भाग २ पृष्ठ १४९-५०

विश्रयन्तामृतावृधः प्रयै देवेभ्यो महीः।

पावकासः पुरुस्पृहो द्वारो देवी रसश्चतः॥ ६॥

अर्थ - यज्ञद्वार के अभिमानी अग्नि देवता? देवों के आने के लिए यज्ञ द्वार खोल दो। ये द्वार यज्ञवर्द्धक, यज्ञ शोधक बहुत लोगों के लिए श्लाघ्य और परस्पर असंलग्न हैं।

रोहिष्यै (तैत्तिरीय संहिता १-३-१०-२) पृष्ठ १५

कृत्यार्थे तवैकेन्कैन्यत्वनः। (३-४-१४)

न म्लेच्छितवै। अवगाहे। दिदृक्षेण्यः। भूर्यस्पष्टकत्वम्।

अवचक्षे च। (३-४-१५)

रिपुणा नावचक्षे। अवरव्यातव्यमित्यर्थः।

भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्। (३-४-१६)

आसंस्थातोः सीदन्ति। आसमाप्तेः सीदन्तीत्यर्थः। उदेतोः अपकर्तोः। प्रवदितोः। प्रचरितोः। होतोः। आतमितोः। कामभाविजनितोः संभवामः इति श्रुतिः

सृपितृदोः कसुन् (३-४-१७)

भावलक्षणे इत्येव। पुरा क्रूरस्य विसृपो विरप्शिन्। पुरानत पुराज पुरा तत्रुभ्यं आवृदः।

---

**शाङ्करी** – कृत्यार्थे कृत्यानामर्थो भावकर्मणी तयोरेवेति कृत्यानां भावकर्मणोर्विधानात् तत्र एते प्रत्ययाः स्युः छन्दसि। यद्यपि कृत्यानामर्थो 'भव्यगेय इत्यादौ कर्तापि वह्यं स्नानीयमित्यादौ करणादिरपि, तथापि न तत्र कृत्यत्वेन कर्त्रादिषु विधानं, किं तर्हि

---

**विमर्श**- श्रीरस्यग्निस्त्वां श्रीणात्वापः समरिणन् वातस्य त्वा ध्रज्यै पूष्णो रंह्या अपामोषधीनांरोहिष्यै घृतं घृतपावानः पिबत वसां वसा पावनः पिबतान्तरिक्षस्य हविरसि स्वाहा....

अव्यथिष्यै काठकसंहिता ३-७ पृष्ठ १९

रेऽस्यग्निस्त्वा श्रीणात्वापस्समरिणन् वातस्य त्वा ध्राज्यै पूष्णो रह्या उष्मणोऽव्यथिष्या अपामोषधीनां रोहिष्या ऐन्द्रः प्राणो अङ्गे अङ्गे नदीध्यदैन्द्रोऽपानो अङ्गे अङ्गे नदीध्यत्।

दृशे (ऋ०वेद १-५०-१) भाग १ पृष्ठ ४१३-१४

उदुत्यं जात वेदसं देवं वहन्ति केतवः। दृशे विश्वायसूर्यम्॥१॥

सूर्य प्रकाशमान हैं और सारे प्राणियों को जानते हैं। सूर्य के घोड़े उन्हें सारे संसार के दर्शन के लिए ऊपर ले जाते हैं।

विभाजं नाशकत् (मैत्रायणी संहिता १-६-४) पृष्ठ ५३

अग्निर्वै देवा विभाजं नाशक्नुवन् यत्प्राञ्चमहूरन्त्सर्वः पुरोऽभवद् यत्प्रत्यञ्च महूरन्त्सर्वः पश्चाभूवत्।

स्वरूपेण। कृत्यतया विधानं भावकर्मणोरेवति भावः। नं म्लेच्छितवै। म्लेच्छितव्यमित्यर्थः। अवगाहे। गाह् विलोडने इत्यस्मात् केन् एन् प्रत्ययः। दिदृक्षेण्यः। दृशिर् प्रक्षणे धातोः सनन्तात् केन्य (एन्य) प्रत्ययः "सन्यडोः" इत्यनेन धातोर्द्वित्वम् "उरत्" इत्यनेन अभ्यासऋकारस्य अत्वे रपरे "हलादिः शेषः" इत्यनेनादिहलः शेषः ददृंश् स एन्य इति स्थिते 'सन्यतः' इत्यनेनाभ्यास अकारस्येत्वम् सनः अकारस्य "अतो लोपः" इत्यनेन लोपः "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यनेन शकारस्य षकारः "षढोः कः सि" इत्यनेन षकारस्य ककारः दिदृक् ए एन्य इति स्थिते "आदेशः प्रत्यययोः" इत्यनेन सस्य षत्वं कष संयोगे क्षादेशः दिदृक्षेण्यः इति। कर्त्त्वम् - कृञः त्वन् प्रत्ययः। अवचक्षे। छन्दसि अवपूर्वात् चक्षिङ् एश् प्रत्ययो निपात्यते। शित् करणं सार्वधातुकसंज्ञार्थम्। तेन आर्धधातुके विधीयमानः चक्षिङः ख्याञ् इति ख्याञादेशो न भवति। भावलक्षणे। कृत्यार्थे इति निवृत्तम्। तुमर्थे इति वर्तते। प्रकृत्यर्थ विशेषणं भावलक्षणग्रहणम्। भावो लक्ष्यते येन तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यो धातुभ्यश्छन्दसि विषयेतुमर्थे तोसुन् प्रत्ययो भवति छन्दसि। आसंस्थातोः सीदन्ति। संस्थादीनामवधित्वेन लक्षणं भावः।

**शाङ्करी** - संपूर्वो हि तिष्ठतिः समासौ रूढः। संतिष्ठते पिण्डपितृयस इत्यादौ दर्शनात्। इण् उदेतोः। पुरा सूर्यस्योदेतोराधेयः (काठकसंहिता ८-३)। कृञ् - पुरावत्सानामपाकर्त्तोः (काठकसंहिता ३१-१५)। अत्राप्याधानक्रिया सूर्यस्योदयेन ज्ञेया। कृञ् - अपकर्त्तोः। पुरावत्सानामपाकर्त्तोः। (काठकसंहिता ३१-१५)। प्रवदितोः वदि। पुरा प्रवदितोरग्नौ प्रहोतव्यम्। अत्र प्रवदनेन हवनं लक्ष्यते। चरि। प्रचरितोः। पुराप्रचरितोराग्नीध्रीय होतव्यम्। (गो० ब्राह्मण २-२-१०)। हु (होतोः। आ हो तोरप्रमत्तस्तिष्ठति। (तैत्तिरीय संहिता १-४-९-५)। तमि। आतमितोः आतमितोरासीत् (तै० ब्राह्मण १-६-९-५)। जनि। काममविजनितोः संभवामः (तैत्तिरीयसंहिता २-५-१-५) पृ० ९२

---

**विमर्श**- अवचक्षे च। रिपूणा नावचक्षे (ऋ०वेद ४-५८-५) हिन्दीभाग ३ पृष्ठ ६२९

एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे।

घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्य आसाम्॥ ५॥

अर्थ - अपरिमितगति विशिष्ठ यह जल हृदयङ्ग अन्तरिक्ष से अधोपदेश में निपतित होता है। प्रतिबन्धकारी शत्रु उसे नहीं देख सकता है। उस सकल घृतधारा को हम देख सकते हैं। इसके मध्य में अग्नि को भी देख सकते हैं।

**विमर्श**– अवचक्षे (शुक्ल यजुर्वेद माध्यन्दिनसंहिता अध्याय १७ मन्त्र ९३ पृष्ठ १६५-६६

एता अर्षन्ति हृद्यात् समुद्राच्छतव्रजा रिपुणा नावचक्षे।

घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्ये आसाम्॥

मन्त्रार्थ – हृदयरूपी समुद्र से अर्थात् श्रद्धारूपी जल से अथवा देवताओं के यथावत् चिन्तनरूप समुद्र से अथवा निरुक्त आदि छः अङ्गों से पवित्र उस वेदरूपी सागर से अनेकों अर्थवाली ये वाणियाँ निकलती हैं। घृत की धाराओं के समान अविच्छिन्नरूप से उच्चारित ये वाणियाँ शत्रुरूपकुतर्कियों से खण्डित नहीं होती। इन वाणियों के मध्य में दीप्यमान अग्नियों को मैं सब ओर से देखता हूँ।

सृपितृदोः कसुन् (क)

पुरा क्रूरस्य विसृपो विरप्सिन् शुक्लयजुर्वेदमाध्यन्दिनवाजसनेय संहिता अध्याय १ मन्त्र २८ पृष्ठ २४५-४६

पुरा क्रूरस्य विसृपो विरप्सिन्नुदादाय पृथिवीं जीवदानुम्। यामैरयंश्चन्द्रमसि स्वधाभिस्तासु धीरासोऽअनुदिश्य यजन्ते। प्रोक्षणीरासादय द्विषतो वधोऽसि। वाजसनेय संहिता अध्याय मन्त्र सं २८

मन्त्रार्थ – हे वेदत्रयीरूप शब्दकरने वाले वेदीरूप विष्णो! पृथिवी पर जब महान् युद्ध होने की सम्भावना हुई, तब उसका सारभूत भाग निकाल कर वेद के सहित उस भाग को देवताओं ने चन्द्र में रख दिया। बुद्धिमान लोग उसी भाग पर याग करते हैं। उसी सारभूत भाग को वेदी कहते हैं। हे आग्नीध्र! तुम प्रोक्षणी जल को वेदी पर रखो। हे स्पन्य! तुम शत्रुओं के हिंसक हो।

भावलक्षणे – आसंस्थातो र्वेद्यां शेरते (काठकसंहिता ११-६ पृष्ठ १०२) मनुष्यविशामगमयति ससाश्वत्त्या मयूरवा भवन्ति ज्ञानिथ्मेऽपि प्रोक्षति त आ संस्थातोर्वेद्यां शेरते तान् संस्थिते मध्यमे वायामुपहन्तीदमहमादित्यान्....

इण्। उदेतोः (काठकसंहिता ८=३ पृष्ठ ६०) एतद्वै पुण्याहं पुण्याह एवैनमाधत्तेव्युष्टायां पुरा। सूर्यस्योदेतोराधेय एतस्मिन् वै लोके प्रजापतिः प्रजा असृजत ताः प्रजायन्त प्रजननायैवमाधेय आग्नेयी वै

अपकर्तोः (काठकसंहिता ३१-१५ पृष्ठ ३२४) पुरा वत्सानामवकर्तोदम्पती

अश्नीतो हस्ता अवनिज्य दक्षिणतोऽग्नेस्तिष्ठन् ब्रूयादग्ने व्रतपते व्रतमालभ इत्यग्निर्वै व्रतपतिर्ब्राह्मणो व्रतमृद्व्रतपतय एव प्रोच्य ब्रतमालभते....

पुराप्रवदितोरग्नौ प्रहोतव्यम्। चरि पुरा प्रचरितोराग्नीध्रीये होतव्यम् (गो० ब्राह्मण २-२-१०) होतोः आ होतोरप्रमत्तस्तिष्ठति। आतमितोरासीत (तैत्तिरीय ब्राह्मण १-६-९-५)। काममा विजनितोः संभवामेति तस्माद्दृत्त्वियात् स्त्रियः प्रजां बिन्दते काममा विजनितोः संभवन्ति (तैत्तिरीयसंहिता २-५-१-५) पृष्ठ ९२

(ख) पुरा जत्रुभ्यः आतृदः (ऋ०वेद मण्डल ८१ ऋक् १२ हिन्दी भाग ५ पृष्ठ ४६४

य ऋते चिदभिश्रिषः पुरा जत्रुभ्यः आतृदः।
सन्धाता सन्धिं मघवा पुरु वसुरिष्कर्ता विह्रुतं पुनः॥

अर्थ - जो इन्द्र (संघटन-संधान) द्रव्य के विना ही गर्दन से रुधिर निकलने से पहले ही जोड़ों को जोड़ देते हैं, वही धनवान् बहुधनी इन्द्र विच्छिन्न का पुनः संस्कार कर देते हैं।

॥ इति तृतीयोऽध्यायः ॥

# ॥ चतुर्थोऽध्यायः ॥

**रात्रेश्चाजसौ ( ४-१-३१ )**

रात्रिशब्दान्ङीप्स्यात् अजस्विषये छन्दसि। रात्रीव्यंख्यदायती। लोके तु (ग) कृदिकारादिति ङीष्यन्तोदात्तः।

**नित्यं छन्दसि। ( ४-१-४६ )**

बह्वादिभ्यश्छन्दसि विषये नित्यं ङीष्। बह्वीषु हि त्वा। नित्यग्रहणमुत्तरार्थम्।

**भुवश्च। ( ४-१-४७ )।**

ङीष् स्यात् छन्दसि। विम्वी। प्रम्वी। विप्रसंभ्यो ड्व संज्ञायाम्। (३-२-१८०)। इति डुप्रत्ययान्तं सूत्रेऽनुक्रियते, उत इत्यनुवृत्तेः। उवङादेशस्तु सौत्रः। मुद्गलाच्छन्दसि लिच्च। ङीषे लिप्त्वमानुक् चागमः। लित्स्वरः। रथीरभून्मृद्गलानी।

---

**शाङ्करी** - रात्रेश्चाजसौ - नजसिः अजस्तस्मिन्। जस्विषयादन्यत्र संज्ञायां छन्दसि च रात्रिशब्दाद् ङीप् प्रत्ययो भवति। अजसीत्यत्र इकारः उच्चारणार्थः। "आहौ प्रभूतादिभ्यः" इतिवत्। छन्दसि। ननु तिमिरपटैरवगुण्ठिता रात्र्यः इति प्रयोगो न स्यात्। छन्दसीत्युच्यते। न चेदं छन्दः। अजसाविति निषेधाच्च। किं च वेदेऽपि रात्र्य इति प्रयोगो न स्यात् इत्याशङ्कयाह। लोके तु इति। तु शब्दोऽनुक्तसमुच्चयार्थः। राशदिभ्यां लोके जसि वेदे चेत्यर्थः। राशदिभ्यां त्रिरिति व्युत्पत्तिपक्षे कृदिकारान्तः। अव्युत्पत्तिपक्षे तु "सार्वतोऽचितन्नर्थात्" इति ङीष् बोध्यः। नित्यम्। "बह्वादिभ्यः" इत्यनुवर्तते। अन्यतो ङीष् इत्यतो ङीषितिच। ननु पर्वसूत्रात् "बह्वादिभ्यश्च" इत्यनेन

---

**विमर्श-** विभ्वी (ऋ०वे० ५-३८-१) हिन्दी भाग ४ पृष्ठ ९९

उरोष्ट इन्द्र राधसो विम्वी रातिः शतक्रतो।
अधानो विश्वचर्षणे द्युम्ना सुक्षत्र मंहयः॥

अर्थ - हे इन्द्र तुमने बहुत कर्म किया है। तुम प्रभूत धन का महान् दान करते हो। हे सर्वदर्शी हे शोभन धनवाले तुम हमलोगों को महान् धन प्रदान करो।

विकल्पेन ङीष् विधीयते, अतोऽस्य सूत्रस्यारम्भ सामर्थ्यादेव नित्यत्वे सिद्धे तर्हि सूत्रे नित्य ग्रहणं व्यर्थमित्याशङ्क्याह नित्यग्रहणमुत्तरार्थमिति। "भुवश्चे"ति सूत्रेऽनुवृत्त्यर्थमिति भावः।"भुवश्चा" छन्दसि विषये स्त्रियां भुवो नित्यं ङीष् प्रत्ययो भवति। विभ्वीति। विप्रसभ्यो ड्वसंज्ञायाम् इति डुप्रत्ययान्तात् ङीष्। ननु स्वयं भूरित्यस्यापि डुप्रत्ययान्तत्वात् तस्मादपि ङीष् प्रत्ययः स्यादिति चेन्न। "भुवश्च" इति सूत्रे "वोतो गुणवचनात्" (४-१-४४) इति सूत्रात् उतः इत्यनुवर्तते अतो ह्रस्वोकारान्तादेव ङीष् विधीयते। स्वयंभूः शब्दो भवतेः भुवः संज्ञान्तरयोः। (३-२-१७९) इत्यनेन क्विबन्तस्य दीर्घोकारान्तस्य रूपम्। यदि ह्रस्वोकारान्तो "भुवश्च" इत्यत्र गृह्यते तर्हि "शेषो घ्यसखि" इत्यनेन घिसंज्ञायां "घेर्ङिति" इत्यनेन गुणे 'भोः' इति रूपं स्यात् कथं भुवः इति? सौत्रो निर्देशः। अर्थात् छन्दोवत्सुत्राणि भवन्ति। छन्दसि च वर्णव्यत्ययो दृश्यते। मुद्गलाच्छन्दसि। "इन्द्रवरुण" इति सूत्रस्थं वार्तिकमिदम्। ङीषोलित्वाल्लिती ति मुद्गलानी''त्यत्राकारस्योदातत्वम्।

---

**विमर्श**- रात्री व्यख्यदायती पुरुत्रादेव्यं क्षमिः। विश्वा अधिश्रियोधित॥ ऋ०वेद० १०-१२७-१ हिन्दीभाग ८ पृष्ठ ५२०

अर्थ - आती हुई रात्रिदेवी चारों ओर विस्तृत हुई है। उन्होंने नक्षत्रों के द्वारा निःशेष शोभा पाई है।

विभ्वी प्रभ्वी (ऋ०वेद १-१८८-५) हिन्दी भाग २ पृष्ठ ४१५

विराट् समाड्विभ्वीः प्रभ्वीर्बह्वीश्च भूयसीश्च याः। दूरो घृतान्यक्षरन्॥

अर्थ - यज्ञशाला का विराट् सम्राट्, विभु प्रभु जो यज्ञ के द्वार हैं वे प्राणियों के उपकारार्थ जल गिराते हैं।

मुद्गलानी (ऋ०वेद १०-१०२-२) हिन्दी भाग ८ पृष्ठ ३७४

उत्स्म वातो वहति वासो अस्या अधिरथं यदजयत्सहस्रम्।

रथीरमून्मुद्गलानी गविष्टौ भरे कृतं व्यचेदिन्द्र सेना॥

अर्थ - जिस समय रथपर चढ़कर मुद्गल की पत्नी मुद्गलानी सहस्र गायों को जीतने वाली हुई, उस समय उनके वस्त्र का संचालन वायु ने किया। गायों को जीतने के समय मुद्गल पत्नी रथी हुई। इन्द्र की सेना नाम की वह मुद्गलानी युद्ध के समय शत्रुओं के हाथ से गायों को ले आई।

**दीर्घजिह्वी च छन्दसि।( ४-१-५९ )**

संयोगोपद्यत्वादप्राप्तो ङीष् विधीयते। आसुरी वै दीर्घजिह्वी देवानां यज्ञवाट्।

**कद्रुकमण्डल्वोश्छन्दसि।( ४-१-७१ )**

ऊङ् स्यात्। कद्रूश्च वै कमण्डलूः। गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम्। गुग्गुलूः। मधूः। जतूः। पतयालूः।

अव्ययात्त्यप्। (४-२-१०४) (वा) आविष्टयस्योपसंख्यानं छन्दसि। आविष्ट्यो वर्धते।

---

**शाङ्करी** - दीर्घजिह्वीति छन्दसि (ऐ०ब्रा० ८-४, पृष्ठ ३०३) विषये निपात्यते। जिह्वशब्दस्य संयोगोपधत्वेन स्वाङ्गाच्चोपसर्जनादित्यनेना प्रासत्वात् ङीष् निपात्यते। कद्रुकमण्डलवोश्छन्दसि। अत्र ''ऊङुतः'' इति सूत्रात् 'ऊङ्' इत्यनुवर्तते। कद्रुशब्दात् कमण्डलुशब्दाच्च छन्दसि विषये स्त्रियामूङ्प्रत्ययो विधीयते। कद्रुशब्दो वर्णविशेष-वाचकः। अतो ''वोतो गुणवचनात्'' (४-१-४४) इति सूत्रेण प्रासङीष् प्रत्ययस्य ''खरुसंयोगोपधान्न'' इति वार्तिकेन प्रतिषेधे कृतेऽनेन ऊङ् विधीयते। छन्दसि कमण्डलुशब्दस्यापि अप्राणिवाचित्वात् ''अप्राणिजातेश्चारज्वादीनाम्'' इत्यूङिप्रासे नियमार्थम्? वेदे एव ऊङ्। लोके तु कद्रुः कमण्डलुः। अथवा अयं रज्वादिः, ततः प्रतिषेधे सति प्राप्त्यर्थमिदं सूत्रम्। गुग्गुलमधु। एषां व्यत्ययेन छन्दसि स्त्रीत्वम्। पतयालुशब्दः स्पृहिगृहि इत्यादिना आलुजन्तः। अव्ययात्त्यप्। इति सूत्रं शैषिकप्रकरणे पूर्वं व्याख्यातमपि ''अमेहक्कतसित्रेभ्यः'' इति नियमादप्रासः शैषिकस्त्यब् ''आविष्टस्योपसंख्यानं छन्दसि'' इत्यत्र स्मार्यते। आविष्ट्यो वर्धते। ह्रस्वात्तादौ तद्धिते (८-३-१०) इत्यनेनाविसः सकारस्य षत्वं तद्योगेत्यपः तकारस्य ष्टुत्वम्।

---

**विमर्श**- दीर्घजिह्वी (ऐतरेय ब्राह्मण ८-४ पृष्ठ ३०३)

कद्रूश्चवै सुपर्णी (तैत्तिरीय संहिता ६-१-६ पृष्ठ २५४)

दीर्घजिह्वी वै देवानां (मैत्रा-संहिता ३-१०-६) पृष्ठ २९५

प्रातः सवनमवालेट्, तद्वमाद्यत्, सा पयस्याभावत्, कद्रूश्च वै सुपर्णी चाऽऽत्मरूपयोरस्पर्धेता (तैत्तिरीय संहिता ६-१-६) पृष्ठ २५४

गुग्गुलूः (अथर्ववेद चतुर्थकाण्ड - सूक्त ३७ ऋचा ३, ४-३७-३ भाग १ पृष्ठ ७०६)

छन्दसि ठञ्। (४-३-१९)

वर्षाभ्यष्ठकोऽपवादः। स्वरे भेदः। वार्षिकम्। (तैत्तिय सं० ४-४-११-१) पृ० १७५।

वसन्ताच्च। (४-३-२०)

वासन्तिकम् तै० संहिता ४-४-११-१) पृष्ठ १७५)

हेमन्ताच्च। (४-३-२१) छन्दसि ठञ्।

हैमन्तिकम्। योग विभाग उत्तरार्थः। (तै० सं० ४-४-११-१) पृष्ठ १७५।

---

**शाङ्करी** -छन्दसि - ठकोऽपवादः। वर्षाभ्यष्ठक् इति प्राप्तस्य। ठक् ठञोः को भेदो रूपस्यतुल्यत्वात्। स्वरेभेदः। ठञिकृते ञ्नित्यादिर्नित्यम् इत्याद्युदात्तम्, ठकि तु कितः इत्यनेनान्तोदात्तत्वम् इति भावः। वार्षिकम्। ठस्येकः। उत्तराथ इति। सर्वत्राण् च तलोपश्च इत्येतदर्थः। तत्र ह्रस्यैवानुवृत्तिर्यथा स्यात् वसन्तस्य माभूत्। (हैमन्तिकम् (तै०सं० ४-४-११-१) पृष्ठ १७५)

---

**विमर्श-** नर्दी यन्त्वसरसोपां तारमवश्वसम्।

गुग्गुलूः पीला नलद्यौ३क्षगन्धिः प्रमन्दनी॥

तत् परेताप्सरसः प्रतिबुद्धा अभूतन।

मधूः (अथर्ववेद ७-५६-२)

जतूः (मैत्रायणी संहिता ३-१४-६) पृष्ठ ३७८

अह्ने पासवताना लभते, रात्र्यै सीचापू रह्वः सन्धिभ्यां जतूः,

स वत्सराय महतः सुपर्णान् मासेभ्यो दात्यौहान्॥

पतयालूः (अथर्ववेदः ७-११५-२)

वार्षिकम् - नभश्च नभस्यश्च वार्षिकावृतू इषश्चोर्जश्च शारदावृतू (तै०सं० ४-४-११-१) पृष्ठ १७५

वासन्तिकम् (तै०सं० ४-४-११-१) पृष्ठ १७५

मधुश्च माधवश्च वासन्तिकावृतू शुक्रश्च शुचिश्च

ग्रैष्मावृतू.... (तै०सं० ४-४-११-१) पृष्ठ १७५

हैमान्तिकम् (तै०सं० ४-४-११-१) पृष्ठ १७५

सहश्च सहस्यश्च हैमन्तिकावृतू

शौनकादिभ्यश्छन्दसि। (४-३-१०६)

णिनिः प्रोक्तेऽर्थे। छाणोरपवादः। शौनकेन प्रोक्तमधीयते शौनकिनः। वाजसनेयिनः। छन्दसि किम्। शौनकीया शिक्षा।

द्व्यचश्छन्दसि। (४-३-१५०)

विकारे मयट् स्यात्। शरमयं बर्हिः। यस्य पर्णमयी जुहूः। नोत्वद्वर्ध्रबिल्वात्। (४-३-१५१)

उत्वान् उकारवान्। मौञ्जं शिक्यम्। वर्ध्रं चर्म तस्य विकारो वार्ध्री रज्जुः। बैल्वो यूपः।

सभायाः यः। ४-४-१०५। ढश्छन्दसि। (४-४-१०६)।

समेयो युवा।

---

**शाङ्करी** – शौनकादिभ्यः। अत्र काश्यपकौशकाभ्यामृषिभ्यां णिनिः इत्यनेन णिनिः वर्तते अतः शौनक इत्येवमादिभ्यो णिनिः प्रत्ययो भवति। "तेन प्रोक्तम्" इत्येतस्मिन् विषये छन्दस्यभिधेय। (क) शौनकिनः (कौ०सू० ८५-८) (ख) वाजसनेयिनः। (आश्व०श्रौ०१-८-१२)। छन्दसि किम्। लोके तु शौनकीया शिक्षा। "वृद्धाच्छः" इत्यनेन छप्रत्ययः छस्येयः। द्व्यचश्छन्दसि। द्वयचः प्रातिपदिकाच् छन्दसि विषये मयट् प्रत्ययो भवति विकारावयवयोरर्थयोः। शरमयं बर्हिः (का०सं० ११-८)। यस्य पर्णमयी जुहूः। (नि० ३-५-७-१)। नोत्वद्वर्ध्रबिल्वात्। उत्वतः प्रातिपदिकाद् वर्ध्र-विल्वशब्दाभ्यां च मयट्प्रत्ययो न भवति। द्वयचः छन्दसि इत्यनेन प्राप्तः प्रतिषिध्यते। मौञ्जं शिक्यम्। मुञ्जस्य विकारः इति विग्रहे "तस्य विकारः"(४-३-१३४) इत्यनेन अण् प्रत्ययः। "तद्धितेष्वचामादेः" इत्यनेन आद्यचो वृद्धिः। एवं वार्ध्रीरज्जुः। "टिड्ढाणञ्" इत्यादिना ङीप्। वैल्वो यूपः। विल्वादिभ्योऽण्। (४-३-१३६) इत्यनेन अण् प्रत्ययः। सभाया यः। सभाशब्दाद् य प्रत्ययो भवति तत्र साधुः इत्येतस्मिन्नर्थे सभ्यः लोके। "ढश्छन्दसि" इति सूत्रेण छन्दसि ढप्रत्ययः, तस्य आयनेयीनीयियः (७-१-२) इत्यादिना एयादेशे सभेय इति।

---

**विमर्श**- सभेयो युवा (शुक्ल यजुर्वेद वाजसनेय संहिता अध्याय २२ मण्डल २२ पृष्ठ ६२)

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा सभेयो युवास्य यजमानस्य वीरो जायतां दोग्ध्री धेनूर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू.........

भवे छन्दसि। (४-४-११०)

सप्तम्यन्ताद् भवार्थे यत्। मेध्याय व विद्युत्याय च। यथायथं शैषिकाणामणादीनां घादीनां चापवादोऽयं यत्। पक्षे तेऽपि भवन्ति। सर्वविधीनां छन्दसि वैकल्पिकत्वात्। तद्यथा मुञ्जवान्नाम पर्वतः, तत्र भवो मौञ्जवतः। सोमस्येव यौञ्जवतस्य भक्षः। आ चतुर्थसमाप्तेश्छन्दोऽधिकारः।

पाथो नदीभ्यां ड्यण्। (४-४-१११)

तमुत्वा पाथ्यो वृषा। चनों दधीत नाद्यो गिरों मे। पाथसि भवः पाथ्यः। नद्यां भवो नाद्यः।

---

**शाङ्करी** – भवे छन्दसि। भवार्थे। तत्र भवः इति प्राप्तानाम्। तर्हि यता बाधितत्वाच्छन्दसि तेषामभावः स्यादिति चेन्न, पक्षे तेऽपि भवन्ति "बहुलं छन्दसि" इति निर्देशात् सर्वविधीनामित्यादिः। मेध्या य च विद्युत्याय च। (तैत्तिरीय संहिता काण्ड ४ प्रपाठक ५ अनु ७-१३) पृष्ठ १७९।

पाथोनदीभ्यां सप्तम्यन्ताभ्यां भवार्थे ड्यण् स्यात्। पाथो जलम्, कबन्धमुदकं पाथः इत्यमरात्। पाथोऽन्तरिक्षम् इति वृत्तिः। तत्र भवः पाथ्यः। (ऋ०वेद ६-१६-१५)। नाद्यः ड्यण् इत्यत्र डकारस्य "चुटू" इत्यनेन, णकारस्य "हलन्त्यम्" इत्यनेन चेत्संज्ञा लोपाभ्यां निवृत्तिः। नाद्यः इत्यत्र णित्वादाद्यचो "तद्धितेष्वचामादे" वृद्धिः।

---

**विमर्श**- (क) शौनकेन प्रोक्तम्। (ख) वाजसनेयेन प्रोक्तम्।

ढश्छन्दसि (४-४-१०६) समेयो युवा (शुक्लयजुर्वेदवाजसनेयिमाध्यन्दिन संहिता अध्याय २२ मण्डल २२) पृष्ठ ६२-६३ वेदार्थ पारिजात भाष्य (अनन्त श्री विभूषित स्वामिकरपात्रमहाराज)

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे

राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्ति पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्यन्यो वर्षत फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्।

मन्त्रार्थ – कृष्णाजिनकी दीक्षा से लेकर उरवा में १३ समिधाओं के रखने तक अध्वर्यु पढ़े। हे ब्रह्मन् हमारे देश में यज्ञ करने वाले और वेदाध्ययनशील ब्राह्मण सब ओर उत्पन्न हो, तथा शूर वीर वाणविद्या में चतुर, शत्रु को भलीप्रकार

वेशन्तहिवद्भ्यामण्। (४-४-११२)

भवे। वैशन्तीभ्यः स्वाहा। हैमवतीभ्यः स्वाहा।

स्रोतसो विभाषा ड्यड्ड्यौ। (७-४-११३)

पक्षे यत्। ड्यड्ड्ययोस्तु स्वरे भेदः। स्रोतसि भवः स्रोत्यः। (ऋग्वेद १०-१०४-८) स्रोतस्यः। (अथर्ववेद १९-२-४)

सगर्भसयूथसनुताद्यन्। (४-४-११४)

अनुभ्राता सगर्भ्यः। अनुसरवा सयूथ्यः। यो नः सनुत्य उत वा जिधत्नुः। नुतिर्नुतम्। नुपंसके भावे क्तः। (३-३-११४)। सगर्भादयस्त्रयोऽपि कर्मधारयाः। समानस्य छन्दस्यममूर्द्धप्रभृत्यूदर्केषु। (६-३-८४) इति सः। ततो भवार्थे यन्। यतोऽपवादः।

---

**शाङ्करी** - वेशन्तः- पल्वलम्। विशेर्झ च् (द०उणादि(६-१७)। तत्र भवा आपः वैशन्त्यः। वैशन्तीभ्यः स्वाहा (तै०सं० ७-४-१३-९)। हैमवतीभ्यः स्वाहा। (शौ० १९-१-१) स्रोतसो.....। यतोऽपवादः। पक्षे यदपि भवति। स्रोतो जलप्रवाहः। स्वरे भेदः। ड्यति तित्स्वरितम् इत्यन्तः इति स्वरितत्त्वम्। ड्ये तु प्रत्ययस्वरेणान्तोदात्तत्वं भवति। समानश्चासौ गर्भ सगर्भः सगर्भादयस्त्रयोऽपि कर्मधारयः अर्त्तिगृभ्यो भन् (दश उणा ४३२) समाने गर्भे भवः सगर्भ्यः।

सयूथ - युता भवन्त्यस्मिन्निति यूथम्, तिथपृष्ठगूथयूथप्रोथाः, (दश उणादि ७-३७) इति क्थन्प्रत्ययान्तो निपातितः। तत्र दीर्घोऽपि निपातनात्। यत् प्रत्यये तित्स्वरितमित्यन्तः स्वरितत्त्वम्, यनि तु "ञ्नित्यादिर्नित्यम्" इत्यनेनाद्युदात्तत्वम्।

---

से वेधने वाले महारथी क्षत्रिय उत्पन्न हों, इस यजमान की गायें खुब दूध दें, बैल बोझा उठाने में समर्थ हों, घोड़ा शीघ्रगामी हों, स्त्री सर्वगुण सम्पन्न हों, रथ में बैठने वाला जयशील हों, पराक्रमी युवा सभा के योग्य पुत्र हो, हमारे यहाँ इच्छानुसार वृष्टि हो, ओषधियाँ फलवती हों और शीघ्र पक जायें, हमें अप्राप्त वस्तु की प्राप्ति और प्राप्त वस्तु की रक्षा हो।

**विमर्श**- नमो मेध्याय च विद्युत्याय च नम ईघ्रियाय चाऽऽतप्याय च नमो वात्याय च रेष्मियाया च नमो वास्तव्याय च वास्तु पाय च। तैत्तिरीय संहिताकाण्ड ४ प्रपाठक ५ अनु० ७) पृष्ठ १७९। तमुत्वा पाथ्यो वृषा समीधे दस्यु हन्तमम्। घनं जयं रणे रणे॥ १५ ऋग्वेद मण्ड ६ सुक्त १६ ऋक् १५ हिन्दी भाग ४ पृष्ट ३७५।

तुग्राद् घन्। (४-४-११५)

भवेऽर्थे। पक्षेयदपि। आ वः शंमं वृषभं तुग्र्यासु इति बह्वचाः। तुग्रियासु शाखान्तरे। घनाकाशयज्ञवरिष्ठेषु तुग्रशब्दः इति वृत्तिः।

अग्राद्यत्। (४-४-११६)

घच्छौ च। (४-४-११७)। चाद्यत्। अग्रे भवोडगयः। अग्रियः। अग्रीयः।

समुद्राभ्राद्घः। (४-४-११८)।

समुद्रिया अप्सरसो मनीषिणम्। नानंदतो अभ्रियस्येव घोषाः।

बर्हिषि दत्तम्। (४-४-११९) प्राग्घिताद्यत्। (४-४-७५) इत्येव। बर्हिष्येषु निधिषु प्रियेषु। (ऋग्वेद १०-१५-५)

दूतस्य भाग कर्मणि। (४-४-१२०) भागोऽंशः। दूत्यम्।

रक्षोयामूनां हननी। (४-४-१२१)। या ते अग्ने रक्षस्या तनूः।

---

**शाङ्करी** - तुग्राद् - तुग्रशब्दाद् घन् प्रत्ययो भवति "तत्र भवः" इत्येतस्मिन् विषये। यतोऽपवादः। अत एव मूले लिखितं पक्षे यदपि। यत् प्रत्यये "तुग्रयासु" इति। घन् प्रत्यये "आयनेयीनीयियः..."(७-१-२)। तस्य इयादेशः अत एव 'तुग्रियासु' इति। धनाकाश इत्यस्य स्थो - अन्नाकाशयज्ञ वरिष्ठेषु तुग्रशब्दः" इति काशिकावृत्तौ पाठः। अग्राद्यत् अग्रशब्दाद्यत् प्रत्ययो भवति तत्रभवः इत्येतस्मिन् विषये।

---

**विमर्श-** अर्थ - हे अग्नि पाथ्यवृषा नाम के किसी ऋषि ने तुम्हें समुद्दीपित किया है। तुम दस्युहन्ता और प्रत्येक युद्ध में धन के जेता हो।

समुद्रिया (ऋ०वेद ७-८७-१) हिन्दी पृष्ठ ३८३) भाग ५ रदत्पथो वरुणः सूर्याय प्राणांसि समुद्रिया नदीनाम्। सर्गो न सृष्टो अवतीर्ऋतायं चकार महीरवनी रहभ्यः॥

अर्थ - इन्हीं वरुणदेव ने सूर्य के लिये अन्तरिक्ष में मार्ग प्रदान किया था। वरुण ने नदियों को अन्तरिक्ष में उत्पन्न जल प्रदान किया था। अश्व जैसे घोडी के लिये दौडता है वैसे ही शीघ्र जाने की इच्छा करके वरुण अथवा सूर्य ने विशाल रात्रियों को दिन से अलग किया था।

अग्रेभवोऽग्र्यः। घ प्रत्यये तस्येयादेशे अग्रियः इति। छ प्रत्यये तस्येयादेशे अग्रीयः इति। समुद्रशब्दात् अभ्रशब्दाच्च घः प्रत्ययो भवति "तत्र भवः" इत्येतस्मिन् विषये। अभ्रशब्दः अजाद्यदन्तः अत एव "अल्पाचतरम्" इत्यनेनाभ्रशब्दस्य पूर्वनिपातने भवितव्यम् अत एव काशिकायां लिखितम्- तस्य लक्षणस्य व्यभिचारित्वात् - अनित्यत्वात् इति भावः। बर्हिषि दत्तम्। "भवः" इति निवृत्तम्। बर्हिः शब्दात् दत्तमित्यर्थे यत् प्रत्ययो भवति। ब॒र्हिष्यै॑षु नि॒धिसु॑ प्रि॒येषु॑ (ऋ०वेद १०-१५-५)। दूत्तस्य दूत शब्दात् षष्ठी समर्थाद् भागे कर्मणि चाभिधेये यत् प्रत्ययः स्यात्। भागे तस्येदम् इत्यणि प्राप्ते दूतस्येति वचनम्। कर्मणि तु "दूत वणिग्भ्याञ्च" इत्युपसंख्यायेत इति यत् प्रत्यये प्राप्ते अनेन यत्प्रत्ययः क्रियते। दूतस्य भागो दूत्यः। कर्म दूत्यम्। (ऋ०वेद १-१२-४)। दूतवणिग्भ्याञ्चेति वार्तिक विषये सिद्धान्तकौमुद्यां भावकर्मप्रक्रियायां सरव्युर्यः। (५-१-१३६) इति सूत्रे मूले लिखितम् (दूतवणिग्यां च) (वा) दूजस्य भावः कर्म वा दूत्यम्। भाष्ये तु दूतवणिग्भ्यां चेति नास्त्येवेति। एतेन ज्ञायते यद् व्याकरणन्तरेण गृहीतम् इति। रक्षोयातूनामिति - रक्षः शब्दाद्यातुशब्दाच्च षष्ठीसमर्थात् हननी इत्येतस्मिन्नर्थे यत् प्रत्ययः स्यात्। हन्यतेऽनयेति हननी। याते अग्ने रक्षस्याः तनूः (मैत्रायणी संहिता (२-३-१)

---

**विमर्श-** बर्हिष्येषु निधिषु प्रियेषु (ऋ०वेद १०-१५-५) हिन्दी भाग ७ पृष्ठ ४१०

अपहूताः पितरः सोभ्यासो बर्हिष्येषु निधिषु प्रियेषु।

त आगमन्तु इह त श्रुवन्त्वधि ब्रुवन्तु ते वन्त्वस्मान्॥

अर्थ - कुशों के ऊपर से सारे मनोहर द्रव्य रखे हुए हैं। इनका और सोमरस का भोग करने के लिए पितर लोग बुलाए गये हैं। वे पधारें हमारी स्तुति को ग्रहण करें। आह्लाद प्रकट करें और हमारी रक्षा करें।

दूत्यम् (ऋ० वे० १-१२-४ हिन्दी भाग १ पृष्ठ १२९)

ताँ उशतो विबोधय यदग्नेयासि दूत्यम्। देवैरासससंत्सिबर्हिषि॥

अर्थ - हे अग्नि देव! चूँकि देवताओं का दूत कर्म तुम्हें प्राप्त हो चुका है, इस लिए हव्याकांक्षी देवताओं को जगाओ। देवों के साथ इस कुश युक्त यज्ञ में बैठो।

रक्षस्या तनूः (मैत्रायणी संहिता २-३-१) पृष्ठ १२०

या वां मित्रावरुणा ओजस्या सहस्या यातव्या रक्षस्या तनूस्तया वामविधाम,

रेवतीजगतीहविष्याभ्भः प्रशस्ये। (४-४-१२२)

प्रशंसने यत् स्यात्। रेवत्यादीनां प्रशंसनं रेवत्यम्। जगत्यम्। हविष्यम्।

असुरस्य स्वम्। (४-४-१२३)

असुर्यं देवेभिर्धायि विश्वम्।

मायायाभण्। (४-४-१२४)

आसुरी माया।

तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः। (४-४-१२५)

वर्चस्वानुपधानो मन्त्र आसामिष्टकाां वर्चस्याः। ऋतव्याः।

---

**शाङ्करी** – रेवतीजगती। रेवत्यादिभ्यः षष्ठी समर्थेभ्यः प्रशस्ये वाच्ये यत् प्रत्ययः स्यात्। प्रशंसनं प्रशस्यम्। प्रपूवाच्छंसु स्तुतौ तस्माद्भावे क्यप्। रयिरस्यातीति रेवती। रयिशब्दान्मतुप् "छन्दसीरः" (८-२-१५) इत्यनेन मकारस्यवत्वम्। रयेर्मतौ बहुलम् इति। वार्तिको बहुलवचनात् सम्प्रसारणं यकारस्येकारः। उगित्वान्ङीप्। नक्षत्रे तु गौरादित्वान्ङीष्, गौरादिगणे पाठात्। रेवत्यम्। काठकसंहिता १-८) पृष्ठ ३। जगत्यम् (काठक सं० १-८। हविष्यम् काठ सं० १-८) रेवती शब्दात् प्रशस्येऽर्थे प्रकृतसूत्रात् यत् प्रत्यये रेवतीशब्दस्य भसंज्ञायां "यस्येति च" इत्यनेन ईकारलोपे सोरमादेशे रेवत्यम्। एवमेव जगतीशब्दाज् जगत्यम्। काठकसंहिता १-८। हविष्यम् काठक सं० १-८। हविष्याशब्दात् यत् प्रत्यये हविष्याशब्दस्य भसंज्ञायां "यस्येति च" इत्यनेन आकारलोपे "हलो यमां यमि लोपः" ८-४-६४ इत्येनन यकारलोपे सोरमादेशे हविष्यम्। असुरस्येति। न सुरोऽसुरः। असुरशब्दात् षष्ठी समर्थात् स्वम् – आत्मीयम् इत्यर्थे यत् प्रत्ययो भवति। तस्येदम् इत्यनेन प्राप्तमण् प्रत्ययं वाधित्वा यत् प्रत्यये असुरशब्दस्य भसंज्ञायां "यस्येति च" अकारलोपः सोरमादेशः असुर्यम् इति। (मैत्रायणी संहिता १-८-३) मायायाम् इति। आसुरी माया (वाजसनेय संहिता ११-६९) अणण्तत्वात्ङीप्। तद्वानासाम्। मत्वन्तात् प्रथमासमर्थादासामिति षष्ठ्यर्थे यत् स्यात्, यत् प्रथमा समर्थमुपधानो मन्त्रश्चेत् स भवति, यत्तदासामिति निर्दिष्टमिष्टकाश्चिता भवन्ति, मतोश्च लुक्। स विविक्षितोऽवयवोऽस्मिन्निति तद्वान्। कः समुदायः। वर्चः शब्दो यस्मिन् मन्त्रेऽस्ति स वर्चस्वान्। उपधीयतेऽनेनेत्युपधानम्। अत्र वर्चस्वान् शब्दात् यत् प्रत्ययो भवति मतुपः लुक् च भवति अतो वर्चस्याः इति। एवमेव – ऋतुशब्दो यस्मिन् मन्त्रेऽस्ति सऋतुमान् मन्त्रः यत्प्रत्यये सति मतुपोः लुकि च कृते उकारस्य गुणेऽवादेशे ऋतव्या इति।

अश्विमानण्। (४-४-१२६) अश्विनीरूपदधाति।

वयस्यासु मूर्ध्नो मतुप्। (४-४-१२७)

तद्वानासामिति सूत्रं सर्वमनुवर्तते। मतोरिति पदमावर्त्य पञ्चम्यन्तं बोध्यम्। मतुबन्तो यो मूर्धशब्दस्ततो मतुप्स्यात्प्रथमस्य मतोर्लुक च वयः शब्दवन्मन्त्रोपधेयास्विष्टकासु। यस्मिन्मन्त्रे मूर्धवयः शब्दौ स्तस्तेनोपधेयासु। मूर्धन्वतीरुपदधातीति प्रयोगः। तै०सं० पृष्ट २१७ (५-३-८-३)

मत्वर्थे मासतन्वोः। (४-४-१२८)

नभोऽभ्रम्। तदस्मिन्नस्तीति (तैत्ति०संहिता १-४-१४-६) पृष्ठ २० नभस्यो भासः। ओजस्या तनूः। (मैत्रायणी सं० २-३-१ पृष्ठ १२०)

---

**शाङ्करी-** अश्विमानण्। अश्विशब्दो यस्मिन् मन्त्रेऽस्ति सोऽश्विमान्मन्त्रः। अश्विमच्छब्दादण् प्रत्ययो भवति। "तद्वानासाम्" इत्यनेन प्राप्तस्य यतोऽपवादः। प्रथमान्तादश्विमच्छब्दादासामिति षष्ठ्यर्थेऽण् स्यात् यत्प्रथमा निर्दिष्टमुपधानो मन्त्रश्चेत्स भवति। यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति मतोश्च लुक्। अश्वशब्दात् "अत इनि ठनौ" इत्यस्त्यर्थे इनिः। तदन्तान्मतुप्। अश्विमान्स उपधानो मन्त्र

---

**विमर्श-** रेवत्यम् काठकसंहिता १-८ पृष्ठ ३

रसेन मधुना मधुमतीः पृच्यन्तां यद्वो रेवती रेवत्यं यद्वो हविष्या हविष्यं यद्वो जगतीर्जगत्य तेनास्मै यज्ञपतयः आशासाना मधुना मधुमती

असुउर्य वा एतत् पोत्र यत्कुलालकृतं चक्रवृन्त मैत्रायणी संहिता १-८ पृष्ठ ६८।

आसुरी माया (शुक्ल यजुर्वेदीय वाजसनेय संहिता ११-६९) पृष्ठ ९३ वेदार्थपारिजातभाष्य।

दृ हस्व देवि पृथिवि स्वस्त्य आसुरी माया स्वधया कृतासि।

जुष्टं देवेभ्य इदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन्॥ ११-६९॥

अर्थ - हे देवि पृथ्वी उखे, तुम यजमान के कल्याण के लिये दृढ़ हो जाओ, तुम अन्न के निमित्त प्राण सम्बन्धिनी प्रज्ञा के समान हो, यह हवियोग्य अन्न देवताओं को अत्यन्त प्रिय हो। यहां असूनां-प्राणामियंमासुरी यह अर्थ है। अथवा शम्बरादि असुर निर्मित माया अर्थ है।

वर्चस्याः (तै० ब्राह्मण १-८-०-१)

आसामिष्टकानामिति विग्रह्य अणि विहिते मतोश्च लुकिकृते "इनण्यनपत्ये" इति प्रकृतिभावः।

**शाङ्करी**- वयस्यासु। वयस्वानुपधानो मन्त्र आसामिष्टकानां ता वयस्यास्तास्वमिधेयासु प्रथमासमर्थान्मतुबन्तमूर्धशब्दादासामिति षष्ठयर्थे मतुप्स्यात्। पूर्वेण प्रासस्य यतोपवादः। यत्प्रथमा निर्दिष्टमुपधानो मन्त्रश्चेत्स भवति, यदासामिति निर्दिष्टमिष्टकाश्चेता भवन्ति। यस्मिन्मन्त्रे वयः शब्दो मूधर्नशब्दश्च विद्यते, स वयस्वान् मूर्धन्वान् भवति। यथा मूर्धावयः प्रजापतिश्छन्दः इति, तत्र वयस्वच्छब्दादिव मूर्धवच्छब्दादपि पूर्वेण यति प्रासे अनेन मतुब्विधीयतेत्याशयेन मूले आह यस्मिन्त्रे इति। मूर्धन्वतीरुपदधाति। अत्र "अनो नुट्" छन्दसि मतुबः नुटो मनसिनिधाय मूर्धन्वती इत्युक्तम्। भाविनं मतुबो लुकञ्च कृत्वा मूर्धवयः शब्दावित्युक्तम्। मत्वर्थे। यस्मिन्नर्थे मतुब्विहितस्तस्मिन्नर्थे प्रथमान्ताद्यत् स्यात्, मासतन्वोः। प्रत्ययार्थ विशेषणयोः। कृषिचमितनिधनिसर्जिः खर्जिभ्यः ऊः। (८१) इत्युणादि सूत्रेण ऊप्रत्ययान्तः तनूशब्दः, न तु "भृमृशीत् चरित्सरितनिधनिभिमस्ज्भ्यि उः" ७ इत्युणादि सूत्रेण ह्रस्वोकारान्तः तथा सति शेषो घ्यसखि (१-४-७) इत्यनेन घिसंज्ञायां "द्वन्द्वे घि" (२-२-३२) पूर्वनिपातापत्तिः। वस्तुतः प्रयुक्तान्वाखानार्थं व्याकरणमिति राद्धान्ताद् मैत्रायणी संहितायाम् (२-३-१) ओजस्या तनूः रक्षस्या तनूः इत्यत्र दीर्घोकारान्त एव प्रयोग उपलभ्यते। अतः सूत्रकारेण तदनुसरणमेव विधेयम्।

---

**विमर्श**- अश्विनीरुपदधाति (शतपथ ब्राह्मण भाग २ पृष्ठ ८३८)

यद्वेवैताऽ आश्विनीरूपदधाति। प्रजापतिं विस्रस्तं देवता ऽआदाय व्युदक्रामँस्तस्य यदूर्ध्वं प्रतिष्ट।

मूर्धन्वती र्भवन्ति मूर्धानमेवैन समानानां करोति त्रिष्टुभ उपदधातीन्द्रियं वै त्रिष्टुगिन्द्रियमेव मध्यतो धत्ते जगतीरुपदधाति (तैत्तिरीय संहिता ५-३-८) पृष्ठ २१७

नभस्यो मासः (तैत्ति० सं० १-४-१४) पृष्ठ २०

मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेपश्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यंश्चो पयाम गृहीतोऽसि स सर्पोऽस्य हस्पत्यायं त्वा

ओजस्या तनूः (मैत्रायणी संहिता २-३-१) पष्ठ १२०

या वां मित्रावरुणा ओजस्या तनूस्तया वा विधेम, तयेममुं मुञ्चतम द्वसो या वां मित्रावरुणौ सहस्या तनूस्तया वा विधेम।

**विशेष** - मूर्धन्वती रुपदधाति इत्यस्य स्थाने मूर्धन्वतीर्भवन्ति इत्येव पाठः काशिकायां प्रयोगरूपेण लिखितम्। अयमेव पाठः तैत्तिरीय संहितायामुपलभ्यते।

मधोर्ञ च। (४-४-१२९)

माधवः। मधव्यः।

ओजसोऽहनि यत्खौ। (४-४-१३०)

ओजस्यमहः। ओजसीनं वा।

वेशोयशआदेर्भगाद्यल्। (४-४-१३१)

यथा संख्यं नेश्यते। वेशो बलं तदेव भगः। वेशो भग्यः।

वेशोभगीनः। यशो भग्यः। यशोभगीनः।

ख च। (४-४-१३२)

योगविभाग उत्तरार्थः। क्रमनिरासार्थश्च।

पूर्वैः कृतमिनयौ च। (४-४-१३३)

गम्भी॒रेभिः पृथिभिः पूर्विणेभिः। ये ते॒ पन्थाः सवितः पूर्व्यासः।

---

**शाङ्करी**- मधोः। मधुशब्दान्मत्वर्थे "मघोर्ञच" ४-४-१२९ इत्यनेन ञ प्रत्ययो भवति, चकाराद्यच्च। माधवः। मधुशब्दात् ञ प्रत्ययः। "तद्धितेष्वचामादेः"। (७-२-११७) इत्यनेनाद्यकारवृद्धिः, उकारस्य "ओर्गुणः" (६-४-२४६) इत्यनेन गुणः अवादेशश्च माधव। मधव्यः। वान्तो यि प्रत्यये। (६-१-७९) इत्यनेनावादेशः। ओजसोजऽहनि। ओजः शब्दान्मत्वर्थे यत्खौ स्तोऽहन्यभिधेये। यत्प्रत्यये ओजस्यमहः। ओजसीनम्। अत्र खप्रत्ययस्य "आयनेयीनीयियः" ७-१-२ इत्यनेनेनादेशः। नन्वत्र सूत्रे "ओजसोऽहनि खश्च" इत्येव सूत्रमस्तु चकारेण पूर्वसूत्रविहित यत् प्रत्ययस्य ग्रहणं स्यादिति चेन्न, चकारेण सन्देहः स्यात् यत् पूर्वसूत्रविहितञकारस्यापि ग्रहणापत्तिः स्यात्। वेशोयश आदेः। मत्वर्थे इत्येव क्वचिदेकदेशोप्यनुवर्तते इति नियमात् पूर्वसूत्रात् खमात्रमनुवर्तते यथासंख्यं नेष्यते। अतो वेशोभगशब्दाद् यल् ख प्रत्ययौ यशोभगशब्दादपि। लित्करणं स्वरार्थम्। यत् प्रत्यये तित्स्वरितम् (६-१-१८५)। इत्यनेन प्रत्ययस्य स्वरितस्वरः। यल् प्रत्यये तु (लिति - ६-१-१९३)। इत्यनेन प्रत्ययात् पूर्वमुदात्तं भवति इति विशेषः। वेशो यशश्च वेशोयशसी ते आदौ यस्य तस्माद् वेशो यश आदेशः भगात् प्रातिपदिकात्यल्खौप्रत्ययौ स्तः। ख च योगविभागेति। वेशोयश आदेरिति सूत्रे एव यल् इत्यनेन सह रव इत्यस्यापि योगः कर्त्तव्यः पृथक् "रव च" इति सूत्रकरणम् उत्तरार्थः उत्तरसूत्रे - पूर्वैः कृतमिनति सूत्रे ख मात्रस्यैवानुवृत्तिः स्याद् यल् इत्यस्यानुवृत्तिर्न भवेदित्यर्थः क्रमनिरासार्थेति।

अद्भिः संस्कृतम्। (४-४-१३४)

यस्येदमर्प्यं हविः। ऋग्वेद (१०-८६-१२)

सहस्रेण संमितौ घः। (४-४-१३५)

सहस्रियासो अपां नोर्मयः। सहस्रेण तुल्या इत्यर्थः।

---

यल्रवौ इति वक्तव्ये प्रकृतिप्रत्यययोः समसंख्याकत्वे "यथासंख्यमनुदेशः" इत्यस्यप्रवृत्तिवारणार्थश्च। पूर्वैः कृतम्। तृतीयाबहुवचनान्ततात् पूर्वैः इति शब्दात् कृतमित्यर्थे इनयप्रत्ययौ भवतः। चकारात् ख प्रत्ययश्च। पूर्वशब्दात् इन प्रत्यये भसंज्ञायाम् यस्येति च इत्यनेन अकारलोपे पूर्विणेभिः इति। एवमेव य प्रत्यये पूर्व्यासः। ख प्रत्यये ईनादेशे पूर्वीणैः इति।

---

**विमर्श-** माधवः। तैत्तिरीय सं० १-४-१४-१) पृष्ठ २०। मधूश्च माधवश्च शुक्रश्च शुचिश्च नभस्य नभस्यश्च पश्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्चोपयामगृहीतोऽसि स सर्पोऽस्य हस्प्रत्याय त्वा।

मधव्यः अमृत् हिरण्यं प्राणेषु हिरण्यशल्कान प्रत्यस्यति प्रतिष्ठामेवैन द्रमयित्वा प्राणैः समर्धयति दध्ना मधुमिश्रेण पूरयति मधव्योऽसानीति शृताताङ्क्येन मेध्यत्वाय ग्राम्यं वा एतदन्नं यद्दध्यारण्यं (तैति० सं० ५-२-९-३ पृष्ठ २११)

गम्भीरेभिः पथिभिः पूर्विणेभिः (काठकसंहिता (९-६-१९) पृष्ठ ७५।

परेत पिरस्सोभ्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः।

दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च तस्सर्ववीरं नियच्छत॥ १९॥

पूर्व्यैः। तैत्तिरीय संहिता (१-८-५-२) पृष्ठ ५२।

परेत पितरः सोम्या गम्भीरैः पृथिभिः पूर्व्यैः।

अथा पितृन्त्सुविदत्रा अपीत यमेन ये सधमादं मदन्ति॥

ये ते पन्थाः सवितः पूर्व्यासः (ऋ०वेद १-३-५-११) हिन्दी प्रथम भाग पृष्ठ ३१५-१६

ये ते पन्थाः सवितः पूर्व्यासो रेणवः सुकृता अन्तरिक्षे।

तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव॥ ११॥

अर्थ- हे सविता देव! तुम्हारा मार्ग पूर्व निश्चित धूलि रहित और अन्तरिक्ष में सुनिमित है। वैसे ही मार्गों से आकर आज हमारी रक्षा करो। देव! हमारी बातें देवों के पास पहुँचा दीजिये।

मतौ च। (४-४-१३६)

सहस्रशब्दान्मत्वर्थे घः स्यात्। सहस्रमस्यास्तीति सहस्रियः। ऋग्वेद ७-५६-१४)

सोममर्हति यः। (४-४-१३७)

सोम्यो ब्राह्मणः। यज्ञार्ह इत्यर्थः।

भये च। (४-४-१३८)

सोमशब्दाद्यः स्यान्मयऽर्थे। सो॒म्यं मधु॑। सोममयमित्यर्थः।

---

**शाङ्करी**- अद्भि। अप्शब्दात्तृतीयासमर्थात् संस्कृतमित्येतस्मिन्नर्थे यत्प्रत्ययो भवति। सहस्रेण। तृतीयान्तात् सहस्रशब्दात्सम्मित्मस्मिन्नर्थे घः स्यात्। सम्मितः - सदृशः, तुल्य इत्यर्थः। सहस्रेण सम्मिताः सहस्रियाः। घप्रत्ययस्य "आयनेयीनीयियः" इत्यादिना इयादेशः भसंज्ञायां "यस्येति च" इत्यनेनाकारलोपः। मतौ। मत्वर्थे सहस्रशब्दात् घप्रत्ययो भवति। सहस्रमस्य विद्यते सहस्रियः। तपः सहस्रसाभ्यां विनीनी इति सूत्रेण विनि इनि प्रत्ययौ, अण् च (५-२-१०३) इति सूत्रेण अण् च (५-२-१०२) प्राप्तः तयोरपवादः घप्रत्ययः। सोममर्हति। द्वितीयान्तात्सोमशब्दादर्हतीत्यस्मिन्नर्थे यप्रत्ययो भवति। सोममर्हतीति सोम्यो ब्राह्मणः। मये। प्रकृत सूत्रे सोमग्रहणम्, यप्रत्ययश्चानुवर्तते। सोमशब्दान्मयऽर्थे यप्रत्ययो भवति।

---

**विमर्श**- यस्येदमप्यं हविः। (ऋ०वे० १०-८६-१२) हिन्दी भाग ८ पृष्ठ २४४-४५

नाहमिन्द्राणि रारण सरव्युर्वृषाकपेर्ऋते।
यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः॥ १२॥

अर्थ - इन्द्राणि! अपने हितैषी वृषाकपि के विना मैं प्रसन्न नहीं रहता। वृषाकपि का ही प्रीतिकर द्रव्य (हवि आदि) देवों के पास जाता है। इन्द्र सर्वश्रेष्ठ हैं।

सहस्रियांसो अपां नोर्भयः त। (ऋग्वेद १-१६८-२) हिन्दी भाग २ पृष्ठ ३२६-२७

वव्रासो नयेस्वजाः स्ववस इषं स्वरभिजायन्तः धूतयः।
सहस्रियासो अपां नोर्भयं आसा गावोवन्द्यासो नोक्षणः॥

अर्थ - स्वयं उत्पन्न, स्वाधीन बलशाली और कम्पनशील मरुद्गण मानो

मधोः। (४-४-१३९)

मधुशब्दान्मयऽर्थे यत् स्यात्। मधव्यः। मधुमय इत्यर्थः।

वसोः समुहे च। (४-४-१४०)

चान्मयऽर्थे यत्। वसव्यः। अक्षर समूहे छन्दस उपसंख्यानम्। छन्दः शब्दादक्षर समूहे वर्तमात्त्स्वार्थे यदित्यर्थः। आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरम्, यज्ञेति द्व्यक्षरम्, ये यजामहे इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कार एष वै सप्तदशाक्षराश्छन्दस्यः।

नक्षत्राद् घः। (४-४-१४१)। स्वार्थे।

नक्षत्रियेभ्यः स्वाहा।

सर्व देवत्तातिल्। (४-४-१४२)। स्वार्थे।

सविता नः सुवतु सर्वतातिम्। प्रदक्षिषि द्देवतातिमुराणः।

शिवशभरिष्टस्य करे। (४-४-१४३)। करोतीति करः। पचाद्यच्।

शिवं करोतीति शिवतातिः। याभिः शन्तोती भवथो ददाशुषें। अथों अरिष्टतातये।

भावे च। (४-४-१४४)

शिवादिभ्यो भावे तातिः स्याच्छन्दसि। शिवस्य भावः शिवतातिः। शान्तातिः। अरिष्टतातिः।

---

**शाङ्करी**-मधोः। यत् स्यात् वृत्तिकारः, सुबोधिनीकारश्च यतमेव समर्थन्ति। तत्त्वबोधिनीकृन्मते तु सोममर्हति यः इति पूर्वसूत्रात् य प्रत्ययस्यैवानुवर्तनमुचितम्। वस्तुतस्तु य प्रत्यये "आद्युदात्तश्च (३-१-३)" इति सूत्रेण प्रत्ययस्याद्युदात्तस्वरः स्यात्। यत् प्रत्यये "तिस्वरितम्" ६-१-१८५ इत्यनेन स्वरितस्वरः एव स्यादिति विवेकः। मधव्यः ओर्गुणः इत्यनेनोकारस्य गुणः, अवादेशश्च। वसोः समूहे च। वसुशब्दान्मयडर्थे यत्। वसव्यः। नक्षत्राद्धः। नक्षत्रियेभ्यः। घप्रत्ययस्येयादेशः "आयनेयीनीयियः" इत्यादिना "यस्येति च" इत्यनेनाकारलोपः। सर्वदेवात्तातिल्। सर्वशब्दात् देवशब्दाच्च तातिल्। लकारस्य "हलन्त्यम्" इत्यनेन निवृत्तिः। पचाद्यच् "नन्दिग्रहिपचादिभ्यो" इत्यादिना अच्प्रत्ययः। शिव शम् अरिष्ट शब्देभ्यः कर्तरि तातिल् प्रत्ययः। शिवशमरिष्टस्य इत्यत्र "कर्तृकर्मणोः कृति" इति कृद्योगा षष्ठी इतिशेखरे नागेशभट्टः। उभयप्राप्तौ कर्मणीति सुबोधिनीकारः।

मूर्तिमान होकर अन्न और स्वर्ग के लिए प्रगट होते हैं। असंख्य और प्रशंसनीय धेनु जैसे दूध देती हैं, वैसे ही जलतरंग के समान वे उपस्थित होकर जलदान करते हैं।

**विमर्श-** सहस्रियश् ऋ०वे० ७-५६-१४ हिन्दी भाग ५ पृष्ठ २६८

प्रबुध्न्या व ईरते महांसि प्रनामानिप्रयज्यवस्तिरध्वम्।

सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम्॥

अर्थ - मरुतो, तुम्हारा अन्तरीक्ष में उत्पन्न तेज विशेष रूप से गमन करता है। तुम विशेष रूप से यजनीय हो। जल की वृद्धि करो। मरुतो तुम सहस्र संख्या वाले गृहोत्पन्न और गृहमेधियों द्वारा दत्त इस भाग का आश्रय करो।

सहस्रियः तैत्तिरीय संहिता ४-७-१३ पृष्ठ १९५।

अयमग्निर्वीरतमोवयोधाः सहस्रियो दीप्यतामप्रयुच्छन्।

विभ्राजमानः सरिस्य मध्य उप प्रयात दिव्यानिधाम॥

सोम्याः। (ऋ० वेद १०-५३-७) हिन्दी भाग ८ पृष्ठ ३९-४०

अक्षान हो नह्यतनोत सोम्यां इष्कृणुध्वं रशना ओत पिंशत।

अष्टावन्धुरं वहतामितो रथं येन देवासो अनयन्नभिप्रियम्॥ ७॥

अर्थ - यज्ञ में आने की इच्छा वाले देवता कहते हैं। सोम योग्य देवो रथ में जोतने योग्य घोड़ों को रथ में जोतो। घोड़ों का लगाम साफ करो। घोड़ो को अलंकृत करो। आठ सारथियों को बैठने योग्य रथों को सूर्य रथ के साथ यज्ञ में ले जाओ, इसी रथ से देवता अपने को ले जाते हैं।

सोम्यं मधु (ऋ०वे० ८-२४-१३) हिन्दी भाग ६ पृष्ठ १२०

एन्दुमिन्द्रायसिञ्चत पिबाति सोम्यं मधु।

प्राधसा चोदयाते महित्वना॥

अर्थ - इन्द्र के लिए ही तुम सोमसिञ्चन करो (सोम चुआओ) इन्द्र सोममय मधुरस पियें। वह अपने महत्त्व और अन्न साथ धनादि भेजते हैं।

सर्वताति। (ऋ०वेद १०-३७-१४) हिन्दी भाग ७- पृष्ठ ५५१

सविता पश्चातात्सविता पुरस्तात्सवितोत्तरात्तात्सविताधरात्तात्।

सविता नः सुवतु सर्वताति सविता नो रासतां दीर्घमायुः॥ १४॥

अर्थ - सविता देव पश्चिम पूर्व उत्तर दक्षिण हम सव की सर्वत्र श्रीवृद्धि करें। और हमें दीर्घ परमायु प्रदान करें।

देवतातिम् (ऋ०वेद ३-१९-२) हिन्दी भाग ३ पृष्ठ ७०

प्रते अग्नेहविष्मतीभियर्म्यच्छा सुद्युम्नां रातिनीं घृताचीम्।

**विमर्श-** प्रदक्षिणेदेवतातिमुराणः संरातिविर्वसुभिर्यज्ञमश्रेत्॥ २

अर्थ- अग्नि में हव्ययुक्त तेजस्वी, हव्यदाता और पृतसमन्वित जुहू को तुम्हारे सामने प्रदान करता हूँ। देवों के बहुभानकर्ता अग्नि हमारे दातव्य धन के साथ प्रदक्षिणा करके यज्ञ में सम्मिलित हों।

शन्तातिः। (ऋग्वेद ८-१८-७) हिन्दी भाग ६ पृष्ठ ५१

उतस्यानो दिवा मतिरदिति रूत्यागमत्।

साशन्ताति मयस्करदपस्रिधः॥ ७।

अर्थ- स्तुति योग्य वे अदिति रक्षा के साथ दिन में हमारे पास आवें। वे शान्तिदाता सुख दें। वे वाधकों को दूर करें।

अरिष्टतातिः। (ऋ०वे० १०-६०-८) हिन्दी भाग ८ पृष्ठ ७१

यथा युगंवरत्रयानह्यन्ति धरुणायकम्।

एवादाधार ते मनो जीवातवे न मृत्यवेर्थो अरिष्टतातये॥ ८॥

अर्थ - जैसे रथ धारण करने के लिए रज्जु से दोनों काष्ठों को बाँधते हैं, वैसे ही अग्नि ने तुम्हारे मन को धारण कर रखा है ताकि तुम जीवित और कल्याण स्वरूप बनो और तुम्हारी मृत्यु दूर हो।

वसव्यः। (ऋ०वेद २-९-५) हिन्दी भाग २ पृष्ठ ४७५-७६

उभयन्ते न क्षीयते वसव्यं दिवे दिवे जायमानस्य दस्म।

कृधि क्षुमन्तं जरितारमग्ने कृधि पतिं स्वपत्यस्य रायः॥ ४॥

अर्थ - दर्शनीय अग्नि! तुम प्रतिदिन उत्पन्न होते हो। तुम्हारा दिव्य और पार्थिव धन नष्ट नहीं होता। फलत तुम स्तोत्र कर्ता यजमान को अन्न युक्त करो। उसे सुन्दर अपत्य वाले धन का स्वामी बनाओ।

ऋ०वेद ७-३७-३) हिन्दी भाग ५ पृष्ठ २१७

उवोचिथ हि मधवन्देष्णं अहो अर्भस्य वसुनो विभागे।

उमाते पूर्णा वूसना गभस्ती न सूनृतानियमते वसव्या॥

अर्थ - धनी इन्द्र, तुम विशेष और अल्प धनदान के समय धन का सेवन करते हो। तुम्हारी दोनों बाहें धन से पूर्ण हैं। धन प्राप्ति में तुम्हारा वचन बाधक नहीं होता।

सर्वतातिम्। (ऋ०वेद ३-५४-११) हिन्दी भाग ३ पृष्ठ २९३

हिरण्यपाणिः सविता सुजिह्वस्त्रिरादिवो विदथे पत्थमानः।

देवेषु च सवितः श्लोकमश्रेरादस्मभ्यमासुव सर्वतातिम्॥ ११॥

**विमर्श**- अर्थ - दानार्थ हिरण्य को हाथ में रखने वाले शोभनवचन वाले सविता यज्ञ के तीनों सवनों में आकाश से आते हैं। हे सविता तुम स्तोताओं के स्तोत्र को प्राप्त करो। इसके अनन्तर सम्पूर्ण अभिलषित फल को हम लोगों के लिए प्रेरित करो।

शंतातिः - अरिष्टतातिः। (ऋ०वेद १०-१३७-४) हिन्दी भाग ८ पृष्ठ ५७१

आत्वागमं शंतातिभिरथो आरेष्टतांतिभिः।
दक्षं ते भद्रमाभार्षं परायक्ष्मं सुवामिते ॥ ४ ॥

अर्थ - यजमान, तुम्हारे लिए सुखकर और अहिंसा कर रक्षणों के साथ मैं आया हूँ। तुम्हारे उत्तर बलाधान का कार्य भी मैंने किया है। इस समय तुम्हारे रोग को मैं दूर कर देता हूँ।

॥ इति चतुर्थोऽध्यायः ॥

## ॥ पञ्चमोऽध्यायः ॥

सप्तनोऽञ्छन्दसि। (५-१-६१)

तदस्य परिमाणम्। (५-१-५७) इति वर्ग इति च। सप्त सार्प्तानि असृजत्। शन् शतोर्डिनिश्छन्दसि तदस्य परिमाणमित्यर्थे वाच्यः। पञ्चदशिनोऽर्धमासाः। त्रिंशिनो भासाः। विंशतेश्चेति वाच्यम्। विंशिनोऽङ्गिरसः। युष्मदस्मदोः सादृश्ये मतुब् वाच्यः। त्वावतः पुरुवसो। न त्वावाँ अ॒न्यः। य॒ज्ञं विप्रस्य भावतः।

छन्दसि च। (५-१-६७)। प्रातिपदिकमात्रात्तदर्हतीति यत्।

सा॒द॒न्यं विद॒थ्यम्।

वत्सरान्ताच्छन्दसि। (५-१-९१) निर्वृत्तादिष्वर्थेषु। इद्वत्सरीयः।

---

**शाङ्करी**- सप्तनोऽञ्। सप्तन् शब्दाच्छन्दसि विषयेऽञ् प्रत्ययो भवति वर्गेऽभिधेये। सप्तसाप्तान्यसृजत् (तै०संहिता ५-४-५) सप्तनशब्दादञि "नस्तद्धिते" इति टिलोपे तद्धितान्तत्वात्प्रातिपदिकसंज्ञां जस्। जश्शसोः शिः। नपुंसकस्य झलचः इति नुम्। उपधादीर्घः। शन्शतोः। डित् करणं शदन्तस्य टिलोपार्थम्। पञ्चदशिन इति। पञ्चदशाहानि परिमाणामेषामिति डिनिः टिलोपः। एतेन त्रिंशिनो व्याख्याताः। विंशिनोऽङ्गिरस, इति विंशतिर्गोत्राणि परिमाणमेषामिति विग्रहे डिति कृते "तिविंशतेर्डिति" इति तिशब्दलोपे कृते "यस्येति च" इति लोपः। आङ्गिरसाऽयास्य-गार्ग्यगौतम इत्यादिप्रवरभेदभिन्नानि विंशतिरवान्तरगोत्राणि परिमाणमेषामित्यर्थः। त्वावत इति। त्वमिवत्वावान् तस्य त्वावतः। अहमिव मावान् तस्य मावतः। प्रत्ययोत्तरपदयोश्च इति त्वमादेशौ। आसर्वनाम्न इत्यात्वम्। छन्दसि च। सादन्यम्। सदनं गृहमर्हतीति

---

**विमर्श**- त्वावतः पुरुवसो (८-४६-१) ऋग्वेद

ओम् त्वावतः पुरुवसो वयमिन्द्र प्रणेतः। स्मसि स्थानर्हरीणाम्।

हे पुरुवसो! बहुधनी और कर्म प्रापक इन्द्र तुम्हारे समान पुरुष के ही हम आत्मीय है। तुम हरी नाम के अश्वों के अधिष्ठाता हो।

न त्वावां अन्य (६-२१-१० ऋग्वेद)

इम उत्वा पुरु शाक प्रयज्यो जरितारो अभ्यर्चन्त्यर्कैः।

संपदिपूर्वात्ख च। (५-१-९२)। चाच्छः।

संवत्सरीणः। संवत्सरीयः। परिवत्सरीण। परिवत्सरीयः।

छन्दसि धस्। (५-१-१०६)

ऋतुशब्दात्तस्य प्राप्तमित्यर्थे। भाग ऋत्वियः।

उपसर्गाच्छन्दसि धात्वर्थे। (५-१-११८)

धात्वर्थविशिष्टे साधने वर्तमानात्स्वार्थे वतिः स्यात्। यदुद्वतो निवतः। उद्गतान्निर्गतादित्यर्थः।

थट् च छन्दसि। (५-२-५०)

नान्तादसंख्यादेः परस्य उटस्थट् स्यान्मट् च। पञ्चथम्। पञ्चभम्।

छन्दसि परिपन्थि परिपरिणौ पर्यवस्थापरि। (५-२-८९)। पर्यवस्थाता शत्रुः। अपत्यं परिपन्थिनम्। मा त्वा परिपरिणो विदन्।

---

सादन्यः। अन्येषामपि दृश्यते इति दीर्घः। विदथ्यम्। विदथो यज्ञस्तमर्हतीत्यर्थः। इद्वत्सरीयः। इद्वत्सरेपानिर्वृत्तः इद्वत्सरमधीष्टो भृतो भूतो भावी वा इद्वत्सरीयः। इद्वत्सरेदावत्सरशब्दौ पञ्चवर्षे युगे द्वयोर्वर्षयोः संज्ञे। एवं संवत्सरपरिवत्सरशब्दावपि। शाङ्करी-संपरिपूर्वात्। संपरिपूर्वाद्वत्सरान्तात्प्रातिपदिकाच्छन्दसि विषये निर्वृत्तादिष्वर्थेषुः रवः स्यात् चच्छः। छन्दसि घस्। समयस्तदस्य प्राप्तम् इत्यतस्तदस्य प्राप्तम् इति ऋतोरण इत्यतः ऋतोरिति चानुवर्तते। तदाह ऋतुशब्दादित्यादि। ऋत्विय इति। सिति च इति पदत्वेन भत्वे निरस्ते "ओर्गुणः" इति गुणाभावे यण्। उपसर्गात्।

---

**विमर्श-** श्रुधी हवमाहु वतो हुवानो नत्वावाँ अन्यो अमृतत्वदस्ति॥

अर्थ - हे बहुत शक्तिवाले अतिशय यजनीय इन्द्र ये स्तोता लोग अर्चनीय स्तोत्रों के द्वारा तुम्हारा स्तवन करते हैं। हे अमरणशील इन्द्र स्तूयमान होकर तुम स्तुतिकरने वाले मेरे स्तोत्र को सुनो क्योंकि तुम्हारे सदृश दूसरे देव नहीं हैं।

यज्ञं विप्रस्य भावतः - ऋग्वेद १-१४२-२।

घृतवन्तभुपमासि मधुमन्तं तनूनपात्।

यज्ञं विप्रस्य यावतः शशमानस्थं दाशुषः॥

अर्थ - तनूनपात नामके अग्नि। मेरे समान जो हव्य दाता और मेधावी यजमान तुम्हारी स्तुति करता है उसेक घृत और मधु से संयुक्त यज्ञ में आकर यज्ञ समाप्ति पर्यन्त रहो।

बहुलं छन्दसि। (५-२-१२२)

मत्वर्थे विनिः स्यात्। (वा- छन्दोविन् प्रकरणेऽष्ट्रामेखला द्वयोभयरुजा हृदयानां दीर्घश्चेति वक्तव्यम्। इति दीर्घः। महिष्ठमुभयाविनम्। शुनमष्ट्राव्यचरत्।

छन्दसीवनिपौ च वक्तव्यौ। ई। र॒थीर॑भूत्। सु॒म॒ङ्ग॒लीरि॒यं व॒धूः। अघवानमीमहे।

तयोर्दार्हिलौ च छन्दसि। (५-३-२०)

इदन्तदोर्यथासंख्यं स्तः। इदा हि व॒ उ॑पस्तुतिम्। तर्हि।

था हेतौ च छन्दसि। (५-३-२६)

किमस्था स्याद्धेतौ प्रकारे च। क॒था ग्राम॒ं पृ॑च्छसि क॒था दा॑शेम। पश्च पश्चा च छन्दसि। (५-३-३३)

अवरस्य अस्तात्यर्थे निपातौ। पश्च हि सः। नो ते पश्चा। तुश्छन्दसि। (५-३-५९) तृजन्तातृन्नन्ताच्च इष्ठन्नीयसुन्नौ स्तः। आसुतिं करिष्ठः। दोहीयसी धेनुः।

---

इहधातु शब्देन धातुवाच्या क्रियालक्ष्यते। सोऽर्थः प्रयोजनं यस्य साधनस्य तस्मिन् वर्तमानादित्यर्थस्तदाह धात्वर्थ विशिष्ट इति। उपसर्गाश्च पुनरेवमात्मकाः यद ते श्रुतायां क्रियायां तामेव विशिंषन्ति। यथा आगच्छति। यत्र तु श्रूयते तत्र किंयाविशिष्टं साधनमाहुः। निष्कौशाम्बिः। तथा च यत्र क्रिया पदं श्रूयते तत्रैव यथा स्यादित्येवमर्थं धात्वर्थ इत्युक्तम्। थट च। तस्य पूरणे इत्यतःडडिति नान्तादसंख्यादेः इति च। तदाह नान्तादिः। पञ्चथमिति। पञ्चानां पूरणमित्यस्मिन्नर्थे डटि कृते तस्य यडागमः। छन्दसि। परिपन्थिन् परिपरिन् एतौ निपात्येते छन्दसि पर्यवस्थातरि वाच्ये। पर्यवस्थाता प्रतिपक्षः सपत्न इत्युच्यते। निपातनं चात्र पर्यवस्यात् शब्दात्स्वार्थे इनि प्रत्ययोऽवस्थातृशब्दस्य पन्थि परि एतावादेशौ च निपात्येते। बहुलम्। अस्मायामेधास्रजो विनिः इति वर्तते। तदाह विनिः स्यादिति। अष्ट्रावीति। अशेः ष्ट्रन् अष्ट्रा। दंष्टा पर्यायोऽयम्। मेखलावी द्वयावी उभयावी। रुजावी हृदयावी। अत्र द्वयोभहृदयान्येव दीर्घत्वं प्रयोजयन्ति। अन्येषां स्वत एव दीर्घत्वात्।

शाङ्करी- ईश्च वनिप् च ईवनिपौ। ईप्रत्ययस्योदाहरणमुच्यते। रथीरिति। रथोऽस्यास्तीति रथी। सुमङ्गलीरिति। सुष्ठु मङ्गलमिति। सुःपूजायाम् इति समासः। ततोऽनेन मत्वर्थीय

प्रत्नपूर्वविश्वेमात्थाल्छन्दसि। (५-३-१११)

इवार्थे तं प्रत्नथा पूर्वथा विश्वथेमथो।

अमु च छन्दसि। (५-४-१२)

किमेत्तिङव्ययघादित्येव। प्र तं नय प्रतरम्।

ज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि। (५-४-४१)। स्वार्थे यो नों दुरेवों वृकर्तिः।

ज्येष्ठतातिं वर्हिषदम्।

अनसन्तान्नपुंसकाच्छन्दसि। (५-४-१०३)।

तत्पुरुषादृच् स्यात्समासान्तः। ब्रह्मसामं भवति। देवच्छन्दसाति।

बहुप्रजाश्छन्दसि च। (५-४-१२३)।

बहुप्रजा निर्ऋतिमाविवेश।

छन्दसि च। (५-४-१४२) दन्तस्य दतृ शब्दः स्याद्बहुव्रीहौ।

उभयतोदतः प्रतिगृह्णाति।

ऋतश्छन्दसि। (५-४-१५८)। ऋदन्ताद् बहुव्रीहेर्न कप्। हता माता यस्य हतमाता।

---

ईकारप्रत्ययः। मघवानिति मघं घनं तदस्यास्तीति वनिपि, मतुपि तु मघवच्छब्दः। तयोः। तच्छब्देन इदमोर्हिल तदो दा च इति सन्निहिताविदन्तदौ परामृश्येते। तदाह इदन्तदोरिति। सूत्रेव्यत्ययेन पञ्चम्याः स्थाने षष्ठी। यथा संख्यं स्तः इति। इदं शब्दाद्वा तच्छब्दादृर्हिल। इदा। इदम् शब्दाद्वा इदम इश इत्यनेनेशादेशः। था हेतौ। प्रकारवचने थाल् इत्यत। प्रकारवचन इति किमश्चेति तदाह किमस्था स्यादित्यादि। कथा ग्रामं न पृच्छसि। केन हेतुना पृच्छसीत्यर्थः। तस्य प्राग्दिशो विभक्ति इत्यधिकाराद्विभक्तिसंज्ञायां "किमः कः" इति कादेशः। प्रकारवचने उदाहरणमाह कथादाशेम केन प्रकारेणेत्यर्थः। पश्च पश्चा। अवरस्य पश्चभावः अकराकरौ च प्रत्ययौ निपात्येते। अस्तात्यर्थे इति। दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तास्तिः। करिष्ठ इति। कर्तृशब्दादिष्ठन्। तुरिष्ठेमेयः सु इति लृ लोपः। दोहीयसीति। अतिशयेन दोग्ध्रीत्यर्थः। लिङ्गविशिष्टपरिभाषया दोग्ध्री शब्दात् प्रत्ययः। भस्याढे: इति पुंवद्भावेन ङीपो निवृत्तिः। ततः तु रिष्ठेमेयः सु इति तृचि लोपः। निमित्ताभावाद्धत्व कुत्वयोरपि निवृत्तिः।

शाङ्करी- प्रत्न पूर्व विश्व इञ् एभ्यस्थाल् स्यात्। अमु च किमेत्तिङ्व्ययघाद् द्रव्यप्रकर्षे वर्तमानादमुप्रत्ययो भवति। प्रतरमिति। प्रकर्षार्थात् प्रकर्षे तरप्। प्रकृष्टतर इतिवत् तदन्तादमुः। स्वरादिषु अम् आम् इति पठ्यते तेन तदन्तस्याव्ययत्वे सुपो लुक्। अत्र दित्करणम् इचएकाचोऽम्प्रत्ययवच्च इत्यत्रास्य ग्रहणमाभूत्। यदि स्यात्तर्हि अत्रापि यद्दृष्टं कार्यं तदप्यतिदिश्येत। तत्र को दोषः। इह स्त्रियं मन्यमानः। यस्येति लोपः प्राप्नोति। अनसन्तात्। अन्नन्तस्योदाहरणमाह। ब्रह्मसाममिति। असन्तस्याह। देवच्छन्दसानीति। बहुप्रजाः। बहुप्रजा इति निपात्यते छन्दसि। बहुप्रजा इति। बह्व्यः प्रजा यस्येति बहुव्रीहिः असिच् प्रत्ययः। "यस्येति च" इत्यकारलोपः। अत्वसन्तस्य इति दीर्घः। रुत्वविसर्गौ। छन्दसि च वियसि दन्तस्य दतृ इत्यतो दन्तस्य दतृ इत्यनुवर्तते। तदाह। दन्तस्य दतृ स्यादिति। उभयतोदत इति। उभयतो दन्ता यस्येति विग्रहः। हृतामाता इति। नद्यृतश्च इति नित्यं कप् प्राप्तः।

॥ इति पञ्चमोऽध्यायः ॥

# ॥ षष्ठोऽध्यायः ॥

एकाचो द्वे प्रथमस्य ६-१-१ । छन्दसिवेति वक्तव्यम्। यो जागार। दाति प्रियाणि। तुजादीनां दीर्घोऽभ्यासस्य ६-१-७। तुजादिराकृतिगणः। प्रभरा तूतुजानः। सूर्ये मामहानम्। दाधार यः पृथिवीम्। स तूताव।

बहुलं छन्दसि (६-१-३४) ह्वः संप्रसारणं स्यात्। इन्द्रमाहुव ऊतये। ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि। ऋचशब्दे परे त्रेः संप्रसारणमुत्तरपदादिर्लोपश्चेति वक्तव्यम्। तृचं सूक्तम्। छन्दसि किम् त्र्यृचानि। रयेर्मतौ बहुलम्। रेवान्। रयिमान्पुंष्टिवर्धनः।

चायः की। (६-१-३५) । न्य न्यं चिक्युर्न निचिक्यूरन्यम्। लिटि उसि रुपम्।

बहुलग्रहणानुवृत्तेर्नेह। अग्ने ज्योतिर्निचाय्य।

---

**शाङ्करी**- जागार। जागृ निद्राक्षये। लिटि प्रथमपुरुषैकवचनम्। दातीति। डुदाञ् दाने लट्। शपः श्लुः। श्लौ इति नित्ये द्वित्वे प्राप्ते विकल्पः। तूतुजान इति। तुजेर्लिट् तस्य कानजादेशः। मामहानमिति। महपूजायां कानच्। तूतावेति। तुः सौत्रो धातुः तस्माल्लिट्। बहुलं छन्दसि। ह्वः सम्प्रसारणम् इति वर्तते। तदाह ह्वः सम्प्रसारणं स्यादिति। आहुवे इति। आङ् पूर्वाद् ह्वेञो लडात्मने पदोत्तमैकवचनम्। बहुलं छन्दसि इति शपो लुकि कृते सम्प्रसारणमुवङादेशश्च। तृचं सूक्तमिति। तिस्रः ऋचो यस्मिस्तत् तृचम्। ऋक्पूरब्धूः पथामानक्षे इति समासान्तः अः। रयेर्मतौ। रयिशब्दस्य मतौ परतः सम्प्रसारणं स्याच्छन्दसि। रेवानिति छन्दसीरः इति वत्वम्। रयि मानिती। बहुलग्रहणात्सम्प्रसारणावत्वयोरभावः। चायः की। चायतेर्बहुलं कीत्ययमादेशः स्याच्छन्दसि। चिक्युरिति। "कुहोश्चुः" इति चुः। निचाय्येति। चाय पूजा निशामनयोः अस्मात्क्त्वा। गतिसमासे "समासे ऽनञ्पूर्वो क्त्वो ल्यप्" इति ल्यबादेशः।

---

**विमर्श**- दाति प्रियाणि चिद्वसुः (ऋग्वेद ४-८-३)

स वेद देव आनम देवाँ ऋतायते दमे। दाति प्रियाणि चिद्वसु।

अर्थ - वे द्युतिमान् हैं। इन्द्रादि देवताओं को यजमानों द्वारा क्रमपूर्वक नमस्कार करना जानते हैं। वे यज्ञ गृह में यज्ञाभिलाषी यजमान को अभीष्ट धन दान करते हैं।

**विमर्श**- प्रभरा तूतुजानः। (१-६१-१२) ऋग्वेद।

अस्मा इदु प्रभरा तूतु जानो वृत्राय वज्र भीशानः कियेधाः।
गोर्नपर्वविरदातिरश्चेष्यनर्णास्यपांचरध्यै॥

अर्थ - इन्द्र क्षिप्रकारी, सर्वेश्वर और अपरिमित शक्तिशाली हैं। इन्द्र तुम इस वृत्र के ऊपर वज्र प्रहार करो। पशु की तरह वृत्र के शरीर की सन्धियाँ तिर्यग्भान से अवस्थित वज्र से काटो, ताकि वृष्टि बाहर हो सके और पृथिवी पर जल विचरण कर सके।

दाधार यः पृथिवीम् (ऋग्वेद ३-३२-८)

इन्द्रस्य कर्म सुकृतापुरुणिव्रतानि देवा नमिनन्ति विश्व।
दाधार यः पृथिवी द्यामुतेमां जजान सूर्यं मुषसंसुदंसाः॥ ८॥

अर्थ - सारे देवगण इन्द्र के कर्म-सुकृत और बहतर यज्ञादि की हिंसा नहीं कर सकते। इन्द्र देव भूलोक, द्युलोक, और अन्तरिक्ष लोक को धारण किये हुए हैं। उनका कर्म रमणीय है। उन्होंने सूर्य और ऊषा को उत्पन्न किया है।

सतूताव नैनम - ऋग्वेद १-९४-२

यस्मै त्वमायजसे स सांधत्य नर्वाक्षेति दधते सुवीर्यम्।
सतूताव नैनमश्नोत्यं हतिरग्ने सरव्येमारिषामावयं तव॥

अर्थ - अग्नि! जिसके लिए तुम यज्ञ करते हो उसकी अभिलाषा पूर्ण होती है और उत्पीणित न होकर निवास करता, महाशक्ति धारण करता और वर्द्धित होता है। उसके कभी दरिद्रता नहीं मिलती। हे अग्नि तुम्हारे हमारे वन्धु होने पर हम हिंसित नहीं होंगे।

इन्द्रमाहुव ऊतये (ऋग्वेद १-१११-४)

ऋभुक्षणमिन्द्रमाहुव ऊतय ऋभून्वाजान्मरुतः सोमपीतये।
उभामित्रावरुणा नूनमश्विना तेनो हिन्वन्तु सातये धिये जिषे॥

अर्थ -अपनी रक्षा के लिए महान् इन्द्र को तथा ऋभु विभु वाज और मरुतों को सोम पानार्थ हम बुलाते हैं हम मित्र वरुण और अश्विनी कुमारों को भी बुलाते हैं। वे हमारे धन, यज्ञ, कर्म ओर विजय को सिद्ध कर दें।

इन्द्रश्च विष्णो यदपस्पृधेथाम्। (ऋग्वेद ६-६९-८)

उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्च नैनोः।
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वितदैरयेथाम्॥

अर्थ - इन्द्र और विष्णु तुम विजयी हो, कभी पराजित नहीं होते। तुम

अपस्पृधेथामानृचुरानृहुश्चि च्युष्मेतित्याज श्राताश्रित माशीराशीर्ताः। (६-१-३६) एते छन्दसि निपात्यन्ते। इन्द्रश्च विष्णो यदपस्पृधेथाम्। स्पर्धेर्लङि आथाम्। अर्कमानृचुः। वसून्यानृहुः। अर्चे रर्हेश्च लिट्युसि। चिच्युषे। च्युङो लिटि थासि। यस्तित्याज। त्यजेर्णलि। श्रातास्त इन्द्र सोमाः। श्रिता नो ग्रहा। श्रीञ् पाके निष्ठायाम्। आशिरं दुहे। मध्यत आशीर्तः। श्रीञ एव क्विपि निष्ठायां च।

रिवदेश्छन्दसि। (६-१-५२)। शिददैन्ये। अस्यैव आद्वा स्यात्। चिखाद। चिखेदेत्यर्थः।

शीर्षश्छन्दसि। (६-१-६०)। शिरः शब्दस्य शीर्षन् स्यात्। शीर्ष्णः शीर्ष्णो जगतः।

---

**शाङ्करी**– स्पर्धेलङ्याथामिति। द्विर्वचनं रेफस्य संप्रसारणमकारलोपश्च निपातनात्। अस्पर्धेथामिति भाषायाम्। अपरे तु अपपूर्वस्य स्पर्धेर्लङ्याथामि संप्रासारणमलोपश्च निपातनात्। बहुलं छन्दस्यमाङ्योगेऽपि, इत्यडागमाभावः। तन्मते प्रत्युदाहरणमपास्यर्धेथामिति भाषायाम्। अर्चेरर्हेश्चेति। संप्रसारणमलोपश्च निपातनात्। ततो द्विर्वचनमुरदत्वम् 'अत आदेः' इति दीर्घत्वम्। तस्मान्नुड् द्विहलः इति नुडागमः। आनचुरानहुरिति भाषायाम्। च्युङोलिटीति। अभ्यासस्य संप्रसारणमनिट्त्वं च निपातनात्। चुच्युविषे इति भाषायाम्। त्यजेर्णलीति। त्यज वयोहानौ भ्वादिः अभ्यासस्य संप्रसारणं निपातनात्। तत्याज इति भाषायाम्। श्राता इति। श्रीञ् पाके क्रयादिः

---

दोनों में से कोई भी पराजित होने वाला नहीं है। तुमने जिस वस्तु के लिये असुरों के साथ स्पर्धा की है वह यद्यपि त्रिधा (लोक, वेद और वचन के रूपों में) स्थित और असंख्य है तथापि तुमने अपने विक्रम से उसे प्राप्त किया है।

**विमर्श**- अर्कमानृचुः। (ऋग्वेद १-१९-४)

य उग्रा अर्कमानृचुरनाधृष्टा स ओजसा। मरुद्भिरग्न आगाहि।

अर्थ – जिन उग्र और अजेय बलशाली मरुतों ने जल वृष्टि की थी। अग्निदेव उन्हीं के साथ पधारो।

उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्च नैनोः।
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वितदैरयेथाम्॥

अर्थ – इन्द्र और विष्णु तुम विजयी हो कभी पराजित नहीं होते। तुम दोनों

निष्ठायाम् इत्यस्य श्राभावः। श्रिता इति। तस्यैव श्रीणातेर्ह्रस्वत्वं च। आशिरमिति। आङ्पूर्वस्य श्रीणातेः क्विप् धातोः शिर् इत्यादेशः। तस्माद् द्वितीयैकवचनम्। आशीर्ल इति। श्रीञः आङपूर्वस्य शिर् इत्यादेशः। तस्माद् द्वितीयैकवचनम्। आशीर्त इति। श्रीञः आङ्पूर्वस्य शिर् इत्यादेशः। निष्ठायाश्च नत्वाभावो निपातनात्। हलि च इति दीर्घः। रिवदेश्छन्दसि। आदे च उपदेशे इत्यत आदिति एच इति च वर्तते, विभाषा लीयतेः इत्यतो विभाषेति च। तदाह आद्वा स्यादिति। चिखादेति। व्यत्यथेन परस्मैपदम्। शीर्ष्ण इति अल्लापोऽनः इत्यल्लोपः। रषाभ्याम् इति णत्वम्। पूर्वस्मादपि विधौ स्थानिवद्भावः। इति पक्षे तु अट्कुप्वाङ् इत्यनेन।

---

में से कोई भी पराजित होने वाला नहीं है। तुम ने जिस वस्तु के लिए असुरों के साथ स्पर्धा की है वह यद्यपि त्रिधा (लोक वेद और वचन के रूपों में) स्थित और असंख्य है, तथापि तुमने अपने विक्रम से उसे प्राप्त किया है।

**विमर्श-** अर्कमानृचुः। (१-१९-४ ऋग्वेद)

य उग्रा अर्कमानृचुरनाधृष्टा स ओजसा।
मरुद्भिरग्न आगहि।

अर्थ - जिन उग्र और अजेय बलशाली मरुतों ने जलवृष्टि की थी। अग्नि देव उन्हीं के साथ पधारो।

चिच्युषे - (ऋग्वेद ४-३०-२०)

सद्यो दुतासि वृत्रहन्त्समान इन्द्र गोपतिः। यस्ता विश्वानि चिच्युषे॥ २२॥

अर्थ - हे इन्द्र तुमने इन समस्त शत्रुओं को प्रच्युत किया है। हे शत्रुओं के हिंसक इन्द्र तुम गौओं के पालक हो। तुम सम्पूर्ण यजमानों के लिये समान रूप से प्रख्यात हो।

तित्याज (ऋग्वेद १०-७१-६)

यस्तित्याज सचि विदं सखायं न तस्य वाच्यपि भागो अस्ति।
यदीं श्रृणोत्यलकं श्रृणोति न हि प्रवेदं सुकृतस्य पन्थाम्॥ ६॥

अर्थ - जो विद्वान् मित्र को छोड़ देता है, उसकी वाणी से कोई फल नहीं है। वह जो कुछ सुनता हैं व्यर्थ ही सुनता है। वह सत्कर्म का मार्ग नहीं जान सकता।

आशिरं दुह्रे (ऋग्वेद ३-५३-१४)

किं ते कृण्वन्ति की कटेषु गावो ना शिरं दुह्रे नतं पन्ति धर्मम्।
आनो भर प्रमगन्दस्य वेदो नैचा शाखं मघवन्नधयानः॥

वा छन्दसि। (६-१-१०६)। दीर्घाज्जसि इचि च पूर्वसवर्णदीर्घो वा स्यात्। वाराही। वाराह्यौ। मानुषीरीलते विशः। उत्तरसूत्रद्वयेऽपीदं वाक्य भेदेन संबध्यते। तेनामि पूर्वत्वं वा स्यात्। शर्मीं च शम्यं च। सूर्म्यं सुषिरामिवं। संप्रसारणाच्च। (६-१-१०८)। इति पूर्वरूपमपि वा। इज्यमानः यज्यमानः।

शेश्छन्दसि बहुलम्। (६-१-७०) लोपः स्यात्। या ते मात्राणाम्। ताता पिण्डानाम्। एमन्नादिषु छन्दसि पररूपं वक्तव्यम्। अपां त्वेमन्। अपां त्वोद्मम्।

मय्यप्रवय्ये च छन्दसि। (६-१-८३)। विभेत्यस्मादिति। भय्यः। वेतेः प्रवय्या इति स्त्रियामेव निपातनम्। प्रवेयमित्यन्यत्र। छन्दसि किम् - भेयम्। प्रवेयम्। ह्रदय्या उपसंख्यानम्। ह्रदे भवा ह्रदय्या आपः। भवे छन्दसि यत्।

---

**शाङ्करी**- वा छन्दसि। नादिचि दीर्घाज्जसि च इति वर्तते। तदाह दीर्घादित्यादि। वाराही इति। वराहस्य विकार इति अवयवे च प्राण्योषधिवृक्षेभ्यः इति प्राणि

---

**विमर्श**- अर्थ - हे इन्द्र! अनार्यों के निवास योग्य देशों में कीकट समूह के मध्य में गौऐं तुम्हारे लिये क्या करेंगी। वे सोम के साथ मिश्रित होने योग्य दुग्ध दान नहीं करती हैं। दुग्ध प्रदान द्वारा वे पात्र को भी दीप्त नहीं करती हैं। हे धनवान् इन्द्र उन गौवों को तुम हमारे निकट लाओ और प्रमगन्द (अत्यन्त कुसीदिकुल) के धन का भी आनयन करो। हे मघवन् नीच वंश वालों का धन हमें दो।

मध्यत अशीतर्तः। (ऋग्वेद ८-२-९)

शुचिरसि पुरुनिष्ठाः क्षीरैर्मध्यत आशीर्तः। दध्ना मन्दिष्ठः शरस्य।

हे सोम तुम पवित्र और अनेक पात्रों में अवस्थित हो और बीच में क्षीर तथा दधि द्वारा मिश्रित हो। तुम वीर इन्द्र को सबसे अधिक प्रमत्त हो।

शीर्ष्णः शीर्ष्णो जगतः। (ऋग्वेद ७-६६-१५)

शीर्ष्णः शीर्ष्णो जगतस्तस्थुषस्पतिं समया विश्वमारजः।

सप्तस्वसारः सुविताव सूर्यं वहन्ति हरितो रथे।

अर्थ - मस्तक के भी मस्तक (सब के मस्तक) स्थावर जंगम के पति और रथाराही सूर्य को संसार के कल्याण के लिए सात गतिपरायण हरितगण (अश्व) सारे संसार के समीप ले जाते हैं।

**शाङ्करी** – रजतादिभ्योऽञ् इति ङीप्। द्विवचने पूर्वसवर्णदीर्घः। पूर्वसवर्णाभावे यणादेशः। मानुषीरिति। प्रथमाबहुवचनम्। मनोर्जातावञ्यतौ षुक् च' इति अञ् मनो षुगागमः। सूत्रद्वयेऽपीदम्। अमि पूर्वः संप्रसारणाच्च इत्यत्र। वाक्यभेदेनेति। अकः अमि पूर्वरूपं वा स्याच्छन्दसि, तथा सम्प्रसारणाच्च इति पूर्वरूपं वा स्याच्छन्दसि। तदाह तेनेति। शम्यं चेति। विकल्पविधानसामर्थ्यात्पूर्व रूपत्वाभावे पूर्वसवर्णदीर्घोऽपि न भवति। तयोरत्र विशेषाभावादिति यणादेश एव भवति। यज्यमानः। यजेर्लटः शानच्। सार्वधातुके'' इति यक् आने मुक् इति मुक्। ग्रहिज्या इति संप्रसारणं पूर्व वैकल्पिकत्वादभावे यण्। या ते इति यानीत्यर्थः। यच्छब्दात्परस्यशेर्लोपे कृते प्रत्ययलक्षणेनत्यदादीनामः इति अत्वे। नपुंसकस्य झल चः'' इति नुम्। सर्वनामस्थाने च इति दीर्घः। न लोपः। ता ता इति। तानि तातीत्यर्थः। पूर्ववत्। भप्यप्रवय्ये। विमेते प्रपूर्वस्य वी इत्येतस्य च यति प्रत्यये परतश्छदसि विषये यादेशो निपात्यते। भय्य इति। कृत्यल्युटः शति अपादाने यत्। हृदय्या इति। अकारस्यायादेशः।

---

**विमर्श**– त्वामग्ने मानुषी रीलते विशो होत्रा विदं विविचिं रत्न धातमम्।
गुहा सन्तं सुभग विश्व दर्शतं तुविष्वण संसुयजं घृत श्रियम्॥

अर्थ – हे सुन्दर धन विशिष्ट अग्नि मनुष्य गण तुम्हारी स्तुति करते हैं। तुम होमविद विवेचक रत दाताओं के मध्य में श्रेष्ठ गुहा स्थित सबके दर्शनयोग्य प्रभूत ध्वनियुक्त यज्ञकारी और घृतग्राहक हो।

ऋग्वेद (१-६९-१२)

सुदवो असि वरुण यस्यते सप्तसिन्धव। अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव।

हे जलाभिमानी वरुणदेव तुम सुदेव हो जिनके तालु को गंगा आदि सात नदियाँ सर्वदाजिह्वा में वहति हैं।

समुद्रस्येमन् त्वाजसनेयि संहिता १३-१७

प्रजापतिष्ट्वा सादयत्वपां पृष्ठे समुद्रस्येमन्।
व्यचस्वतीं प्रथस्वतीं प्रथस्व पृथिव्यसि॥

अर्थ – हे स्वयमातृण्णे प्रजाति ने तुम्हें अवकाशवाली और विस्तारयुक्त बनाया है, जल के ऊपर और समुद्र में तुम्हें स्थापित किया है। तुम प्रजापति के द्वारा विस्तार को प्राप्त होकर भूमि के निकट तक पहुँच गई हो, इसलिये तुम पृथिवी रूप हो।

अपां त्वेमन् अपां त्वाद्यत् १३-५३ शुक्लयजुर्वेद माध्यन्दिनसंहिता।

अपां न्वेमन् सादयाम्यपां त्वोद्यन् सादयाम्यपां त्वा भस्मन् सादयाम्यपां

प्रकृत्यान्तः पादमव्यपरे। (६-१-१५) ऋक्पादमध्यस्थ एङ्प्रकृत्या स्यादति परे न तु वकारयकार परेऽति। उपप्रयन्तो अध्वरम्। सुजाते अश्व सूनृते। अन्तः पादं किम्- एतास एतेऽर्चन्ति। अव्यपरे किम्- तेऽवदन्। अव्याद्वद्यादवक्रमुखतायमवन्तववस्युषु च। (६-१-११६)। एषु व्यपरेऽप्यति एङ्प्रकृत्या। वसुभिर्नो अव्यात्। मित्रमहो अवद्यात्। मा शिवासो अवक्रमुः। ते नो अव्रत। शतधारो अयं मणिः। ते नो अवन्तु कुशिकासो अवस्यवः। यद्यपि बह्वृचैस्तेनोऽवन्तु रथतूः। सोऽयमागात्, तेऽरुणेभिस्त्यादौ प्रकृतिभावो न क्रियते तथापि बाहुलकात्संमाधेयम् प्रातिशाख्ये तु वाचनिक एवायमर्थः। यजुष्युरः। (६-१-११७)। उरः शब्द एङन्तोऽति प्रकृत्या यजुषि। उरो अन्तरिक्षम्। यजुषि पादामावादनन्तः पादार्थं वचनम्।

---

**शाङ्करी**- प्रकृत्यान्तः। पादस्य मध्ये इत्यन्तः पादमित्यव्ययीभावः। अन्तरित्यव्ययमधिकरणशक्तिप्रधानं मध्यमाचष्टे। पादश्चेह ऋक्पाद एव गृह्यते न श्लोकस्य। वा छन्दसि इत्यतो मण्डुकप्लुत्या छन्दसीति वर्तते। तेनास्य वैदिकत्वं सम्पद्यते इत्याशयेनाह ऋक्पादमध्यस्थ इति। "एङः पदान्तात्" इति सूत्रादेङ इति पञ्चम्यन्तमनुवृत्तं प्रथमया विपरिणम्यतेऽन्यस्य कार्यिणोऽसंभवादित्यभिप्रेत्याह एङ प्रकृत्येति। सन्धिरूपं विकारं न यातीत्यर्थः। उपप्रयन्तो अध्वरमिति। एङः पदान्तादति" इति प्राप्तम्। अन्तः पादं किमिति। ऋचीत्येव किं नोक्तमित्यर्थः। एतेऽर्चन्तीति। कया मती कुत एतास एतेऽर्चन्ति शुष्णं वृषणो वसूया इति। अत्र एते इति पादस्यान्ते एङस्ति अकश्च परस्य पादस्यादाविति तन्निमित्तिनिमित्तयोः पादमध्यस्थत्वमिति सत्यपि ऋक्त्वे प्रकृतिभावः। अव्यात्। एषामनुकरणत्वात्सुबन्तेन समासः। अवरक्षणे।

---

**विमर्श**- त्वां ज्योतिषि सादयाम्यपां त्वायने सादयाम्यर्णवे त्वा सदने सादयामि समुद्रे त्वा सदने सादयामि सरिरे त्वा सदने सादयाम्यापा त्वा क्षये।

अर्थ – हे अपस्था नामक इष्ट के मैं जल के स्थान में तुम्हें स्थापित करता हूँ, औषधियों के स्थान में स्थापित करता हूँ, अभ्र में स्थापित करता हूँ विद्युत ज्योति में स्थापित करता हूँ, भूमि पर स्थापित करता हूँ प्राण के स्थान में स्थापित करता हूँ। मन के स्थान में स्थापित करता हूँ, वाणी के स्थान में स्थापित करता हूँ। चक्षु के निवास में स्थापित करता हूँ। श्रोत्र में स्थापित करता हूँ, द्युलोक में स्थापित करता हूँ।

आशीलिङ्। अवद्यादितिपञ्चम्येकवचनान्तम्। अवक्रमुरिवेत्यवपूर्वस्य क्रमेर्लिढद्यसि द्विर्वचनप्रकरणे छन्दसि वा वचनम् इति द्विवचनाभावे रूपम्। केचित्तु अवक्रमुरिति सूत्रे कृतं द्विर्वचनं ये पठन्ति तेषामुदाहरणं मृग्यम्। वहवृचास्तावदवक्रमुरित्यधीयते। अव्रतेति। वृङ्वृञो 'मन्त्रे घस्' इति च्लेर्लुक्। आत्मनपदेषु इति झस्यादादेशः। अयमिति इदमः सौ इदोऽय् पुंसि। अवतेर्लोट्। अवन्तु। अवस्यव इति। अवेरसुन् औणादिकः। ततः ल्यच् क्याच्छन्दसि इत्युः। यजुष्युरः। उरो अन्तरिक्षमिति। नन्वत्र प्रकृत्यान्तः पादम् इत्यनेनैव सिद्धे व्यर्थोऽयं योग इत्याशङ्क्याह यजुषिपादाभावादित्यादि।

---

**विमर्श**- उप प्रयन्तो अध्वरम् (शुक्ल यजुर्वेद माध्यन्दिनसंहिता ३-११)

उप प्रयन्तो अध्वरं मन्त्रं वोचे माग्नये। आरे अस्मे च श्रृण्वते। ३-११)

अर्थ - यज्ञ में उपस्थित होने वाले हमलोग दूर से तथा समीप से श्रवण करने वाले अग्नि को उद्देश्य करके मन्त्र कहते हैं। सायंकाल की आहुति का होम करने के पश्चात् इस मन्त्र से लेकर ३७ सैंतीस तक के मन्त्रों से आहवनीय और गार्हपत्य अग्नियों का उपस्थान करना चाहिये।

सुजाते अश्व सूनृते (ऋग्वेद ५-७९-१)

महेनो अद्य बोधयोषो राये दिवित्मती ।

यथा चिन्नो अबोधयः सत्य श्रवसि वाय्ये सुजाते अश्व सूनृते॥

अर्थ - हे दीप्तिमती उषा तुमने हम लोगों को जैसे पहले प्रबोधित किया था उसी प्रकार आज भी प्रचुर धन प्राप्ति के लिए प्रबोधित करो। हे शोभन! प्रादुर्भाव वाली अश्व प्राप्ति के लिये लोग तुम्हारा स्तनवन करते हैं। तुम वय्यपुत्र सत्यश्रवा के प्रति अनुग्रह करो।

कुशिकासो अवस्यवः (ऋग्वेद ३-४२-९)

त्वां सुतस्य पीतये प्रत्नमिन्द्र हवामहे। कुशिकासो अवस्यवः।

अर्थ - हे पुरातन इन्द्र, हम कुशिक वंशोत्पन्न तुम्हारे द्वारा रक्षित होने की इच्छा करते हुए अभिषुत सोमपान के लिए स्तुति वचनों द्वारा तुम्हें बुलाते हैं।

अव्यपरे किम्- तेऽवदन्। ऋग्वेद १०-१०९-१

तेऽवदन्प्रथमाब्रह्म किल्विषे कूपारः सलिलो मालरिश्वा।

वीलू हरास्तप उग्रो मयो भूरावो देवीः प्रथमजाऋते न॥ १०-१०९-१

मन्त्रार्थ - जिस समय बृहस्पति ने अपनी पत्नी जुहू का त्याग कर दिया इस प्रकार ब्रह्म किल्विष प्राप्त किया उस समय सूर्य शीघ्रगामीवायु, प्रज्वलित

अग्नि, सुखकर सोम, जल के अधिष्ठाता देवता वरुण और सत्यस्वरूप प्रजापति की अन्य सन्ततियों ने कहा प्रायश्चित कराया।

**विमर्श-** मित्रमहो अवद्यात् (ऋग्वेद ४-४-१५)

अयाते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय।

दहाशसो रक्षसः पाह्यस्मान्द्रुहो निन्दो मित्र महो अवद्यात्॥ ऋग्वेद ४।४-१५

मन्त्रार्थ – हे अग्नि! इस प्रदीप्त स्तुति द्वारा हम तुम्हारी परिचर्या करे। हमारे इस स्तोत्र को प्रतिगृहीत करो। स्तुति विहीन राक्षसों को भस्मसात् करो। हे मित्रों के पूजनीय अग्नि शत्रु और निन्दकों के परिवाद से हमारी रक्षा करो।

मा शिवासो अवक्रमुः (ऋग्वेद ७-३२-२७)

मानो अज्ञाता वृजना दुराध्यो उ मा शिवासो अवक्रमुः।

त्वया वयं प्रवतः शश्वतीरपो ति शूरतरा मसि॥ ७-३२-२७

हे इन्द्र अज्ञात गति, हिंसक, दुराराध्य और अशुभ शत्रु हमें आक्रमण न करें। शूर हम तुम्हारे निकट नम्र होकर अनेक कार्यों में उत्तीर्ण होंगे।

ते नो अवन्तु (ऋग्वेद १०-१५-१)

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः।

असुय ईय रवृका ऋतज्ञास्तेनो वन्त पितरो हवेषु॥ १॥

मन्त्रार्थ – उत्तम, मध्यम अधम आदि तीन श्रेणियों के पितर लोग हमारे प्रति अनुग्रहयुक्त होकर होमीय द्रव्य को ग्रहण करें। जो पितर अहिंसक होकर और हमारे धर्मानुष्ठान के प्रति दृष्टि रखकर हमारे प्राण की रक्षा करने के लिए आये हैं, वे यज्ञकाल में हमारी रक्षा करें।

कुशिकासो अवस्यवः

त्वां सुतस्य पीतये प्रत्रमिन्द्र हवामहे। कुशिकासो अवस्यवः

उरो अन्तरिक्षम्। यजुर्वेद ४-७

आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहा। आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उरो अन्तरिक्ष। बृहस्पतये हविषा विधेम स्वाहा। ७

मन्त्रार्थ – यज्ञ करने की मन की प्रबल इच्छा को पूरी करने के लिये प्रेरित अग्नि के निमित्त यह आहुति सुसिद्ध हो। व्रत नियम आदि दीक्षा की सिद्धि के लिये तप के प्रवर्तक अग्नि देव के निमित्त यह आहुति सुसिद्ध हो। मन्त्रोच्चारण की

आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे। (६-१-११८)

यजुषि अति प्रकृत्या। आपो अस्मामातरः। जुषाणो अग्नि राज्यस्य। वृष्णो अंशुभ्याम्। वर्षिष्ठे अधि नाके। अम्बे अम्बाले अम्बिके। अस्मादेव वचनात्। अम्बार्थ (२६७) इति ह्रस्वो न।

अङ्ग इत्यादौ च। ६-१-११९) अङ्गशब्दे य एङ् तदादौ च अकारे य एङ् पूर्वः सोऽति प्रकृत्या यजुषि। प्राणो अङ्गे अङ्गे अदीव्यत्।

अनुदात्ते च कुधपरे। (६-१-१२०)। कवर्ग धकारपरे अनुदात्तेऽति परे एङ् प्रकृत्या यजुषि। अयं सो अग्निः। अयं सो अध्वरः। अनुदात्ते किम् – अधोऽग्रेरुद्रे।

अग्रशब्द आद्युदात्तः। कुधपरे किम् – सोऽयमग्निमतः।

अवपथांसि च। (६-१-१२१) अनुदात्ते अकारादौ अवपथाः शब्दे यजुषि एङ् प्रकृत्या। त्रीरुदेभ्यों अवपथाः। वपेस्थासि लङि "लिङ्ङतिङः (सू० ३८३५) इत्यनु दातव्यम्। अनुदात्ते किम् यद्रुद्रेभ्योऽवपथा निपातैर्यद्यदि (३९३७) इति निधातो न।

---

शाङ्करी– आपो इत्यादिनि पृथक्पदान्यनुकरणानि विभक्तिस्तु अनुकार्यानुकरणयो–र्भेदस्याविवक्षितत्वान्न भवति सुपां सुलुक् इति विभक्तेर्लुग्वा। अम्बिके पूर्वे इत्येतदनुकरणमेव। तत्र प्रथमं जसन्तमनुकरणम्। द्वितीयं स्वन्त। तृतीयं शसन्तम्। चतुर्थं ङ्यन्तमितरे संबुध्यन्ते। आपो जुषाणो वृष्णो वर्षिष्टे इत्येते शब्दाः अम्बिके शब्दात् पूर्वो यौ अम्बे अम्बलि शब्दौ तौ च अति परतः प्रकृत्या स्युः। अङ्ग इत्यादौ च। अङ्गि शब्दे य एङिति। प्रकृत्या भवतीति वक्ष्यमाणेन सम्बन्धः। तदादौ अकारे च य एङपूर्व इति। अत्रापि पूर्ववत्सम्बन्धः। अतिक्रान्तपरामर्शिना तच्छब्देन इति शब्दार्थमाचष्टे तस्याङ्गशब्दस्य आदितस्तदादिस्तद्रूपो यः अकारस्तस्मिन् परे पूर्वो य

---

शक्ति के लिये पुष्टि के साधक अग्निदेव के निमित्त यह आहुति सुसिद्ध हो। महान जगत् के सुखदाता हे प्रकाशवान् जलों हे पृथ्वी द्युलोक हे विस्तीर्ण अन्तरिक्ष! तुम्हारे और बृहस्पति के निमित्त दी गई यह हवि सुहुत हो। यजमान यहाँ अन्न ग्रहण करके कार्यारम्भ सूचक आहूतियाँ देता है।

एङ स इत्यर्थः। नन्वत्र चकारः किमर्थ इति चेच्छृणु असति चकारेऽङ्गशब्दस्येङ् तदादावति परतः प्रकृत्या भवतीत्यर्थः स्यात्ततश्चाङ्गे अङ्गे इत्यत्रैव स्यात्। अङ्गे अदीव्यदित्यत्र न स्यात्। सति तु तस्मिन्नङ्गशब्दस्य य एङ् यत्र कुत्रचिदतिप्रकृत्य भवति तदादौ चाति परतो यः कश्चिदेङ् स प्रकृत्या भवति। इत्ययमर्थो भवति। तेन अङ्गे अङ्गे अदीव्यत्। प्राणो अङ्गे इत्युभयत्रापि भवति। अनुदात्ते च कुधपरे। कुधौ परौ यस्मात्सतथोक्तः। कवर्गधकारेति। धकारे अकार उच्चारणार्थः। अग्निशब्दो अङ्गेनिर्मलोपश्च इति निप्रत्ययान्तोऽन्तोदात्तः। अध्वरशब्दः प्रातिपदिकस्वरेणान्तोदान्तः। आद्युदात्र इति। ऋजेन्द्र इत्यादिना सूत्रेण निपातितः। आङो। आङिति ङिद्विशिष्ट आकारो गृह्यते। यः ईषदर्थे क्रियायोगे मर्यादाविभिधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित इत्यनेन लक्षितः। यद्यपि अभ्र आँ अप इत्यत्र आकारो न सप्तम्यर्थद्योतकत्वात्। तथापि वाक्यस्मरणयोरङिदित्यत्रैव तात्पर्यम्। अन्यत्रसर्वत्राङ्ङिद्वेदितव्यः। एवं तावद्भाष्ये स्थितम्।

---

**विमर्श-** अम्बे अम्बाले अम्बिके (यजुर्वेद २३-१८)

प्राणाय स्वाहा अपानाय स्वाहा व्यानाय स्वाहा। अम्बे अम्बिकेऽम्बालिके न मां नयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्।

अर्थ – प्रस्तुत मन्त्र से तीन आहुतियाँ दी जाती हैं। प्राण के निमित्त अपात के निमित्त और व्यान के निमित्त ये श्रेष्ठ आहुतियाँ दी जा रही है। इनसे यज्ञीय पशु में प्राणों का आधान होता है। यह इसलिये किया जाता है कि जीवित पशु ही यज्ञ का साधन बन सकता है। अश्व का संस्कार करते हुए महाविद्या कहती है कि अम्बे अम्बिके अम्बालिके। यह आत्मज्ञान रहित अश्व उस अविद्या का जो कि काम रूपा स्त्री का भ्रममय रूप बनाकर महामाया से आवृत्त संसार में बसती है आश्रय ग्रहण करके शयन करती है। कोई मुझ महाविद्या को उसके पास नही जाने देता।

शुक्लयजुर्वेद वाजसनेय संहिता १२-४७

अयं सो अग्निर्यस्मिन् सोममिन्द्रः सुतं दधे जठरे वावशानः।

सहस्रियं वाजमत्यं न सप्ति ससवान् सन् स्तूयते जातवेदः।

अर्थ – यह वह अग्नि है जिसकी सहायता से अग्निचयन की इच्छा करने वाले इन्द्र ने अभिषव किये सहस्रों के योग्य अन्न के समान भक्षण करने में मद न करने वाले हर्षकारक तृप्तिकारक सोम को उदर में धारण किया। हे अग्निदेव आप भी हवियों का भक्षण करते हुए ऋत्विक और यजमान द्वारा की गई स्तुति को सावधानी से सुनें।

(१) आपों अस्मान्मातरः (शुक्लयजुर्वेद ४-२)

आपों अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु। विश्व हि रिप्रं प्रवहन्ति देवीरुद्विदाभ्यः शुचिरा पूत एंभि। दीक्षातपसोस्तनूरसि तां त्वा शिवा शग्मां परिदधे भद्रं वर्णं पुष्यन्।

**विमर्श**– मन्त्रार्थ – माता के समान पालन करने वाले हे जलदेवता! तुम हमें शुद्ध करो। निश्चय ही दीप्तिमान् निर्मल जल सम्पूर्ण पापों को धो डालते हैं। इस जल में स्नान कर बाहर भीतर से शुद्ध हुआ मैं जल से बाहर आता हूँ। हे क्षौमवस्त्र! तुम दीक्षाभिमानी और तपोभिमानी देवता के शरीर के समान प्रिय हो। तुम को धारण कर मैं कल्याण रूप कान्ति से पुष्ट होता हूँ। इस मन्त्र का उच्चारण करते हुए यजमान तालाब आदि में स्नान करता है, और रेशमी वस्त्र धारण करता है।

(२) जुषाणो असुराज्यस्य – ५-३५ शुक्लयजुर्वेद

ज्योतिरसि विश्वरूपं विश्वेषां देवानां समित्। त्व सोमतनू कृदभ्यो द्वेषोभ्यो न्यकृतेभ्य उरु यन्तासि वरूथ स्वाहा जुषाणो असुराज्यस्यवेतु स्वाहा।

मन्त्रार्थ – हे आज्य! तुम विश्व को रूप देने से विश्व रूप और दीप्ति देने से ज्योतिरूप हो। सब देवताओं के प्रकाशक हो। हे सोम! तुम हमारे विरोधियों द्वारा प्रेरित शत्रुओं और शरीर द्वेदक राक्षसों के लिये दण्डदाता हो, बडे बलवान हो। तुम्हारे लिये मैं यह आहूति देता हूँ। हे प्रसन्न सोम! मेरे दिये हुए घृत का पान करो इस आहुति को सम्यक् रूप से ग्रहण करो। इस मन्त्र से प्रज्वलित समिधा के ऊपर घृत की आहुति दी जाती है, और सोम से प्रार्थना की जाती है।

(३) वृष्णो अंशुभ्याम् शुक्ल यजुर्वेद ७-१

वाचस्पतये पवस्व वृष्णो अशुभ्यां गभस्तिपूतः
देवो देवेभ्यः पावस्त्व येषां भागोऽसि।

मन्त्रार्थ – हे सोम! सम्पूर्ण कामनाओं को पूरा करने वाले तुम हमारे हाथों से पवित्र हुए प्राणों की प्रीति के लिये इस पात्र में बैठो। हे सोम देवता स्वरूप! तुम देवताओं की प्रीति के निमित्त इस पात्र में बैठो और देवताओं के भाग बनो।

(५) ऐन्द्रः प्राणो अङ्गे अङ्गे शुक्लयजुर्वेद ६-२०

ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यदैन्द्र उदानो अङ्गे अङ्गे निधीतः। देव त्वष्टभूरि ते स समेतु सलक्ष्मा यद्विषुरूषं भवति। देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु। २०१

मन्त्रार्थ – भूतात्मा का प्राण ईश्वर के अंग-अंग में स्थित हुआ, भूतात्मा

आङोऽनुनासिकश्छन्दसि। (६-१-१२६)

आङोऽचि परेऽनुनासिकः स्यात् स च प्रकृत्या। अभ्र आँ अपः। गभीर आँ उग्रपुत्रे।

ईषा अक्षादीनां छन्दसि प्रकृतिभावो वक्तव्यः। ईषाअक्षो हिरण्ययः। ज्या इयम्। पूषा अविष्टु।

स्यश्छन्दसि बहुलम्। (६-१-१३१)। स्य इत्यस्य सोर्लोपः स्याद्धलि। एष स्य भानुः। ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे। (६-१-१५१) ह्रस्वात्परस्य चन्द्र शब्दस्योत्तरपदस्य सुडागमः स्यान्मन्त्रे। हरिश्चन्द्रो मरुद्गणः सुश्चन्द्रदस्म।

पितरामातराच छन्दसि। (६-३-३३)। द्वन्द्वे निपातः। आ मां मन्त्रा पितरांमातरांच चाद्विपरीतमपि। न मातरांपितरा नू चिंदिष्टौ। समानस्य छन्दस्य मूर्धप्रभृत्युदकेषु (६-३-८४) समानस्य सः स्यान्मूर्धादिभिन्ने उत्तरपदे। सगर्क्यः। छन्दसि स्त्रियां बहुलम्। (६-३-८४)

विश्वादेवयोरद्र्यादेशः। (६-३-९२)विश्वांची च घृताची च। देवद्रीचीं तयत देवयन्तः। कद्रीचीं।

---

का उदान ईश्वर के अङ्गों में निहित हुआ। हे ज्योतिस्वरूप ईश्वर तुम्हारा विष्णुरूप परिपूर्ण है। हे सर्वव्यापिन् निवृत्त आत्मा बाण रूप होता है, अतः अंगुष्ठ प्रमाण आत्मा विष्णु को प्राप्त हो। हे सायुज्य के अधिकारी आत्मा संसार से त्राण पाने के लिये विष्णु रूप अग्नि में जाने वाले तुम को प्राण आदि अनुमति दे।

(६) अयं सो अग्निः (शुक्लयजुर्वेद १२/४७)

अयं सो अग्निर्यस्मिन् सोममिन्द्रः सुतं दधे जठरे वावशानः।

सहस्रियं वाजमत्यं न सप्तिं ससवान् सन् स्तूयते जातवेदः॥ ४७॥

**विमर्श**- मन्त्रार्थ - यह वह अग्नि है जिसकी सहायता से अग्नि चयन की इच्छा करने वाले इन्द्र अभिषव किये सहस्रों के योग्य अन्न के समान भक्षण करने में मद न करने वाले हर्षकारक, तृप्तिकारक सोम को उदर में धारण किया। हे अग्निदेव! आप भी हवियों का भक्षण करते हुये ऋत्विक् और यजमान् द्वारा की गई स्तुति को सावधानी से सुनें।

**शाङ्करी**- "उपाङ्गोऽनुनासिकश्छन्दसि" इति सूत्रे "प्लुतप्रगृह्या अचि नित्यम्" ६-१-१२५ इति सूत्रादचि इति पदम् "प्रकृत्यान्तः पादमव्यपरे" (६-१-११५) इति सूत्रात् प्रकृत्या इति पदमनुवर्तते। अत आह आङोऽचि परेऽनुनासिकः स्यादिति। अभ्र आँ अप इत्यत्र सवर्णदीर्घस्तु न भवति प्रकृतिभावग्रहणम्। एवमेव 'गभीर आँ उग्रपुत्रे' गुणोऽपि न प्रकृतिभावग्रहणात्। एवमेव ईषा अक्षो हिरण्यय इत्यत्र सवर्णदीर्घः, ज्या इयम् इत्यत्र गुणः, पूषा अविष्टु, इत्यत्र सवर्ण दीर्घो न भवति प्रकृति भावग्रहणात्। स्यः इति त्यदित्येतस्य प्रथमान्तस्यानुकरणम्। सुपां सुलुक् इति लुप्तषष्ठीकम्। एष स्य भानुः एतदस्त्य दश्च त्यदादीनामः इत्यनेनात्वम् तदोः सः सावनन्त्ययोः इति सकारः। एतदस्त्यदश्च परस्य सोः एतत्तदो सुलोपः, स्यश्छन्दसि इति च लोपः। ह्रस्वाचन्द्रोत्तरपदे। उभयनिर्देशे पञ्चमी निर्देशो बलीयात् इति न्यायात्। चन्द्रशब्दे उत्तरपदे ह्रस्वात्परः सुडागमो भवति। सुट् कात्पूर्वः (६-१-१३५) इत्येतः सुडित्यनुवर्तनात्। पितरामातरा च। पितृ सु मातृ सु + अलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन द्वन्द्वसमासः। पूर्वपदस्याराङादेशो निपात्यते। उत्तरपदे तु "सुपां सलुक्" इत्यादिना विभक्तेराकारादेशः। पितरा मातृ इति स्थितौ "ऋतो ङि सर्वनामस्थानयोः" इत्यनेन गुणे पितरा मातर् सु "सुपां सु लुक् पूर्वसवर्णा" इत्यादिना आकारादेशः। समानस्य छन्दसि सस्य स संज्ञायाम्। इत्यतः सः इत्यनुवर्तते। सगर्भ्यः। समानो गर्भोयस्य सगर्भः तत्र भवः सगर्भ्यः सगर्भस यूथसनुताद्यन् इति यत् प्रत्ययः।

---

**विमर्श**- अभ्र आँ अप (ऋग्वेद ५-४८-१)

कदु प्रियाय धाम्ने मनामहे स्वक्षत्राय स्वयशसे महे वयम्।
आमेन्यस्य रजसो यदभ्र आँ अपो वृणाना वितनोति मायिनी॥

मन्त्रार्थ - सब के प्रिय और पूजनीय उस वैद्युत तेज की कब हम पूजा करेंगे। जो स्वाधीनबल है और जिसके सब अन्न अपने हैं। जब आच्छादन कारिणी या सेव्यमाना आग्नेय शक्ति प्रज्ञावती होकर परिमेय अन्तरिक्ष में मेघ के ऊपर वृष्टि जल को विस्तारित करती है।

गभीर आं उग्रपुत्रे (ऋग्वेद ८-३७-११)

पर्षि दीने गभीर आँ उग्रपुत्रे जिघासतः। मामिस्तोकस्य नो रिषत्।

ईषा अक्षो हिरण्ययः (ऋग्वेद ८-५-२९)

हि॒रच्ण्ययीं वाँ॒ रभि रीषा अक्षों हिरण्ययः। उ॒भाच॒क्रा॒ हिं॒र॒ण्यया।

मन्त्रार्थ - अश्विद्वयं तुम्हारे प्रापणीय रथ की ईषा (लाङ्गल-दण्ड) सोने की है, अक्ष (चक्रमण्डल) सोने के हैं, और दोनों चक्र सोने के हैं।

सध्यमादस्थयोश्छन्दसि। (६-३-९६)

सहस्य सधादेशः स्यात्। इन त्वा॒स्मिन्सध॒मादे॑। सोम॑ः स॒धस्थ॑म्।

पथि च छन्दसि। (६-३-१०८)

पथि शब्दे उत्तरपदे कोः कवं कादेशश्च। कवपथः। कापथः। कुपथः।

साढ्यै साढ्वा साढेति निगमे। (६-३-११३)

सहेः क्त्वा प्रत्यये आद्यं द्वयं तृनि तृतीयं निपात्यते। मरुद्भिरुग्रः पृतनासु साल्हा। अचोर्मध्यस्थस्यडस्य लः ल्हश्च प्रतिशाख्ये विहितः। आह हि - द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो लकारः। ल्हकारतामेति स एव चास्य ढकारः सभूष्मणा संप्रयुक्तः।

---

**विमर्श-** ज्या इयम् (ऋग्वेद ६-७५-३)

वक्ष्यन्ती वेदागनीगन्ति कर्णप्रिय सखायं परिषस्वजाना।

योषेवशिङ्क्ते वितताधिधन्वञ्ज्यो इयं समने पारयन्ती॥

मन्त्रार्थ - धनुष की यह ज्या युद्ध वेला में युद्ध से पार ले जाने की इच्छा करने मानो प्रिय वचन बोलेने के लिये ही धनुर्धारी के कान के पास आती है। जैसे स्त्री प्रिय पति का आलिङ्गन करके बात करती है, वैसे हीयह ज्याभी बाण का आलिङ्गन करके ही शब्द करती है।

पूषा अविष्टुः (ऋग्वेद १०-२६-९)

अस्माकमूर्जारथं पूषा आवेष्टु माहिनः।

भुवद्वाजानां वृथइमानः श्रृणवद्धवम्॥

मन्त्रार्थ - वे ही महीयान् पूषादेव अपने बल के द्वारा हमारे रथ की रक्षा करें। वे अन्न की वृद्धि करें। वे हमारे इस निमन्त्रण के प्रति कर्णपात करें।

एष स्य भानुः (ऋग्वेद ४-४५-१)

एष स्यः भानुरुदिं यर्ति युज्यते रथः परिज्मा दिवो अस्य सानविः।

पृक्षासौ अस्मिन्मिथुना अधित्रयो हतिस्तुरीयो मधुनो विरक्षते॥

मन्त्रार्थ - दीप्तिमान् आदित्य उदित होते हैं। हे अश्विद्वय तुम दोनों का रथ चारों तरफ गमन करता है। वह द्युतिमान् आदित्य के साथ समुच्छ्त प्रदेश में मिलित होता है। इस रथ के ऊपरि भाग में मिथुनीभूत त्रिविध (अशन पान खाद) अन्न है, एवम् सोमरसपूर्ण चर्ममय पात्र चतुर्थ रूप में शोभा पाता है।

**शाङ्करी**–"सहस्य सध्रिः" इत्यतः सहस्येति वर्तते। मादस्थ इत्येतयोरुत्तरपदयोः सहस्य सध इत्ययमादेशः स्यात्। सधमादे इति। इन्द्रत्वास्मिन्सधमादे। सह माद्यन्ति देवा अस्मिन् इति सद्यमादो यज्ञः। मदोऽनुपसर्गे इत्यपि प्राप्ते "हलश्च" इति घञ् घकारस्य सूत्र मादेत्यकार उच्चारणार्थेः। तेन मादयतेः। क्किबन्तस्यमादिति यद्रूपं तत्रापि भवति। अर्वागिन्द्रः सधमादो वहन्तु। सहतिष्ठतीति सधस्थः। आतोऽनुपसर्गे कः। पथि च छन्दसि। पथि शब्दे उत्तरपदे करेः कवं कादेशश्च कवपथः। कापथः। कुपथः साढ्यै। एतेत्रयो निपात्यन्ते निगमे। सहेः क्त्वाप्रत्यय पक्षे क्त्वा प्रत्ययस्य ध्यै इत्यादेशो निपात्यते। "होढः" इत्यनेन हकारस्य ढकारः, ष्टुत्वं ढोढे लोपः इति पूर्वढकारस्यलोपः। "ढ्रलोपे पूर्वस्य दीर्घोऽण्" इति दीर्घः। साढ्वा। सहेः क्त्वा प्रत्ययः हकारस्य होढः इत्यनेन ढकारः "झषस्तथो र्धोऽधः" इत्यनेन तकारस्य धकारः "ष्टुना ष्टुः" इत्यनेन ष्टुत्वे सढ ढ्वा "ढोढे लोपः" इत्यनेन पूर्वढकारस्य लोपः "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इत्यनेन सकारसकरस्य दीर्घः साढवा। साढेति। सह धातोस्तृन्प्रत्ययः।

---

**विमर्श**– देवद्राचीं नयत देवयन्तः (ऋग्वेद ३-६-१)

प्रकारवो मनना वच्यमाना देवद्रीची नयत देवयन्तः।
दक्षिणावाङ्वाजिनी प्रच्येति हविर्मरन्त्यग्ने घृताची॥

मन्त्रार्थ – यज्ञकर्ता लोग, तुम सोमाभिलाषी हो। मंत्र द्वारा प्रेरित होकर तुम देवार्चन साधक स्रुक् ले आजो। जिसे आहवनीय अग्नि की दक्षि दिशा में ले जाया जाता है, जिसके अन्न हैं, जिसका अग्रभाग पूर्व दिशा में है और जो अग्नि के लिये अन्न धारण करता है, वही घृतयुक्त स्रुक् जाता है।

कद्रीची (ऋग्वेद १-१६४-१७)

अवः परेण पर एना वरेण पदावत्सं विभ्रती गौरुद स्यात्।
सा कद्रीचीकं स्विदर्धपरागात्क्वस्वित्सूते नहि यूथे अन्तः॥

मन्त्रार्थ – वत्स यजमान या अग्नि का पिछला भाग सामने के पैर से और सम्मुख भाग पीछे के पैर से धारण करते हुए गौ, आदित्य, रश्मि या आहुति ऊपर की ओर जाती है। वह कहाँ जाती है, किसके लिये आधे रास्ते से लौट आये? कहाँ प्रसव करती है। दल के बीच प्रसव नहीं करती।

मरुद्भिरुग्रः पृतनासु साल्हा।

भूरिचक्र मरुतः पित्र्याण्यु क्थानि या वः शस्यन्ते पुराचित्।
मरुद्भिरुग्रः पृतनासु साह्ला मरुद्भिरित्सनिता वाज भवा॥

छन्दसि च। (६-३-१२६)।

अष्टन आत्वं स्यादुत्तरपदे। अष्टापदी।

मन्त्रे सो माश्वेन्द्रियविश्वदेव्यस्य मतौ। (६-३-१३१)

दीर्घस्यान्मन्त्रे। अश्वावतीं सोमावतीम्। इन्द्रियावन्मदिन्तमः। विश्वकर्मणा विश्वदेव्यावता।

ओषधेश्च विभक्तावप्रथमायाम्। (६-३-१३२)

दीर्घः स्यान्मत्रे। यदोषधीम्यः। अदधात्योषधीषु।

---

**शाङ्करी**- होढः इत्यनेन हकारस्य ढकारः "झषस्तथोर्धोऽधः" इत्यनेन तकारस्य धकारः ष्टुना ष्टुः" इत्यनेन धकारस्य ढकारः "ढोढे लोपः" इत्यनेन पूर्व ढकारस्य लोपः ढ्रलोपे पूर्वस्य दीर्घोऽणः इत्यनेन सकाराकारस्य दीर्घः। तृनितृतीयम्। तृचि त्वन्तोदात्तस्यात्तथा भूरि चक्रे इति मन्त्रे साढवेत्याद्युदात्तं पठ्यते तन्न संगच्छेतेति भावः। अष्टापदी। अष्टौ पादाः अस्या इति बहुव्रीहौ "संख्या सुपूर्वस्य" इति सूत्रेण पादशब्द अकारस्य लोपः ततो "पादोऽन्यतरस्याम्" इति ङीप्। मन्त्रे सोमाश्व। सोम, अश्व, इन्द्रिय, विश्व, देव्य, एषां मतुप् प्रत्यय परे दीर्घः स्यान्मन्त्रे। मादुपधायाश्च "अतोर्वोऽयवादिभ्यः" इत्यनेन मतुपो मकारस्य वकारः। ओषधेश्च। न च "कृदिकारादक्तिनः" इत्यनेन ङीषा गतार्थता अन्तोदात्ततापत्तेः। इष्यते तु "लघावन्ते" इति फिट् सूत्रात् आद्युदात्तता।

---

**विमर्श**- मन्त्रार्थ - हे मरुतों, हमारे पूर्वजनों के लिये तुमने अनेक कार्य किये हैं। तुम्हारे पहले के जो सब काम प्रशंसित होते हैं, उन्हें तुमने किया है। युद्ध में तुम्हारी सहायता से ओजस्वी व्यक्ति शत्रुओं को पराजित करता है। तुम्हारी ही सहायता से स्तोता अन्न भोग करता है।

इन्द्र त्वास्मिन्सधमादे (ऋग्वेद ८-२-३)

तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणन्तः। इन्द्रत्वास्मिन्त्सधमादे।

**मन्त्रार्थ** - इन्द्र तुमने जौ की तरह उक्त सोम तुम्हारे लिये और क्षीर आदि में मिलाकर स्वादिष्ट बनाया है। इसलिये हे इन्द्र इस यज्ञ में वैसा सोम पीने के लिये मैं तुम्हें बुलाता हूँ।

अश्वावतीं सोमावतीम्। (ऋग्वेद १०-९७-७)

अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम्।

आवित्सि सर्वा ओषधीरस्मा अरिष्ट तातये॥

ऋचि तु नु धमक्षुतङ्कुत्रोरुष्याणाम्। (६-३-१३३)

दीर्घः स्यात्। आतू नं इन्द्र। नू मर्तः। उत वा धा स्यालात्।

मक्षू गोमन्तमीमहे। भरता। भरता जातवेदसम्। तङिति थादेशस्य ङित्वपक्षे ग्रहणम्। तेनेहन - शृणोत ग्रावाणः। कूमनाः। अत्रा ते भद्रा। यत्रा नश्चक्रा। उरुष्याणः।

---

शाङ्करी- प्रकृतसूत्रे संहितायाम्। (६-३-११४) इति, तथा ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति सूत्रात् दीर्घोऽणः इत्यंशोऽनुवर्तते। एवं सति सूत्रार्थो भवति - ऋग्वेदे संहितायां तु नु घ मक्षु तङ्कुत्र उरुष्य शब्दानां दीर्घो भवति। लोटो लङ्वत् (३-४-८५) इति लङ्वद्भावेन तङिति लोट् लकारस्य मध्यमपुरुषस्य बहुवचने थादेशस्य "तस्थस्थमिपां तान्तन्तामः"३-४-१०१ गृह्यते। यतो सार्वधातुकमपित् (१-२-४) इति सूत्रेण अपि सार्वधुकं ङिद्वदतिदिश्यते। तेन तप्तनप्तनथनाश्च। (७-१-४५) इति तबादेशो न गृह्यते। अत्र पित्वान्ङित्वं नास्ति। अतः "श्रृणोत ग्रावाणः" इत्यत्र तकाराकारस्य दीर्घो न। कु कूमनाः। उरुष्याणः। कण्वादियगन्तो रक्षणार्थो धातुः। लोट् लकारः। लोटः "सेर्ह्यपिच्च" सेर्हिः। अतोहेः इत्यनेन हेर्लुक्। न इत्यस्य 'नश्चधातुस्थोरुषुभ्यः' इत्यनेन नस्य णत्वम् प्रकृतसूत्रेण दीर्घः।

---

विमर्श- मन्त्रार्थ - इसे निरोग करने के लिये मैं अश्ववती सोमवती ऊर्जयन्ती उदोजस आदि ओषधियों को जानता हूँ।

विश्वदेव्यावता (ऋग्वेद १०-१७०-४)

विभ्राजं ज्योतिषास्व१२ गच्छो रोचनं दिवः।

येनेमा विश्वा भुवनान्यामृता विश्वकर्मणा विश्वदेव्यावता॥ १४॥

सूर्य, तुम ज्योति से प्रकाशमय होकर आकाश के उज्ज्वल स्थान स्थान में गये हो तुम्हारा प्रताप सारे कर्मो का सहायक है, सारे यज्ञों के अनुकूल और सारे भुवनों को पुष्टि देने वाला है।

आ तू न इन्द्र (ऋग्वेद ३-४१-१)

आ तू न इन्द्र मद्र्यग्धुवानः सोमपीतये। हरिभ्यां याह्यद्रिवः॥

मन्त्रार्थ - हे वज्रधर इन्द्र होताओं के द्वारा आहूत होने पर हमारे पास हमारे यज्ञ में तुम सोम पान के लिये हरि नामक घोड़ों के साथ शीघ्र आओ।

आ तू नं इन्द्र वृत्रहन्नस्माकमर्धमाग हि। महान्महीभिरूतिभिः॥ (ऋग्वेद ४-३२-१)

इकः सुञि। (६-३-१३४)

ऋचि दीर्घ इत्येव। अमी षु णः सखीनाम्। (ऋग्वेद ४-३१-३)। सुञः (८-३-१०७) इति षः। नश्च धातुस्थोरुषुभ्यः (८-४-२७) इतिणः।

द्व्यचोऽतस्तिङः। (६-३-१३५)। मन्त्रे दीर्घः। विद्मा हि। चक्रा जरसम्।

---

**विमर्श-** मन्त्रार्थ - हे शत्रुहिंसक इन्द्र, तुम शीघ्र ही हम लोगों के निकट आगमन करो तुम महान् हो। महान् रक्षा के साथ तुम हमारे निकट आगम करो।

उत वा घा स्यालात्। (ऋग्वेद १-१०९-२)

अश्रवं हि भूरि दावत्तरा वां विजामातुरुत वा घास्यालात्।

अथा सोमस्य प्रयती युवम्यामिन्द्राग्नी स्तोमं जनयामि नव्यम्॥

मन्त्रार्थ- इन्द्र और अग्नि, तुम लोग अयोग्य जामाता अथवा श्यालक की अपेक्षा भी अधिक, बहुविध धन दान करते हो ऐसा सुना है। इसलिये हे इन्द्र और अग्नि तुम्हारेसोम प्रदान काल में पठनीय एक नया स्तोत्र निष्पादन करता हूँ।

भरता जातवेदसम् (१०-१७६-२)

प्रदेवं देव्याधिया भरता जातवेदसम्। हव्यानो वक्ष दानुषक्।

मन्त्रार्थ - ज्ञानी अग्निदेव को देव योग्य स्तोत्र के द्वारा प्रसन्न करो। वह यथा नियम हमारे हव्य का वहन करें।

यत्रा नश्चक्रा (ऋग्वेद १-१८९-९)

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्।

पुत्रासो यत्र पितरो भवन्ति मानो मध्यारीरिषतायुर्गन्तोः॥

देव गण मनुष्यों के लिये (आप लोगों द्वारा) १०० वर्ष की आयु ही कल्पित है। इसी बीच तुम लोग शरीर में बुढ़ापा उत्पन्न करते हो और इसी बीच में पुत्र लोग पिता हो जाते हैं। उस निर्दिष्ट आयु के बीच हमें विनष्ट नहीं करना।

उरुष्या णः (ऋग्वेद १-९१-१५)

उरुष्या णो अभिशस्तेः सोम निपाह्यं हसः। सखा सुशेव एधिनः॥

मन्त्रार्थ - सोम, हमें अभिशाप या निन्दन से बचाओ। पाप से बचाओ हमें सुख देकर हमारे हितैषी बनो।

निपातस्य च। (६-३-१३६) एवाहि ते।

अन्येषामपि दृश्यते। (६-३-१३७)। अन्येषामपि पूर्वपदस्थानां दीर्घः स्यात्। पूरुषः। दण्डादण्डि।

---

**शाङ्करी**- इकसुञि। प्रस्तुत सूत्रे "ऋचितुनु घ" ६-३-१३३ इत्यादि सूत्रात् ऋचि इति, संहितायाम् ६-३-११४ इति सूत्रात् संहितायाम्, इति "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ६-३-१११) इति सूत्रात् दीर्घ इति, अलुगुत्तरपदे (६-३-१) इति सूत्रादुत्तरपदे इत्यस्यानुवृत्तिर्भवति। अतः सूत्रार्थो भवति। इगन्तस्य सुञि परतो ऋचि विषये दीर्घो भवति संहितायाम्। एवं हि अभि सुनः इति दशायां अभि इत्यस्य दीर्घे सुञ् (८-३-१०७) इति सूत्रात् षत्वे "नश्च धातुस्थोरुषुभ्य (८-४-२७) णत्वे अभी षुणः। इति भवति। द्व्यचौ। द्वौ अचौ यस्मिन् सद्वयचः तस्य द्वयचः। ऋग्वेदविषये द्व्यचस्तिङतस्यातो दीर्घो भवति संहितायाम्। विद् मस् इति दशायाम् "विदो लटो वा" (६-४-८३) इति सूत्रेण मसो मादेशः। द्व्यचोऽतस्तिङः" (६-३-१३५) इति दीर्घः विद्मा इति साधुः। चक्रा जरसम्। कृ धातोः मध्यमपुरुष बहुवचने थ इत्यस्य स्थाने "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन अ आदेशे कृ धातोः "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे अभ्याससंज्ञायाम् "उरत्" इति सूत्रेण ऋकारस्य अत् रपरादेशे कर् कृ अ इति दशायां "हलादि शेषः" अभ्यासस्यादिहलशेषे "कुहोश्चु" इत्यनेन चवर्गादेशे चकृअ इति स्थितौ च कृ अ इति दशायाम् "इको यणचि" इति यणि प्रकृत सूत्रेण दीर्घे चक्रा इति।

तस्य च जिपा "ऋचि तु नु" (६-३-१३३) इति सूत्रात्तृचि इति,

---

**विमर्श**- अभीषुणः सखीनाम् (ऋग्वेद ४-३१-३)

अभीषुणः सखीनामविता जरितॄणाम्। शतं भवास्यूतिभिः॥

मन्त्रार्थ - हे इन्द्र! तुम सखास्वरूप स्तोताओं के रक्षक हो। तुम बहुत प्रकार की रक्षा के साथ हमारे अभिमुख आगमन करो।

विद्मा हित्वा (ऋग्वेद १-१०-१०)

विद्मा हित्वा वृषन्तमं वाजेषु हवन श्रुतम्।

वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम्॥ १-१०-१०

मन्त्रार्थ- इन्द्र! हम तुम्हें जानते हैं। तुम यथेप्सित वर्षा करते हो। लडाई के मैदान में तुम हमारी पुकार सुनते हो। इष्ट साधक तुमको अशेष सुख साधक रक्षण के लिये हम बुलाते हैं।

छन्दस्युभयथा। (६-४-५)। नामि दीर्घो वा। घ्राता घ्रातॄणाम्। इति बह्वृचाः। तैत्तियास्तु ह्रस्वमेव पठन्ति।

वाषपूर्वस्य निगमे। (६-४-९)

ष्पूर्वस्याच उपधाया वा दीर्घोऽसम्बुद्धौ सर्वनामस्थाने परे। ऋमुक्षाणम। द्यभुक्षणम्। निगमे किम् - तक्षा। तक्षाणौ।

जनिता मन्त्रे। (६-४-५३)

इडादौ तृचि णिलोपो निपात्यते। यो नः पिता जनिता। (ऋग्वेद १०-८२-३)

---

"अलुगुत्तरपदे" इति सूत्रादुत्तरपदे इति "संहितायाम्" (६-३-११४) ढ्रलोपे पूर्वस्य दीर्घोऽणः (६-३-१११) इति सूत्राद् दीर्घोऽणः इत्यनुवर्तते। अत ऋग्वेदे संहितायाम् विषये उत्तरपदे निपातस्यान्तिमवर्णस्य दीर्घो भवति। एवा हि ते। एव शब्दस्य चादिषुपाठान्निपातः। छन्दस्यु। नामीति वर्तते। "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इत्यतो दीर्घ इति च। तदाह नामीति। धातृणाम् वा षपूर्वस्य। ऋभुक्षिन् शब्दस्य "इतोऽत्सर्वनामस्थाने" इतीकारस्याकारादेशः। प्रातिपदिकान्त नुम्विभक्तिषु च। इत्यनेन नकारस्य णत्वं भवति। वा षपूर्वयाच उपधाया दीर्घो भवति सम्बुद्धिरहिते सर्वनामस्थाने परे।

---

विमर्श- चक्रा जरसम् (ऋग्वेद १-८९-९)

शत मिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्।
पुत्रा सो यत्र पितरो भवन्ति मानो मध्यादीरिष तायुर्गन्तोः॥

मन्त्रार्थ - देवगण मनुष्यों के लिये (आप लोगों के द्वारा) १०० वर्ष की आयु कल्पित है। इसी बीच तुम लोग शरीर में बुढ़ापा उत्पन्न करते हो और इसी बीच पुत्र लोग पिता हो जाते हैं। उस निर्दिष्ट आयु के बीच हमें विनष्ट नहीं करना।

ऋमुक्षुणम् (ऋग्वेद १-१११-४)

ऋभुक्षुणमिन्द्र माहुव ऊतय ऋमून्वाजान्मरुत सोम पीतये।
उभामित्रावरुणा नूनमश्विना ते नो हिन्वन्तु सातये धिये जिषे॥

मन्त्रार्थ - अपनी रक्षा के लिए महान् इन्द्र को तथा ऋभु, विभु वाज और मरुतों को सोम पानार्थ हम बुलाते हैं। मित्र वरुण और अश्विनीकुमारों को भी बुलाते हैं। वे हमारे धन, यज्ञ, कर्म और विजय को सिद्ध कर दें।

शमिता यज्ञे। (६-४-५४)। शमयित्येत्यर्थः।

युप्लुवो दीर्घश्छन्दसि। (६-४-५८)

ल्यपीत्यनुवर्तते। वियूय। विप्लूय।

आडजादीनाम्। (६-४-७२)

छन्दस्यापि दृश्यते। (६-४-७३)। अनजादीनामित्यर्थः। आनट्। आवः। न माङ्योगे। (६-४-७३)। बहुलं छन्दस्यमाङ्योगेऽपि। (६-

---

**शाङ्करी**- जनिता - जनी प्रादुर्भावे धातोः "ण्वल्तृचौ" इति तृच् प्रत्ययः "हेतुमति च" इत्यनेन णिच् प्रत्ययः जन इ तृ इति स्थितौ "आर्धधातुकस्येड्वलादेः" इत्यनेनेडागमे जन णिच् इट् तृ इति दशायां जनिता मन्त्रे" इति सूत्रेण णिचो लोपे जन इ तृ "प्रत्ययलोपेप्रत्ययलक्षणम्" इत्यनेन प्रत्ययबुद्ध्या "अत उपधाया" इत्यनेनोपधाऽकारस्य वृद्धिः प्राप्ता जनिवध्योश्च इत्यनेन निषेधे जनितृ "ऋदुशनस्पुरुदंसोऽनेहसां च"७-१-९४ इत्यनेनानङादेशे जनितनङ् इति स्थितौ अङ् इत्संज्ञायाम् "असृन्तृच्स्वसृ" इत्यादिनोपधादीर्घे जनितान् सु उकारसकारयोरित्संज्ञा लोपाभ्यामपहारे नकारस्य न लोपः प्रातिपदिकान्तस्य इत्यनेन लोपे जनिता इति। एवमेव शमिता यज्ञे।

---

**विमर्श**- यो नः पिता जनिता (ऋग्वेद १०-८२-३)

यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा।
यो देवानां नामधा एक एव तं सप्रश्नं भुवनान्त्यन्या॥

मन्त्रार्थ - जो विश्वकर्मा हमारे पालक उत्पादक संसार के उत्पादक, जो विश्व के सारे धामों को जानते हैं वो देवों के तेजः स्थानों को जानते हैं, जो देवों के नाम रखने वाले और जो एक हैं सारे प्राणी उन्हीं देव को प्राप्त करते हैं। या उनके विषय के जिज्ञासु होते हैं।

जनिष्ठा उग्रः सहसेतुराय (ऋग्वेद १०-७३-१)

जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः।
अवर्धन्निन्द्रं मरुतश्चि दत्र माता यद्वीरं दधनद्ध निष्ठा॥

मन्त्रार्थ - हे इन्द्र! जिस समय गर्भ-वारयित्री इन्द्र माता ने इन्द्र को जन्म दिया, उस समय मरुतों ने महानुभाव इन्द्र को यह कहकर प्रशंसित किया कि तुम बल ओर शत्रु विनाश के लिए जन्मे हो, तुम वीर, स्तुत्य, ओजस्वी और अतीव अभिमानी हो।

४-७५)। अडादौ न स्तः माङ् योगेऽपि स्तः। जनिष्ठा उग्रः सहसे तुराय। मा बः क्षेत्रे पर वीजान्यवाप्सुः। इरयो रे।। (६-४-७६)। प्रथमं गर्भं दध्र आपः। रे भावस्याभीयत्वे नासिद्धत्वादालोपः। अत्र रेशब्दस्येहि कृते पुनरपि रेभावस्तदर्थं च सूत्रे द्विवचनान्तं निर्दिष्टमितयोरिति।

---

**शाङ्करी**- छन्दस्यपि दृश्यते। अपि शब्दादनजादावपि आडागमः। आनट्। दिवादिगणीय णश अदर्शने धातोर्लुङ् लकारे ''छन्दस्यपि दृश्यते'' इत्यनेनाडागमे ''च्लि लुङि'' इत्यनेन च्लि प्रत्यये ''मन्त्रे घसह्वरणश'' इत्यादिना च्लेलुकि ''नशेर्वा'' इत्यस्याभावे ''व्रश्चभ्रस्जसृजमृज'' इत्यादिना शकारस्य षकारादेशः जश्त्वेन उकारादेशः चर्त्वेन टकारः। आवः। स्वादिगणीय वृञ् वरणे धातोर्लुङ् लकारे तिबादेशे ''इतश्च'' इत्यनेन इकारलोपे ''छन्दस्यपि दृश्यते'' इत्यनेनाडागमे ''च्लि लुङि'' इत्यनेन च्लि आदेशे ''मन्त्रेघसह्वरणश'' इत्यादिना च्लेर्लुकि ''सार्वधातुकार्धधातुकयोः'' इत्यनेन गुणे रपरे। बहुलं छन्दसि। अमाङ्योगेऽपि नस्तः। जनिष्ठा उग्रः। जनेर्लुङि थास् अडागमाभावः। माङ्योगेप्यडागममुदाहरति। मा वः क्षेत्रे परबीजान्यवाप्सुः। वपेः कर्मणि लुङ्। व्यत्ययेन परस्मैपदम्। च्लेः सिच् वदव्रजहलन्तस्या चः इति वृद्धि। इरयो। इर इत्येस्य रे आदेशः स्याच्छन्दसि। दध्रे इति। धाञो लिटि झस्य ''लिटस्तझयोः'' इतीरेचि कृते रेभावः। ननु चात्र परत्वाद्रेभावे कृतेऽनजादित्वादालोपो न प्राप्तः इत्यत आहु रेभावस्येति।

---

**विमर्श**- प्रथमं दध्र आपः (ऋग्वेद १०-८२-५)

परोदिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति।
कंस्विद्गर्भप्रथमं दध्र आपो यन्त्र देवाः समपश्यन्त विश्वे॥

मन्त्रार्थ - यदि ईश्वर तत्व द्युलोक, पृथिवी असुरों और देवों को अतिक्रम करके अवस्थित है। जल ने ऐसा कौनसा गर्भ धारण किया है जिसमें सभी इन्द्रादि देवता रहकर परस्पर मिलित देखते हैं।

सुध्यो नव्यमग्ने (ऋग्वेद ६-१-७)

तं त्वावयं सुध्यो३ नव्यमग्ने सुम्ना यव ईमहे देवयन्तः।
त्वं विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेन॥

हे अग्नि तुम स्तुति योग्य हो। हम शोभन बुद्धि वाले, सुखाभिलाषी और तुम्हारी कामना करने वाले हैं। हम तुम्हारा स्तवन करते हैं। हे अग्नि तुम दीप्यमान हो। महान् रोचमान मार्ग से अर्थात् आदित्य मार्ग से तुम हम स्तोताओं को स्वर्ग पहुँचाओ।

छन्दस्युभयथा। (६-४-८६)

भूसुधियोर्यण् स्यादियङुवङौ च। वनेषु चित्रं विम्वम्, विभुवं वा। सुध्यों उं न व्यमग्रे। सुधियो वा।

तन्वादीनां छन्दसि बहुलम्। तन्वं पुषेम, तनुवं वा। त्र्यम्बकम्, त्रियम्बकम्। तनिपत्योश्छन्दसि। (६-४-९९)। एतयोरुपधालोपः क्ङिति प्रत्यये। वितत्निरे कवयः। शकुना इव पप्तिम। भावायां वितेनिरे पेतिम।

---

शाङ्करी- छन्दस्युर्भयथा। प्रकृतसूत्रे "न भूसुधियो" (४-६-८५) इति सूत्राद् भूसुधियो इति अङ्गस्य (६-४-१) इति चानुवर्तते। अत आह वृत्तौ भू सुधियो यण् इति। भूसुधियोरजादौ सुपि यणादेशोऽपि भवति इयुङवङौ च। वनेषु चित्रं विम्वं विभुवम्। एवमेव तन्वादीनामपि अजादिविभक्तौ परे बहुलं यणादेशोऽपि भवति इयङुवङौ च। तन्वं तनुवं वा तनिपत्योरछन्दसि। प्रकृत सूत्रे "गमहनजनखनघसां लोपः क्ङित्यनङि" ६-५-९८ इति सूत्रात् लोपः क्ङिति इति, ऊदुपधाया गोहः ६-४-८९ इति सूत्रादुपधाया इति, "अचिश्नुधातुभ्रुवां य्वोरियङुवङौ" ६-४-७७ इति सूत्रादचि इति चानुवर्तते। इत्थं सूत्रार्थो भवति तनिपत्योरुपधा लोपः स्यादजादौ कित् ङित्। वितत्निरे। विपूर्वकात्तनुविस्तारे धातोर्लिट्लकारे प्रथमपुरुषबहुवचने झप्रत्यये "लिट्स्तझयोरेशिरेच" इत्यनेन इरेच् आदेशः "लिटिधातोरनभ्यासस्य" इति सूत्रेण धातोर्द्वित्वे हलादि शेषः इत्यनेनादिहलशेषे प्रस्तुत सूत्रेणोपधालोपे वितत्निरे इति।

---

विमर्श- वनेषु चित्रं बिम्बम् (ऋग्वेद ४-७-१)

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः।
यमप्रवानो मृगवो विरुरुचुर्वनेषु चित्रं विम्बं विशे विशे॥

शकुना इव पप्तिम (ऋग्वेद ९-१०७-२०)

उताहं नक्तं मुत सोम ते दिवा सख्याय वभ्र ऊधनि।
घृणा तपन्तमति सूर्य परः शकुना इव पप्तिम॥

मन्त्रार्थ - हे पिङ्गलवर्ण सोम! तुम्हारी मैत्री के लिए मैं दिन रात स्मरण करता हूँ। प्रदीप्त हम उज्ज्वल और परम स्थान में स्थित सूर्यरूप तुम्हें प्राप्त करने की चेष्टा करते हैं। जैसे चिडियां सूर्य का अतिक्रम करती हैं वैसे ही हम तुम्हारे निकट अपने में व्यस्त हैं।

सग्धिश्च मे (शुक्ल यजुर्वेद १८-९)

उर्क् च मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे

घसिभसोर्हलि च। (६-४-१००)

सग्धिश्चमे। बब्धां ते हरीधानाः।

हुझल्भ्यो हेर्धिः। (६-४-१०१)

श्रुशृणुपृकृवृभ्यश्छन्दसि। (६-४-१०२)

श्रुधी हवम्। शृणुधी गिरः। रायस्पूर्धि। उरुणं स्कृधि। अपावृधि।

वा छन्दसि। (३-४-८८)

हिरपिद वा।

अङ्कितश्च। (६-४-१०३) हेर्धिः स्यात्। शरन्धि। रमेर्व्यत्ययेन परस्मैपदम्। शपः श्लुरभ्यासदीर्घश्च। अस्मे प्रयन्धि। युयोधि जातवेदः। यमेः शपो लुक्। यौतेः शपः श्लुः।

---

शाङ्करी- घसिभसोर्हलि च। प्रकृतसूत्रे तनि पत्यो छन्दसि इति सूत्रात् छन्दसि इति पदं "गमहनजनखनघसां लोपः क्ङित्यनङि" ६-४-९८ इति सूत्रात् इति "ऊदुपधाया गोहः" इति सूत्रादुपधा इति पदम् "अचिश्नुधातुभ्रुवां य्वोरियङुवङौ" इति सूत्राद् अचि इत्यनुवर्तते। अतः सूत्रार्थो भवति वेदे घसि भसिधात्वोरुपधाया लोपो भवति हलादि तथा अजादि कित् ङित् प्रत्ययपरे। सग्धिः। अद्धातो इति क्तिन् प्रत्ययः "बहुलं छन्दसि" २-४-३९ इति सूत्रेणादोघसादेशः घस् ति घसिभसोर्हलि च इत्यनेनोपधा लोपः झलो झलि, इत्यनेन सलोपः "झषस्तथोर्धोऽध" इत्यनेन तकारस्य धकारः "झलां जश् झसि" इत्यनेन घकारस्य जश्त्वेन गकारः समानाग्धिः, समानस्य छन्दस्यमूर्धप्रभृत्युदकेषु इति सूत्रेण समानस्य सभावः समानाग्धिः सग्धिः रूपं सम्पद्यते। बब्धाम्। जुहोत्यादि गणीय भस्धातो। लोट् लकारः तस्य स्थाने प्रथमपुरुषस्य द्विर्वचन तस् प्रत्यये तसः स्थाने "तस्थस्मिपां तान्तन्तामः" इति सूत्रेण ताम् आदेशः भस् ताभ् "जुहोत्यादिभ्यः श्लुः" श्लौ इत्यनेन धातोर्द्वित्वे भस्भस्ताम् इति स्थिते "पूर्वोऽभ्यासः" इत्यनेनाभ्यास संज्ञायाम् "हलादिशेषः" इत्यनेनादि हल शेषे

---

सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्य च मे यज्ञेनं कल्पन्ताम्।

**विमर्श-** मन्त्रार्थ - अन्न और सच्ची प्रिय वाणी, दुध तथा दूध का सार घी और शहद, वान्धवों के साथ खान-पान धान्य की सिद्धि एवं अन्न उत्पन्न होने अनुकूल वर्षा, जय की शक्ति तथा आम आदि वृक्षों की उत्पत्ति यह सब यज्ञ के फल के रूप में मुझे प्राप्त हो।

"अभ्यासे चर्च" इत्यनेनाभ्यासस्य जश्त्वे बभस् ताम् इति स्थितौ "घसिभसोर्हलि च" इति सूत्रेण भसोरुपधालोपे बभ्स् ताम् इति स्थितौ "झलो झलि" (८-२-२६) इति सूत्रेण सकारस्य लोपः "झषस्तथोर्धोऽधः" इति सूत्रेण धकारः "झलां जश् झशि" इत्यनेन जश्त्वेन भकारस्य बकारे बब्धाम् इति।
शाङ्करी-"श्रुशृणुपृकृवृभ्यश्छन्दसि" (६-४-१०२) प्रकृत सूत्रे "हुझल्भ्यो हेर्धिः" इति सूत्रात् हेर्धिः इत्यनुवर्तते। अतः सूत्रार्थो भवति श्रुशृणुपृकृवृभ्यः धातुभ्यः परे लोट् लकारे हि इत्यस्य स्थाने धिर्भवति। श्रुधी हवम्। श्रुधातोः लोट् लकारे मध्यमपुरुषस्य एकवचने सिप् प्रत्यये "सेर्ह्यपिच्च" इत्यनेन सेर्हि आदेशे "श्रुशृणुपृकृवृभ्यश्छन्दसि" इति सूत्रेण हेर्धि आदेश श्रुधि हवम् इति स्थितौ "अन्येषामपि दृश्यते" ६-३-१३५ इति सूत्रेण दीर्घे श्रुधीहवम् इति।

एवमेव शृणुधी गिरः। श्रुधातोर्लोट् लकारे मध्यमपुरुषस्यैकवचने सिप् प्रत्यये "कर्तरि शप्" इत्यनेन शप् प्रत्ययस्य स्थाने श्रुव शृच इत्यनेन श्रुव शृ आदेशः श्नु प्रत्ययश्च "लशक्वतद्धिते" इत्यनेन श्नु प्रत्ययशकारस्येत्संज्ञायाम् श्रृनु हि स्थितौ प्रकृतसूत्रेण हेर्धिः। "उतश्च प्रत्ययादसंयोगोपधात्" इत्यनेन हेर्लुक् न भवति हेर्धि विधानसामर्थ्यात् "रषाभ्यां नो णः समानपदे" इत्यनेन णत्वे "अन्येषामपि दृश्यते" इत्यनेन दीर्घे शृणुधी गिरः इति साधु।

रायस्पूर्धि। जुहोत्यादिगणीय पृपालनपूरणयोः धातो र्लोटि लकारस्य मध्यमपुरुषस्यैकवचने सिप् प्रत्यये सेर्ह्यपिच्च हि आदेशे उदोष्ठ्यपूर्वस्य इत्यनेन ऋकारस्य उकारादेशः रपरे "हलि च" इत्यनेन दीर्घे "श्रुशृणुपृकृवृभ्यश्छन्दसि" इति सूत्रेण हेर्धि आदेश रायस्पूर्धि।

उरुणस्कृधि- कृधातोर्लोटि मध्यमपुरुषस्यैकवचने सिप् प्रत्यये "सेर्ह्यपिच्च" इत्यनेन सेर्हि आदेशः (उरु अस्माकं कृधि) बहुवचनस्य वस्नसौ इति सूत्रेण अस्माकम् इत्यस्य नस् आदेशे कः करत्करतिकृधिकृतेष्वनदिते इत्यनेन विसर्गस्य सत्वे उरुणस्कृधि।

अपावृद्धि - अप पूर्वकात् वृञ् धातोर्लोट् लकारः लोटः स्थाने मध्यमपुरुषस्यैकवचने सिप् प्रत्यये "सेर्ह्यपिच्च" इत्यनेन सेर्हि आदेशः अप वृ हि इति स्थिते "श्रुशृणुपृकृवृभ्यश्छन्दसि" इति सूत्रेण हेर्धि आदेशः "अन्येषामपि दृश्यते" इत्यनेन दीर्घे अपावृधि। वा छन्दसि (३-४-८८) लोके "सेर्ह्यपिच्च" ३-४-८७ इत्यनेन सेर्हि भवति स नित्यमपिद्भवति वेदे विकल्पेन भवति। रारन्धि। रमु क्रीडायां धातोरुकारस्यानुदात्तत्वात् अनुदात्त ङिस आत्मनेपदम् इत्यनेनात्मने

मन्त्रेष्वाङ्यादेरात्मनः। (६-४-१४१)

आत्मन् शब्दस्यऽऽदेर्लोपः स्यादाङि। त्मना देवेषु।

---

पदी धातुः। अतः मूले लिखितं रमेर्व्यत्ययेन परस्मैपदम् इति। रमेः शपः श्लुः "श्लौ" इत्यनेन द्वित्वे अभ्याससंज्ञायां "हलादिः शेषः" इत्यनेन आदि हल शेषे तुजादीनां दीर्घोऽभ्यासस्य इत्यनेनाभ्यासस्य दीर्घे "वा छन्दसि" इत्यनेनापिद्भाव पक्षे ङिद्वद्भावे "अङितश्च" इत्यनेन हेर्धिः "वा छन्दसि" इत्यनेन हिरपिद् भावे ङिद्भावे रारम्धि इति स्थितौ "मोऽनुस्वारः" इत्यनेन मकारस्य अनुस्वारः "अनुस्वारस्य ययि परसवर्णः" इत्यनेन धकारस्य सवर्णे नकार रारन्धि इति।

**शाङ्करी**-एवमेव प्रयन्धि। प्रयम् हि इति स्थितौ अङितश्च इत्यनेन हेर्धि "मोऽनुस्वारः" इत्यनेनानुस्वारे परसवर्णे। युयोधि। यु मिश्रणे अदादिधातोः "व्यत्ययो बहुलम्" इत्यनेन शपः श्लुः "श्लौ" इत्यनेन द्वित्वे युयु हि अङितश्च इत्यनेन हेर्धि युयुधि "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे युयोधि इति। मन्त्रेष्वाङ्यादेरात्मनः। आत्मन् शब्दस्य प्रथमवर्णस्य लोपो भवति परे यदि आङ् इति स्यात्।

---

**विमर्श**- रायस्पूर्धि (ऋग्वेद १-३६-१२)

रायस्पूर्धि स्वधावोऽस्ति हितेऽग्ने देवेष्वाप्यम्।
त्वं वाजस्य श्रुत्यस्य राजसि स नो मृल महा असि॥

हे अन्नयुक्त अग्नि! हमारे धन की पूर्ति करो। तुम्हारे द्वारा देवों की मित्रता मिलती है। तुम प्रसिद्ध अन्न के स्वामी हो। तुम महान् हो हमें सुखी करो।

उरुणस्कृधि (ऋग्वेद ८-७५-११)

कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिं। उरुकृदुरुणस्कृधि॥

मन्त्रार्थ - हे अग्नि तुम हमलोगों की गायों को खोजने के लिये धन दो।

रारन्धि (ऋग्वेद १-९१-१३)

सोम रारन्धि नो हृदि गावो नयवसेष्वा। मर्य इव स्व ओतये।

मन्त्रार्थ - हे सोम जैसे गाय सुन्दर तृण से तृप्त होती हैं जैसे मनुष्य अपने घर में तृप्त होता है उसी प्रकार तुम भी हमारे हृदय में तृप्त होकर अवस्थान करो।

अस्मे प्रयन्धि (ऋग्वेद ३-३६-१०)

अस्मे प्रयन्धि मघवन्नृजीषिन्निन्द्ररायो विश्ववारस्य भूरेः।
अस्मे शतं शरदो जीवसेधा अस्मे वीराञ्छश्वत इन्द्र शिप्रिन्॥

हे ऋजीषी (उच्छिष्ट) सोमवाले इन्द्र, तुम सब के वरणीय हो हमें प्रभूत धन

विभाषर्जोश्छन्दसि। (६-४-१६२)

ऋजुशब्दस्य ऋतः स्थाने रः स्याद्वा इष्ठे मेयस्सु। त्वं रजिष्ठ मनुनेषि ऋजिष्ठं वा।

ऋत्व्य वास्त्व्य वास्त्वमाध्वीहिरण्यानि छन्दसि। (६-४-१७५)

ऋतौ भवमृत्व्यम्। वास्तुनि भवं वास्त्व्यम्। वास्त्वं च। मधुशब्दस्यापि स्त्रियां यणादेशो निपात्यते। माध्वीर्नः सन्त्वोषधीः। (१-९०-६) हिरण्यशब्दाद् विहितस्य मयटो मशब्दस्य लोपो निपात्यते। हिरण्ययेन सविता रथेन।

---

**शाङ्करी**- विभाषर्जो। "रऋतो हलादेर्लघो" (६-४-१६१) इत्यतो र ऋतः इति "तुरिष्ठेमेयस्सु" (६-४-१५४) इत्यत इष्ठे मेयस्सु इति। तदाह ऋतः स्थाने रः स्यादिति विकल्पेन इष्ठे मेयस्सुः। ऋतौ भवं ऋतुशब्दाद्भवार्थे यति, वास्तु शब्बादणि यति च कृते यणादेशो निपात्यते। मशब्दस्येति। हिरण्यशब्दाद्मयट् मयटो मशब्दस्य लोपे हिरण्ययेन सविता रथेन। तस्यासिद्धत्वाद् "यस्येति च" इति लोपो न।

---

दो जीने के लिए हमें सौ वर्ष दो। सुन्दर जबड़ों वाले इन्द्र हमें बहुत वीर पुत्र दो।

**विमर्श**- युयोधि जातवेदः। (ऋग्वेद ८-११-३)

सत्वमस्मदपद्विषो युयोधि जातवेदः। अदेवीरग्ने अरातीः॥

हे उत्पन्न पदार्थों के ज्ञाता अग्नि! हमारे शत्रुओं को अलग करो। अग्नि तुम देवद्वेषी शत्रु सैन्य को अलग करो।

त्मना देवेषु (ऋग्वेद ७-७-१)

प्रवो देवं चित्सह सानमग्निमश्वं म वाजिनं हिषे नमोभिः।

भवानो दूतो अध्वरस्य विद्वान्त्मना देवेषु विविदे मित द्रुः॥

मन्त्रार्थ - हे अग्निदेव तुम राक्षसादिकों के अभिभविता और अश्व की तरह वेगशाली हो। अग्नि तुम विद्वान् हो। हमारे यज्ञ के दूत बनो। तुम स्वयं देवों में द्रग्धद्रुम कहकर विख्यात हो।

त्वं रजिष्ठ मनुनेषि। (ऋग्वेद १-९१-१)

त्वं सोम प्रचिकितो मनीषात्वं रजिष्ठमनुनेषि पन्थाम्।

तव प्रणीती पितरो न इन्द्रो देवेषु रत्नमभजन्तधीराः॥

मन्त्रार्थ - सोम देव अपनी बुद्धि से हम तुम्हें अच्छी तरह जानते हैं। तुम

हमें सरल मार्ग से ले जाना। इन्द्र अर्थात् हे सोम! तुम्हारे द्वारा लाये जाकर हमारे पितरों में देवों के बीच रत्न प्राप्त किया था।

**विमर्श-** माध्वीर्नः सन्त्वोषधीः (ऋग्वेद १-९०-६)

मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः।

मन्त्रार्थ – यजमान के लिए समस्त वायु और नदियाँ मधु (या कर्म फल) वर्षण करें। सारी ओषधियाँ भी माधुर्य युक्त हो।

हिरण्ययेन सवितारथेन (१-३५-२)

आकृष्णे न रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥ १-३५-२

मन्त्रार्थ – अन्धकार पूर्ण अन्तरिक्ष से बार-बार भ्रमण कर देव और मनुष्य को सचेत करके सविता देवता सोने के रथ से समस्त भुवनों को देखते देखते भ्रमण करते हैं।

॥ इति षष्ठोऽध्यायः ॥

# ॥ सप्तमोऽध्यायः ॥

शीङो रुट्.। (७-१-६)

बहुलं छन्दसि। (७-१-८)

रुडागमः स्यात्। 'लोपस्त आत्मनेपदेषू' इति पक्षे तलोपः। धेनवो दुह्रे। लोपाभावे घृतं दुह्रते। अदृश्रमस्य। (ऋ०वे० १-५०-३)।

---

**शाङ्करी**-लोके "शीङो रुट्"। (७-१-६) इति सूत्रे "झोऽन्तः" इत्यतः झ इति "अदभ्यस्तात्" ७-१-४) इत्यत अद इति च। स च षष्ठ्या विपरिणम्यते। शीङः इति पञ्चम्यन्तः। अतः सूत्रार्थः शीङः परस्य झादेशस्यातो रुडागमः (नित्यम्) स्यात्। शेरते इति रूपम्। वेदे तु "बहुलं छन्दसि" ७-१-८ इति सूत्रे रुडागमस्य वैकल्पिकत्वात् अदादिगणपठित दुह धातोर्लटि तस्य आत्मनेपदे प्रथमपुरुषैकवचने झादेशः। अकारस्य टेः "टित आत्मनेपदानां टेरे" इत्यनेन एत्वम्। झस्य आत्मनेपदेष्वनतः" इत्यनेन अत आदेशः तस्य "बहुलं छन्दसि" इत्यनेन रुडागमः "लोपस्त आत्मने पदेषु" इत्यनेन तकारलोपे दुह्रे इति। लोपाभाते दुह्रते इति। अदृशम् इति। भ्वादिगणपठित दृशिर् प्रेक्षणे धातोर्लुङ् तस्य परस्मैपदे प्रथमपुरुषबहुवचने झेः स्थाने व्यत्ययेन उत्तमपुरुषस्यैकवचने मिप् आदेशः तस्य "तस्थस्थमिपां तान्तंतामः" इति सूत्रेण अमादेशो रुडागमश्च।

---

**तीर्था**- दुह्रे - अदादिगणपठित दुह् धातो लट् लकारः तस्य स्थाने आत्मनेपदे प्रथमपुरुषस्य बहुवचने झादेशः मध्ये "कर्तरिशप्" इत्यनेन शप् विकरणे तस्य "अदिप्रभृतिभ्यः शपः" इत्यनेन लुक् झस्य "आत्मनेपदेष्वनतः" इत्यनेन अत् आदेशः तस्य "बहुलं छन्दसि" इत्यनेन रुडागमः अनुबन्धलोपः झघटक अकारस्य टेः "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे "लोपस्त आत्मनेपदेषु" इत्यनेन तकारलोपे, दुह्रे इति लोपाभावे दुह्रते इति।

---

**विमर्शः**-धेनवो दुह्रे - दुह्रत। (ऋग्वेद १-१३४-६)

त्वं नों वायवेषामपूर्व्यः सोमानां प्रथमः पीतिमर्हसि सुतानां पीतिमर्हसि।
उतो विहुत्मतीनां विशं ववर्जुषीणाम्।
विश्वा इत्ते धेनवों दुह्र आशिरं घृतं दुह्रत आशिरम्।

अतो भिस ऐस्। (७-१-९)

बहुलं छन्दसि। (७-१-१०)। अग्निर्देवेभिः। (ऋग्वेद ३-३-६)

---

**शाङ्करी**- लोके "अतो भिस ऐस्" (७-१-९) अतोऽङ्गात् परस्य भिसः ऐस् स्यात् रामैः। वेदे "बहुलं छन्दसि" इत्यत्र पूर्वसूत्रस्यानुवृत्तौ भिसः ऐस् विकल्पेन सत्वात् "बहुवचने झल्येत्" (७-३-१०३) इत्यनेन देवघटकाकारस्य एत्वे देवेभिः इति।

---

**तीर्था**- अदृश्रम्- भ्वादिगणपठित प्रेक्षणार्थकाद् (दृशिर) इर् इत्संज्ञावाच्या इत्यनेन इरः इत्संज्ञायां दृश् धातोर्लुङ् तस्य स्थाने, प्रथमपुरुष बहुवचने झिप्रत्ययः झेः स्थाने च "व्यत्ययो बहुलम्" इत्यनेन उत्तमपुरुषस्य एकवचने मिप् आदेशः तस्य "तस्थस्थमिपां तांतंमतामः" इत्यनेन अमादेशः मध्ये "च्लि लुङि" इत्यनेन च्लि प्रत्ययः तस्य "इरितो वा" इत्यनेन अङ् आदेशः दृश् अ अम् इति स्थिते "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन दृश अ इत्यस्याङ्गस्य अडागमे "अतो गुणे" इत्यनेन पररूपे बहुलं छन्दसि इत्यनेन अमो रुडागमे अदृश्रम् इति साधुः।

वार्त्रघ्नमितरम्। इतरशब्दात् प्रथमाया एकवचने सु प्रत्ययः तस्य नपुंसकत्व विवक्षायाम् "अतोऽम्" इत्यनेन अमादेशे प्राप्ते तं प्रबाध्य "अद् डतरादिभ्यः पञ्चभ्यः" इत्यनेन अद्डादेशे च प्राप्ते तस्य "नेतराच्छन्दसि" इत्यनेन निषेधे "अतोऽम्" इत्यनेन अमादेशः "अमिपूर्वः" इत्यनेन पूर्वरूपम् इतरम् इति साधु।

---

**विमर्श**- अर्थ - हे वायुदेवता तुमसे पहले किसी ने सोमपान नहीं किया है, इसलिये तुम्हीं सभी देवों से पहले सोमपान करने योग्य हो। इसलिये सोम से सम्बन्धित सभी यज्ञों में तुम सोमपान करते हो। तुम हवनकर्ता तथा निष्पाप लोगों का हवन स्वीकार करते हो। सभी गायें तुम्हारे लिए दूध देती हैं। और घी भी देती है।

अदृश्रमस्य - (ऋग्वेद १-५०-३)

अदृश्रमस्य केतवो विरश्मयो जनाँ अनु। भ्राजन्तो अग्नयों यथा।

अर्थ - देदीप्यमान अग्नि की तरह सूर्य की सूचक उनकी किरणें सम्पूर्ण जगत को एक एक कर देखती हैं।

ऋग्वेद ३-३-६

अग्निर्देवेभिर्मनुष्यश्च जन्तुभिस्तन्वानो यज्ञं पुरुपेशसं धिया।

रथीरन्तरीयते साधदिष्टिभिर्जीरो दमूना अभिशस्ति चातनः॥

नेतराच्छन्दसि। (७-१-२६)

स्वमोरदड् न। वार्त्रघ्नमितरम्। छन्दसि किम् - इतरत् काष्ठम्।

'समासेऽनञ् पूर्वे क्त्वो ल्यप्'। (७-१-३७)

क्त्वापि छन्दसि। (७-१-३८)

यजमानं परिधापयित्वा।

---

**शाङ्करी-** लोके "अद्डतरादिभ्यः पञ्चभ्यः" इत्यनेन स्वमोरदडादेशे कतरत् कतरद् इति भवतः। इतरशब्दाद् वेदेऽपि प्राप्तत्वात् तन्निषेधार्थमिदं नेतरात् इति। तदाह वृत्तौ स्वमोरद्ड् नेति। वार्त्रघ्नमितरम्। इतरशब्दात् अतोऽम इत्यनेन स्वमोरमादेशे "अमि पूर्वः" इत्यनेन पूर्वरूपम्।

लोके नञ्भिन्नेऽव्यय पूर्वपदे समासे क्त्वो ल्यबादेशो भवति। अतस्तत्र प्रकृत्य इत्यादीनि रूपाणि भवन्ति। वेदे क्त्वापि छन्दसि" इति सूत्रनिर्देशात् परिधापयित्वा इत्यत्र क्त्वापि प्रयुज्यते। सूत्रे अपि शब्दाल्ल्यबपि विधीयते छन्दसि।

---

**तीर्था-** परिधापयित्वा - परि उपसर्गपूर्वकात् धा धातो र्णिचि "अर्ति ह्रीब्ली रीक्नूयीक्ष्माय्यातां पुग्णौ" इत्यनेन पुगागमः पुक् इत्यत्र ककारस्येत्संज्ञा उकार उच्चारणार्थः परिधापि इत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां समानकर्तृकयोः पूर्वकाले इत्यनेन क्त्वा प्रत्यये ककारस्य "लशक्वतद्धिते" इत्यनेन इत्संज्ञायां परिधापयित्वा इत्यस्य कृदन्तत्वात्प्रातिपदिकत्वात् सौ तस्य "अव्ययादाप्सुपः" इत्यनेन लुक्।

---

**विमर्श-** अर्थ - जो यज्ञ साधक देवों और ऋत्विकों के साथ कर्म द्वारा यजमान के नानाविध यज्ञों का सम्पादन करते हैं। जो नेता शीघ्रगामी दानशील और शत्रुओं के नाशक हैं वे ही अग्नि द्यावा पृथिवी के बीच जाते हैं।

मैत्रायणीसंहिता १-६-१२

इतरम् - स वा ईन्द्र ऊर्ध्वं एव प्राणमनुदश्रयत मृतमितर माण्डमवापद्यत स वा व मार्ताण्डो यस्येमे मनुष्याः प्रजाः।

काठकसंहिता ११-१०

कृष्णं वासो यजमानं परिधापयित्वा न्वारम्भयित्वैतानि जुहोति।

सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः। (७-१-३९)

ऋजवः सन्तु पन्थाः। (ऋग्वेद १०-८५-२३)। पन्थानः इति प्राप्ते सुः। परमे व्योमन्। व्योमनि इति प्राप्ते ङेर्लुक्। धीती मती सुष्टुती। धीत्या मत्या सुष्टुत्येति प्राप्ते पूर्वसवर्णदीर्घः। या सुरथा रथीतमोभा देवा दिविस्पृशा। अश्विना। यौ सुरथौ दिविस्पृशावित्यादौ प्राप्ते आ। नताद् ब्राह्मणम्। नतमिति प्राप्ते आत्। या देव विद्मता त्वा। यं तमिति प्राप्ते न युष्मे वाजबन्धवः। अस्मे इन्द्रा बृहस्पती। युष्मासु अस्मभ्यमिति प्राप्ते शे। उरुया घृष्णुया। उरुणा घृष्णुनेति प्राप्ते या। नाभा पृथिव्याः। नाभाविति प्राप्ते डा। ता अनुष्ठ्योच्यावयतात्। अनुष्ठानमनुष्ठा, व्यवस्थावदङ्, आङो ड्या। साधुया साध्विति प्राप्ते याच्। वसन्ता यजेत। वसन्ते इति प्राप्ते आल्।

---

शाङ्करी-१. सुपां सुः ऋजवः सन्तु पन्थानः इत्यस्य स्थाने ऋजवः सन्तु पन्थाः जसः स्थाने सु प्रत्ययः।

२. सुपां लुक्। परमे व्योमनि इति प्राप्ते ङेर्लुकि सति व्योमन् इति।

३. पूर्व सवर्ण दीर्घः। धीति टा-मति टा सुष्टुति टा, इति स्थिते यणि सति धीत्या मत्या सुष्टुत्या इति प्राप्ते, पूर्व सवर्ण दीर्घे सति धीती, मती सुष्टुती।

४. आ (औ औटोः स्थाने आकारः। यौ सुरथौ रथीतमौ दिवि स्पृशौ इत्यादौ प्राप्ते आ। अतः या सुरथा रथीतमोमा देवा दिविस्पृशा इति।

५. आत्। द्वितीयैकवचने नतमिति प्राप्ते अमः स्थाने आत् नताद् ब्राह्मणम्। द्वितीयमुदाहरणम्। या देव विद्मता त्वा। य तमिति पास्रे आत्।

६. शे सप्तम्याः बहुवचने सुपः स्थाने, तथा चतुर्थ्या बहुवचन भ्यसः स्थाने शे इति भवति। युष्मद् सुप्, सुपः स्थाने शे इति जाते "लशक्वतद्धिते" इत्यनेन शकारस्येत्संज्ञा लोपाभ्यामपहारे शेषे लोपः इत्यनेन युष्मदः दकारस्य लोपे "अतो गुणे" इत्यनेन पररूपे युष्मे इति। शेषे लोपः इत्यनेन टिलोपे अतो गुणे इति नास्ति पररूपस्य आवश्यकता। एवमेव अस्मद् भ्यस् इति स्थिते भ्यसः स्थाने शे अन्यत् सर्वं युष्मे इति वत् ज्ञेयम्।

७. या तृतीयाया एकवचन टा स्थाने या इत्यस्य भवनम्। उरु आ, धृष्णु आ इति स्थिते आङो नाऽस्त्रियाम् इत्यनेनाकारस्य ना इत्यनेन भाव्यम् अतः उरुणा घृष्णुना इति भाव्यम्। किन्तु प्रकृत सूत्रेण टा इत्यस्य स्थाने या इति भवति। अतः उरुया घृष्णुया इति भवतः।

शाङ्करी-८. सप्तम्या एकवचे ङे इत्यस्य स्थाने औत् इति सूत्रेण निष्पन्न औ इत्यस्य स्थाने प्रकृतसूत्रेण डा इत्यादेशः। नाभा इत्यत्र डा इत्यस्य करणे इदं प्रयोजनं यत् डित्व सामर्थ्यादभस्यापि टेर्लोपे सति नाभि शब्दस्य टेर्लोपः।

९. ड्या आदेशः। तृतीयाया एकवचने आङित्यस्य स्थाने ड्या आदेशः। अनुष्ठा इति शब्दस्य तृतीया एकवचने अनुष्ठ्या इति भाव्यम्। तदर्थं सूत्रमस्ति "आङि चापः" इति। परन्तु वेदे ड्या इत्यादेशे सति टिलोपे च कृते अनुष्ठ्या इति।

१०. याच्। साधुशब्दस्य सम्बोधनस्यैकवचने सु प्रत्यये एङ् ह्रस्वात्सम्बुद्धे इत्यनेन सुलोपः प्राप्तः किन्तु वेदे तं प्रबाध्य याच् आदेशः।

११. आल्। वसन्ता इति। अत्र सप्तम्या एकवचने वसन्ते इति प्राप्ते। परन्तु वेदे ङेः स्थाने आल् इत्यादेशः वसन्ता इति।

---

विमर्श- (१) ऋजवः सन्तु पन्था। (ऋग्वेद १०-८५-२३)

अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम्।
समर्यमा स भगो नो निनीयात्सं जास्पत्यं सुयममस्तु देवाः॥

(२) परमे व्योमन् (तैत्तिरीयोपनिषद् द्वितीय वल्लभी प्रथम अनुवाक् पृष्ठ ३३३ उपनिषद् अङ्क कल्याण।

सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे।
व्योमन्। सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति।

(३) पूर्व सवर्ण धीती (ऋग्वेद १-१६४-८)

माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे।
सा बीभत्सु गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः॥

पूर्वसवर्ण सुष्टुती ऋ०वे० (२-३२-४)

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतुत्मना।
सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम्॥

(४) (ऋग्वेद १-२२-२) आ - या सुरथा रथीतमेभा देवा दिविस्पृशा। अश्विना ताहवामहे॥

अर्थ - रथियों में श्रेष्ठ और स्वर्गवासी जो अश्विनीकुमार सुन्दर रथ से युक्त हैं उन दोनों का हम आह्वान करते हैं।

(५) आत्। नताद् ब्राह्मणम् (अन्वेष्टव्य)

(६) न युष्मे वाजवन्धवः (ऋग्वेद ८-६८-१९)

**विमर्श**– शे। न युष्मे वाजबन्धवो निनित्सुश्चन मर्त्यः। अवद्यमधि दीधरत्। अर्थ – हे अन्नप्रदान करने वाले बन्धुओं अथवा हे अन्नप्रदान करने वाले राजाओं की निन्दक मनुष्य भी तुम लोगों की निन्दा करने में प्रवृत्त नहीं होगा।

(७) (ऋग्वेद ४-४९-४)

अस्मे इन्द्रावृहस्पती रयिं धत्तं शतग्विनम्। अश्वावन्तं सहस्रिणम्।

उरुया धृष्णुया। उरुणा धृष्णु ना इति प्राप्ते या।

अर्थ – हे इन्द्र और वृहस्पति तुम दोनों हमें सौ गोयुक्त और हजार अश्व युक्त धन दान करो।

(८) डा नाभा। यमेंरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्यमज्मना।

अग्निं तं गीर्भिर्हिनुहि स्व आदमे य एको वस्वो वरुणो न राजति॥

(ऋग्वेद १-१४३-४)

(९) ड्या – ता अनुष्ठ्योच्च्यावयतात् (ऐतरेय ब्राह्मण २-६-१५) आङो ड्या।

(१०) याच् – साधुया (ऋग्वेद १-४६-११)

अभूदु पारमेतवे पन्था ऋतस्य साधुया। अदर्शि वि स्रुतिर्दिवः॥

११. वसन्ता इति सप्तम्या एकवचने वसन्ते इति प्राप्ते परन्तु वेदे ङे स्थाने आल् इत्यादेशः। लकारस्य "हलन्त्यम्" इत्यनेन इत्संज्ञायालोपाभ्यामपहारे अकः सवर्णे दीर्घः इत्यनेन दीर्घे।

**विशेष** – अनुष्ठाशब्दस्य व्युत्पत्ति विषये इदमाशङ्क्यते। अनु उपसर्गपूर्वकात् स्थाधातो स्त्रियाम् "आतश्चोपसर्गे" इत्यनेन प्राप्त अङ् प्रत्ययं प्रबाध्य "स्थागापापचो भावे" इत्यनेन क्तिन् प्रत्ययः स्यादिति कथमनुष्ठाशब्दे अङ् प्रत्ययः इत्यत आह– "पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्" इति सूत्रे व्यवस्था शब्द इति पाणिनियोग प्रामाण्यात् अनुष्ठाशब्दस्यापि साधुत्वं बोध्यम्। तदुक्तं कौमुद्यां मूले – अनुष्ठानमनुष्ठा व्यवस्थावदङ् आङो ड्या इति।

**भावार्थ** – "आतश्चोपसर्गे" ७-३-१०६ सूत्र में "भावे" (३-३-१८) सूत्र की तथा "अकर्तरि च कारके" (३-३-१९) सूत्र की "स्त्रियां क्तिन्"(३-३-९४) सूत्र से स्त्रियाम् की अनुवृत्ति होती है। अतः सूत्र का अर्थ हुआ उपसर्ग उपपदपूर्वक आदन्त धातु से अङ् प्रत्यय होता है भाव में तथा कर्तृकारक से भिन्न कारक में यह सूत्र स्त्रियां क्तिन् सूत्र का अपवाद है। अनुष्ठा शब्द अनु उपसर्ग पूर्वक आदन्त स्था धातु से निष्पन्न हुआ है। अतः यहाँ "आतश्चोपसर्गे" सूत्र में स्त्रित्व की विवक्षा में भाव में अङ् प्रत्यय हुआ है। इस पर प्रश्न उठाया गया है कि "स्थागापापचो

(वा) इयाडियाजीकाराणामुपसंख्यानम्।

उर्विया (ऋग्वेद १०-१०-२)। दार्विया। उरुणा दारुणा इति प्राप्ते इया। सुक्षेत्रिया। सुक्षेत्रिणा। सुक्षेत्रिणा इति प्राप्ते डियाच्। दृतिं न शुष्कं सरसी शयानम्। (ऋग्वेद ७-१०३-२) ङेरीकारः इत्याहुः। तत्राद्युदात्ते पदे प्राप्ते व्यत्ययेनात्तोदात्तता। वस्तुतस्तु ङीषन्ताद् ङेर्लुक्। ईकारादेशस्य तूदाहरणान्तरं मृग्यम्।

---

शाङ्करी-उपसंख्यानमिति - सुपां स्थाने इयां डियाच् ईकारा अपि आदेष्टव्येति भावः। उर्विया दार्विया। अत्र उरु दाउ शब्दात्तृतीयाया एकवचने टा इत्यस्य इया आदेशः। लोके तु उरुणा दारुणेति। सुक्षेत्रियेति। सुक्षेत्रिन् शब्दात्तृतीयाया एकवचने सुक्षेत्रिणेति प्राप्ते डियाच्। डित्वाट्टेर्लोपः। सरसी शयानम् इति । सरस् इति हलन्तात् सप्तम्या एकवचने ङेरीकारादेशे सरसी इति काशिकावृत्तौ ईकारस्य प्रत्ययत्वात् सरसीशब्दस्य आद्युदात्तता स्यात् परन्तु वस्तुतः "व्यत्ययो बहुलम्" इति सूत्रस्य कालहलच् स्वरकर्तृयङां च इति वार्तिकेन स्वरव्यत्ययेन अन्तोदात्तता।

---

तीर्था तु शाङ्करी व्याख्ययैव गतार्था।

---

विमर्श-भावे" (३-३-९४) सूत्र से स्था गा पा पच् धातुओं से स्त्रित्व की विवक्षा में भाव में क्तिन् प्रत्यय होता है। इस सूत्र में स्था धातु का नाम लिया गया है। अतः यहाँ "आतश्चोपसर्गे" सूत्र से प्राप्त अङ् प्रत्यय को बाधकर क्तिन् प्रत्यय होकर प्रस्थिति उपस्थिति की तरह अनुस्थिति प्रयोग बनना चाहिये। इसका समाधान किया गया है कि महर्षि पाणिनि "पूर्वपरावरदक्षिणोत्तरापराधाणि व्यवस्थामसंज्ञायाम्"(१-१-३४) सूत्र में व्यवस्था अङ् प्रत्ययान्त शब्द का प्रयोग किया हैं, अत आप्तप्रयोग प्रामाण्य से अनुष्ठा शब्द में भी अङ् प्रत्ययान्त का साधुत्व मानना उचित हैं। इसी लिये मूल सिद्धान्त कौमुदी में लिखा है- अनुष्ठानमनुष्ठा व्यवस्थावदङ् आङो ङ्या इति।

उर्विया-न तें सखा सख्यं वष्ट्ये तत्सलक्ष्मा यद्विषुरुषा भवति।
महस्पुत्रासो असुरस्य वीरा दिवो धर्तार उर्विया परिख्यन्॥

(ऋग्वेद १०-१०-२)

यम का उत्तर - यमी तुम्हारा साथी यम तुम्हारे साथ ऐसा सम्पर्क नहीं चाहता क्योंकि तुम सहोदरा भगिनी हो अगन्तव्या हो। यह निर्जन प्रदेश नहीं है, क्योंकि द्युलोक को धारण करने वाले महाबली प्रजापति वीर (देवों के चर) सब देखते हैं।

(वा) आङ्याजयारां चोपसंख्यानम्। (क) प्रबाहवा सिसृतम्। (ऋग्वेद २-३८-२)। बाहुनेति प्राप्ते आङादेशः। 'घेर्ङिति' इति गुणः। (ख) स्वप्नया। स्वप्नेनेति प्राप्ते अयाच्। (ग) स नः सिन्धुमिव नावया (ऋग्वेद १-९७-८) नावेति प्राप्ते अयार, रित्स्वरः।

---

**शाङ्करी-** आङित्यादि - वेदे तृतीयाया एकवचने टा विभक्तेः स्थाने आङ् अयाच् अयार् इति त्रय आदेशाः स्युः। प्रवाहवा। लोके बाहुशब्दस्य घि संज्ञायाम् टा विभक्तेः "आङो नाऽस्त्रियाम्" इत्यनेन ना आदेशे बाहुना इति वेदे प्रकृतवार्तिकेन आङ् आदेशः उकारस्य "घेर्ङिति" इत्यनेन गुणः अवादेशश्च। स्वप्नया। लोके टाङसिङसामिनात्स्याः इत्यनेनेनादेशे गुणे स्वप्नेन इति। वेदे टा इत्यस्य अयाच् आदेशः चकारस्येत्संज्ञालोपाभ्यामपहारः "अतो गुणे" इत्यनेन पररूपम्। नावया नौ शब्दस्य टा इत्यस्य अयार् आदेशः "एचोऽयवायावः" इत्यनेनावादेशः। लोके आकारे परे आवादेशे नावा इति। रित् स्वरः अयाच् इत्यनेनैव सिद्धे पृथक् अयार् ग्रहणं किमर्थम् "उपोत्तमं रिति" इत्यनेन वकाराकारः उदात्त इति भावः।

---

**विमर्श-** दार्विया अन्वेष्टव्य।

सुक्षेत्रिया - (ऋग्वेद १-९७-२)

सुक्षेत्रिया सुगातुया वसूया च यजामहे। अप नः शोमुचदघम्।

अर्थ - हे अग्नि शोभनीय क्षेत्र और शोभन मार्ग और धनप्राप्ति की इच्छा से हम आप की पूजा करते हैं। हमारे पाप विनष्ट हो।

व दृतिं न शुष्कं सरसी शयनाम् (ऋग्वेद ७-१०३-२)

दिव्या आपो अभि यदेनमायन्दृतिं न शुष्कं सरसी शयानम्।
गवामह न मायुर्वत्सिनीनां मण्डूकानां वग्नुरत्रा समेति॥

अर्थ - सरोवरों में सोये हुए मेढको के पास जिस समय स्वर्गीय जल आता है उस समय बछड़ेवाली धेनु के समान मण्डूकों का टर - टर कल - कल शब्द होता है।

प्रबाहवा-

विश्वस्य हि श्रुष्टये देव ऊर्ध्वः प्रबाहवा पृथुपाणिः सिसर्ति।
आपश्चिदस्य व्रत आ निमृग्रा अयं चिद्वातो रमते परिज्मन्॥

(ऋग्वेद २-३८-२)

प्रबाहवा सिसृतं जीवसे न आनो गव्यूति भुक्षतं घृतेन।

अमो मश्। (७-१-४०)

मिबादेशस्यामो मश् स्यात्। अकार उच्चारणार्थः। शित्वात्सर्वादेशः अस्तिसिचः। (७-३-९६) इतीट्। वंर्धीं वृत्रम्। (ऋग्वेद १-१६५-८) अवधिषमिति प्राप्ते।

लोपस्त आत्मनेपदेषु। (७-१-४१)। छन्दसि। देवा अदुह्र। अदुहतेति प्राप्ते। दक्षिणतः शये। शेते इति प्राप्ते। आत्मने इति किम् उत्सं दुहन्ति।

---

**शाङ्करी**- अकार उच्चारणार्थः- मश् इत्यत्र मघटकाकार इत्यर्थः। सर्वादेशः -सर्वस्याम इत्यर्थः। मशः शित्वाभावे अलोऽन्त्यस्येत्यनेन अमो मकारस्य स्यात्। इतीट्। अपृक्त मकारस्य।

लोपस्त आत्मनेपदेषु - आत्मनेपदेषु यस्तकारस्तस्य लोपो भवति छन्दसि। देवा अदुह्र। अदादिगणपठिप्रपूरणार्थक दुहधातोर्लुङ् तस्य प्रथमपुरुषबहुवचने झादेशः तस्य आत्मनेपदेष्वनतः इत्यनेन अदादेशः बहुलं छन्दसि इत्यनेन रुडागमः लोपस्त

---

**विमर्श**- आ नो जनें श्रवयतं युवाना श्रुतं में मित्रावरुणा हवेमा॥

(ऋग्वेद ७-६२-५)

अर्थ - लम्बी बाहवाले प्रकाशवान सविता विश्व के आनन्द के लिये उदित होकर बाहु प्रसारित करते हैं। उनके इस कार्य के लिए अतीव पवित्र जल-समूह प्रवाहित होता है, और वायु भी सर्वतोव्यापी अन्तरिक्ष में विहरण करता है।

प्रवाहवा सिसृतम्।

हे मित्रावरुण अपनी बाहें पसारो हमारे जीवन के लिये गोमार्ग भूमि को तृणाणि के प्ररोहण के लिये जल से सिक्त कर दो। मनुष्यों के बीच हमें विख्यात करें। तुम लोग नित्य युवा हो हमारा आह्वान सुनो।

स्वप्रया (अथर्ववेद ५-७-८)

उत नग्ना बोभुंवती स्वप्नया संचसे जनंम्।
अरांते चित्तं वीर्त्सन्त्या कूतिं पुरुंषस्य च॥

नावया (ऋग्वेद १-९७-८)

स नः सिन्धुंमिव नावयातिं पर्षा स्वस्तयें। अपं नः शोमुचदघम्।

हे अग्नि! नाव से नदी के पार की तरह हमारे कल्याण के लिए तुम हमें शत्रु से शत्रु के क्षेत्र से पार कराकर हमारी रक्षा करो। हमारे पाप नष्ट हो।

**शाङ्करी**– आत्मनेपदेषु'' इत्यनेन तकारलोपः झादेशात घटकाकारस्य झ घटकाकारेण अतो गुणे इत्यनेन पररूपे देवा अदुह्र इति।

दक्षिणतः शये। अदादिगणपठित शयनार्थक शीङ् धातोर्लट् लकारः तस्य आत्मनेपदे प्रथमपुरुषस्य एकवचेन तादेशः मध्ये कर्तरि शप् इत्यनेन शप् तस्य ''अदिप्रभृतिभ्यः शपः'' इत्यनेन लुक् शीङः सार्वधातुके इत्यनेन इकारस्य गुणे टित आत्मनेपदानां टेरे इत्यनेन टिभागस्य एत्वे शेते इति स्थितौ लोपस्त आत्मने पदेषु इत्यनेन तकारलोपे धातोरेकार एचोऽयवायावः इत्यनेन अयादेशे शये इति। लोके तु शेते इति।

---

**तीर्था**– वधीं वृत्रम् – हन् धातोर्लुङ् लकारः उत्तमपुरुषस्यैकवचने मिप् तस्य मिपः ''तस्थस्थमिपां तांतंताम:'' इत्यनेन अमादेशः ''लुङ्लङ्लृङ्क्ष्वडुदात्तः'' इत्यनेन प्राप्त अडागमस्य ''बहुलं छन्दस्यामाङ्योगेऽपि'' इत्यनेन निषेधे हनः ''लुङि च'' इत्यनेन वधादेशः अमः ''अमो मश्'' इत्यनेन मश् आदेशः अत्र अकारः उच्चारणार्थः शकाः इत् मध्ये ''च्लि लुङि'' इत्यनेन च्लि प्रत्ययः तस्य ''च्लेः सिच्'' इत्यनेन सिजादेशे इचावितौ तस्य ''आर्धधातुकस्येड्वलादेः'' इत्यनेनेडागमः ''अस्तिसिचोऽपृक्ते'' इत्यनेन सिचः परस्यापृक्त मकारस्येडागमः वध इस् ई म् इति स्थितौ ''इटः इटि'' इत्यनेन सकार लोपः द्वयोरिकारयो सवर्णदीर्घः अतो लोपः इत्यनेन धघटकाकारस्य लोपः मकारस्य मोऽनुस्वारः इत्यनेन अनुस्वारे, वधीं वृत्रम्।

देवा अदुह्र। अदादिगणपठित प्रपूरणार्थक दुह् धातोर्लङलकारः तस्य झादेशः मध्ये ''कर्तरि शप्'' इत्यनेन शप् तस्य ''अदिप्रभृतिभ्यः शपः'' इत्यनेन लुक् धातो ''लुङ्लङ्लृङ्क्ष्वडुदात्तः'' इत्यनेनाडागमः झकारस्य ''आत्मनेपदेष्वनतः'' इत्यनेनादादेशः ''बहुलं छन्दसि'' इत्यनेन धातोः परे प्रत्ययस्य रुडागमः अनुबन्धलोपः ''लोपस्त आत्मनेपदेषु'' इत्यनेन तकारलोपः झादेशस्य तघटकाकारस्य झघटकाकारेण सह ''अतोगुणे'' इत्यनेन पररूपे अदुह्र इति। लोके अदुहत इति।

दक्षिणत शये – अदादिगणपठित शयनार्थक शीङ्धातोर्लट् लकारः तस्य आत्मनेपदे प्रथमपुरुषस्यैकवचने तादेशः मध्ये ''कर्तरिशप्'' इत्यनेन शप् तस्य ''अदिप्रभृतिभ्यः शपः'' इत्यनेन लुक् ''शीङः सार्वधातुके'' इत्यनेनेकारस्य गुणः ''टित आत्मनेपदानां टेरे'' इत्यनेन टिभागस्यैत्वे शेते इति स्थितौ ''लोपस्त आत्मनेपदेषु'' इत्यनेन तकारलोपः धातोरेकारस्य ''एचोऽयवायावः'' इत्यनेनायादेशः शये इति। लोके शेते इति।

ध्वमो ध्वात् (७-१-४२)

अन्तरेवोष्माणं वारयध्वात्। (ऐतरेयब्राह्मण) वारयध्वमिति प्राप्ते। यजध्वैनमिति च। (७-१-४३)। एनमित्यस्मिन्परे ध्वमोऽन्तलोपो निपात्यते। यजध्वैनं प्रियमेधाः। वकारस्य यकारो निपात्यत इति वृत्तिकारोक्तिः प्रमादिकी।

तस्य तात्। (७-१-४४)।

लोटो मध्यमपुरुष बहुवचनस्य स्थाने तात्स्यात्। गात्रमस्यानूनं कृणुतात्। कृणुत इति प्राप्ते। सूर्यं चक्षुर्गमयतात्। गमयतेति प्राप्ते।

---

**शाङ्करी-** ध्वमो ध्वात्। छन्दसि ध्वमो ध्वात् इत्ययमादेशः स्यात्।

तस्य मध्यमपुरुष बहुवचनस्य थादेशस्य तस्येत्यर्थः। आत्मनेपदीय

---

**तीर्था-** वारयध्वात् - वृङ् सम्भक्तौ वृञ् वरणे वा धातोः "हेतुमति च" इत्यनेन णिच् अनुबन्धलोपः णिजन्तस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लोटो मध्यमपुरुष बहुवचने ध्वमादेशः तस्य सार्वधातुकसंज्ञायां शप् धातोः ऋकारस्य वृद्धौ रपरे च वारि अ ध्वम् इति स्थितौ इकारस्य "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणेऽयादेशे च ध्वमोध्वात् इत्यनेन ध्वमो ध्वात् इत्यादेशे वारयध्वात् इति साधुः। लोके तु वारयध्वमित्येव।

---

**विमर्श-** वर्धीं वृत्रम्। (ऋग्वेद १-१६५-८)

वर्धीं वृत्रं मरुत इन्द्रियेण स्वेन भामेन तविषो बभूवान्।

अहमेतां मनवे विश्वश्चन्द्राः सुगा अपश्चकर वज्रबाहुः।

अर्थ - हे मरुद्गण (इन्द्र) मैंने क्रोध के समय विशाल पराक्रमी बनकर अपने बाहुबल से वृत्र को पराजित किया है। मैं वज्रबाहु हूँ। मैं मनुष्य के लिये और सब की प्रसन्नता के लिये अच्छी वृष्टि किया करता हूँ।

सहस्रं पशूनाप्नोति य एव वेद तस्या वै पयः पर्यपश्यः

स्तों देवा अदुह्र हरितेन पात्रेणामृतंः (मैत्रायणी संहिता ४-२-१) पृष्ठ ३४१

तस्माद् दक्षिणतः पुमान् स्त्रियमुपशये यदि पूर्व वयसे चिन्वीतोभे

सह प्रथमायां चित्यामुपदध्यात् (काठकसंहिता २०-६ पृष्ठ २१४)

यजध्वैनं प्रिय मेधा इन्द्र सत्राचा मनसा। यो भूत्सोमैः सत्यमद्वा॥

अर्थ - हे प्रियमेधा ऋषि इन्द्र के लिये उनमें मन लगाकर यज्ञकरो। सोम पाने पर इन्द्र प्रसन्न होते हैं। उनका प्रसन्न होना निष्फल नहीं होता।

प्रथमपुरुषैकवचनस्य तु न ग्रहणं छन्दसि दृष्टानुविधानात्। पूर्वोत्तर सूत्रयोर्बहुवचनस्यैव ग्रहणेन तत्साहचर्याच्च। कृणुतात् इति। भ्वादिगणीय हिंसार्थक कृवि धातोर्लोट्लकारस्य परस्मैपदीय मध्यमपुरुषबहुवचनस्य थादेशस्य तस्य स्थाने तात् आदेशः। धातोरिदित्वान्नुमागमः। शप् प्रत्ययं प्रबाध्य "धिन्विकृण्व्योर च" इत्यनेन युगपदेव वकारस्य अकारः उप्रत्ययश्च। अतो लोपः इत्यनेन अकारः लोपः। गमयतात्। ण्यन्त गामेर्लोट् 'जनीजृषक्नसु रञ्जोऽमन्ताश्च' इति गणसूत्रेण धातोर्मित्वात् मितां ह्रस्वः इत्यनेन ह्रस्वः इकारस्य गुणेऽयादेशः। थस्य तादेशः।

---

तीर्था- यजध्वैनम् - यजधातो र्लोटि तस्य मध्यमपुरुष बहुवचने ध्वमादेशः यजध्वैनमिति सूत्रेण एनमित्यस्मिन् परे निपातनात् मकारलोपे "वृद्धिरेचि" इत्यनेन वृद्धिः। प्रामादिकी - ऋक् संहितायां तद् भाष्ये च वकार पाठस्यैव दृष्टत्वात्।

भ्वादिगणीय हिंसार्थकात् करणार्थकाच्च कृविधातोरिदित्वात्, इदितो नुम् धातोरित्यनेन नुमागमः ततो लोट् लकारः तस्य स्थाने मध्यमपुरुष बहुवचने "तिप्तस्झि०" इत्यादि सूत्रेण थादेशः तस्य सार्वधातुकसंज्ञायां तस्मिन् परे "कर्तरि शप्" इत्यनेन शप् विकरणे प्राप्ते तं प्रवाध्य "धिन्विकृण्व्योरच" इत्यनेन वकारस्याकारः उप्रत्ययश्च विधीयते ततः कृन अ उ थ इति स्थितौ लोट् लकारस्य लङ्वद्भावेन थकारस्य "तस्थस्थमिपां०" इत्यादिना तादेशः उप्रत्ययस्यार्धधातुकत्वात् तस्मिन् परेऽकारस्य "अतो लोप" इत्यनेन लोपः नकारस्य ऋवर्णान्नस्य णत्वं वाच्यम् इत्यनेन णत्वे कृणुत इति स्थिते तस्य तात् इति सूत्रेणत इत्यस्य तात् आदेशे कृणुतात् इति साधुः।

गमयतात् - भ्वादिगणीय गत्यर्थक गम् धातोर्णिच् प्रत्ययः अनुबन्धलोपः "अत उपधाया" इत्यनेन उपधा अकारस्य वृद्धि र्गामि इति ण्यन्तस्य "सनाद्यन्ता धातवः" इत्यनेन धातुत्वात् लोट् लकारः तस्य स्थाने मध्यमपुरुषस्य बहुवचने थादेशः तस्य "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायां तस्मिन् परे "कर्तरि शप्" इत्यनेन शप् अनुबन्धलोपः गामयि अथ इति स्थिते "जनीजृषक्नसुरञ्जोऽमन्ताश्च" इति गणसूत्रेण धातोर्मित्वात् "मितां ह्रस्वः" इत्यनेनाकारस्य ह्रस्वः इकारस्य गुणः अयादेशः थस्य "तस्थस्थमिपामि"त्यादिनातादेशः तस्य तस्यतात् इति सूत्रेण तात् आदेशे, गमयतात् इति साधुः। लोके गमयत इति भवति।

तप्तनप्तनथनाश्च। (७-१-४५)

तस्येत्येव। शृणोत ग्रावाणः। शृणुत इति प्राप्ते तप्। सुनोतन पचत ब्रह्मवाहसे। (ऋग्वेद ५-३४-१)। दधातन द्रविणं चित्रमस्मे। तनप्। मरुतस्तज्जु जुष्टन (ऋग्वेद ७-५९-९)। जुषध्वमिति प्राप्ते व्यत्ययेन परस्मैपदं श्लुश्च। विश्वेदेवासो मरुतो यतिष्ठन (ऋग्वेद १०-६३-६)। यत्संख्याकाः स्थेत्यर्थः। यच्छब्दाच्छान्दसो इति। अस्तेतस्य थनादेशः।

---

**शाङ्करी**- तप्तनप्तनथनाश्च। मध्यमपुरुषीय थस्थानिकस्य तस्य स्थाने एते तप्तनप्तनथन आदेशाः स्युः। श्रृणोतेति। पित्वेन सार्वधातुकमपित् इत्यनेनाङिद्वद्भावाद् गुणः। श्रवणार्थकात् श्रु धातोर्लोटि श्रुव श्रृच इत्यनेन श्नु प्रत्ययः धातो श्रृ आदेशः प्रत्ययस्य पित्वेनाङित्वाद् गुणः। सुनोतन। स्वादिगणीय अभिषवार्थक षुञ् धातोर्लोट् "स्वादिभ्यः श्नुः" इत्यनेन श्नुः, त इत्यस्य तनप्। पित्वेन ङित्वाभावाद् गुणः। दधातन। जुहोत्यादिगणीय धारणार्थकधाधातोर्लोट् मध्ये शप् तस्य श्लुः तस्मिन् धातोर्द्वित्वं तनप् इत्यस्य पित्वेन ङित्वाभावात् "श्नाभ्यस्तयोरातः" इत्यनेनाकारलोपाभावः। जुजुष्टन। जुहोत्यादिगणीयप्रीतिसेवनार्थकात् जुष्धातोर्लोट् धातोर्व्यत्ययेनात्मनेपदस्य परस्मैपदं त इत्यस्य तन आदेशो धातोर्द्वित्वादिकं तकारस्य ष्टुत्वेन टकारः। यतिष्ठन्। यद् शब्दाच्छान्दसत्वाड्डति प्रत्ययः डित्वाट्टिलोपे यति, पुनः अस् धातोर्लोट् तस्य थन् आदेशः थन् इत्यस्यापित्वेन ङित्वात् "श्नसोरल्लोपः" इत्यनेन धातोरकारलोपः सस्य षत्वं थकारस्य ष्टुत्वेन ठकारः।

---

**तीर्था**- (क) श्रृणोत - भ्वादिगणपठित श्रवणार्थकात् श्रु धातोर्लोट् लकारः तस्य स्थाने मध्यमपुरुष बहुवचने थ आदेशः तस्य "तस्थस्थमिपां तांतंतामः" इत्यनेन तादेशः तस्य स्थाने "तप्तनप्तनथनाश्च" इत्यनेन तप् आदेशः पकारस्यानुबन्धलोपः त इत्यस्य सार्वधातुकसंज्ञायां तस्मिन् परे "कर्तरि शप्" इत्यनेन शप् प्राप्ते तं प्रबाध्य श्रुत श्रृ च इत्यनेन श्रुवः स्थाने श्रृ आदेशः शपं च वाधित्वा श्नु प्रत्ययः अनुबन्धलोपः श्रृनुत इति स्थिते तप् प्रत्ययस्य पित्वेन "सार्वधातुकमपित्" इत्यनेन ङिद्वद्भावाभावात् उकारस्य "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे नकारस्य "ऋवर्णान्नस्य णत्वं वाच्यम्" इत्यनेन णत्वे श्रृणोत इति साधुः।

(ख) सुनोतन - स्वादिगणीय अभिषवार्थकात् षुञ् धातोर्लोट् लकारः तस्य स्थाने मध्यमपुरुषबहुवचने "तिप्तस्झि०" इत्यादि सूत्रेण थादेशः थस्य स्थाने "तप्तनप्तनथनाश्च" इत्यनेन तनप् आदेशः अनुबन्धलोपः सु तन इति स्थिते तन

**तीर्था**- इत्यस्य सार्वधातुकसंज्ञायां तस्मिन् परे ''कर्तरि शप्'' इत्यनेन शप् प्राप्ते तं प्रबाध्य ''स्वादिभ्यः श्नुः'' इत्यनेन श्नु प्रत्ययः शकारस्य ''लशक्वतद्धिते'' इत्यनेनेत्संज्ञायां लोपे च सुनु तन इति स्थितौ नु इत्यत्र उकारस्य ''सार्वधातुकार्धधातुकयोः'' इत्यनेन गुणे सुनोतन इति साधु।

(ग) दधातन – जुहोत्यादिगणीय धारणपोषणार्थकात् धाञ् धातोर्लेटि लकारः तस्य स्थाने मध्यमपुरुषबहुवचने तिप्तस्झि इत्यादि सूत्रेण थप्रत्ययः तस्य स्थाने ''तप्तनप्तनथनाश्चे''ति सूत्रेण तनप् आदेशः मध्ये ''कर्तरि शप्'' इत्यनेन शप्प्रत्ययः तस्य ''जुहोत्यादिभ्यः श्लुः'' इत्यनेन श्लुः ''श्लौ'' इत्यनेन धातोर्द्वित्वम् ''पूर्वोऽभ्यासः'' इत्यनेन पूर्वस्य अभ्याससंज्ञायां ''ह्रस्वः'' इत्यनेन ह्रस्वे धधातन इति स्थितौ ''अभ्यासे चर्चः'' इत्यनेन झशः धकारस्य जश्त्वेन दकारः अत्र तनप् प्रत्ययस्य पित्वेन ङित्वाभावात् ''श्नाभ्यस्तयोरातः'' इत्यनेनाकारलोपाभावे दधातन इति साधु।

(घ) जुजुष्टन – तुदादिगणीय प्रीतिसेवनार्थकात् जुषीधातोर्लोट्लकारः तस्य स्थाने ''व्यत्ययो बहुलम्'' इत्यनेन उपग्रह (आत्मने पदस्यस्य व्यत्ययेन परस्मैपदे) मध्यमपुरुष बहुवचने थादेशः थकारस्य ''तप्तनप्तनथनाश्च'' इत्यनेन तन आदेशः जुष् तन इति स्थिते ''तुदादिभ्यः शः'' इत्यनेन शविकरणे तस्य ''बहुलं छन्दसि'' इत्यनेन श्लुः ''श्लौ'' इत्यनेन धातोर्द्वित्वे ''पूर्वोऽभ्यासः'' इत्यनेन पूर्वस्य अभ्याससंज्ञायां ''हलादिः शेषः'' इत्यनेन आदिहलः शेषे ''ष्टुना ष्टुः'' इत्यनेन ष्टुत्वेन तकारस्य टकारे जुजुष्टन इति साधु।

(ङ) यतिष्ठन – यत्संख्याकाः स्थ इति विग्रहे यच्छब्दाच्छान्दसत्वाड् डति प्रत्ययः ''चुटू'' इत्यनेन डकारस्य इत्संज्ञायां लोपे च अति इत्यस्य डित्वेन तस्मिन् परे ''टेः'' इति सूत्रेण यच्छब्दावयवस्य अत् इत्यस्य लोपे यति इति निष्पन्नम्। तत अस् धातोर्लोट्लकारः तस्य स्थाने मध्यमपुरुषबहुवचने ''तिप्तस्झि०'' इत्यादिना थादेशः तस्य स्थाने ''तस्थस्थमिपाम्०'' इत्यादिना तादेशः पुनः त इत्यस्य ''तप्तनप्तनथनाश्चे''त्यनेन थनादेशे यति अस् थन इति स्थिते थनप्रत्ययस्य अपित्वेन ङिद्वत्वात् ''श्नसोरल्लोपः'' इत्यनेन अस्धातोरकारस्य लोपे यतिस्थन् इति स्थितौ ''सुषामादिषु च'' इत्यनेन सकारस्य षत्वे ''ष्टुना ष्टुः'' इत्यनेन थकारस्य ष्टुत्वेन यतिष्ठन इति साधु।

**विमर्श-** श्रृणोत ग्रावाणः। तैत्तिरीय संहिता (१-३१३-१)

श्रृणोत्वग्निः समिधा हवं मे श्रृण्वन्त्वापो धिषणाश्च देवीः।

श्रृणोत ग्रावाणो विदुषो नु(१) यज्ञ श्रृणोतु देवः सविता हवं मे॥

सुनोतन पचत ब्रह्मवाहसे (ऋग्वेद ५-३४-१)

अजातशत्रुमजरा स्वर्वत्यनु स्वधामिता दस्ममीयते।

सुनोतन पचत ब्रह्मवाहसे पुरुष्टुताय प्रतरं दधातन॥

अर्थ - जिनके शत्रु उत्पन्न नहीं हुए हैं, और शत्रुओं का विनाश करते हैं, वे अक्षीण स्वर्गप्रद और अपरिमित हव्य प्राप्त करते हैं। हे ऋत्विकों उन्हीं इन्द्र के लिए तुम लोग पुरोडाश आदि का पाक करो, और अपने उचित कर्म को करो। इन्द्र स्तोत्र वाहक हैं और बहुस्तुत हैं।

दधातन द्रविणं चित्रमस्मे (१०-३६-१३) ऋग्वेद।

ये सवितुः सत्यसवस्य विश्वे मित्रस्यव्रते वरुणस्य देवाः। ते सौभगं वीरवद्गोमदप्नो दधातन द्रविणं चित्रमस्मे।

अर्थ - जो विश्व के समस्त देवता सत्य स्वभाव सूर्य, मित्र और वरुण के कार्यों में उपस्थित रहते हैं वे हमें सौभाग्यशाली वीरपुत्रादि से युक्त, गौवों से युक्त विविध प्रकार के प्रंशसनीय धन दें।

मरुतस्तज्जुष्टन (ऋग्वेद ७-५९-९)

सान्तपना इदं हविर्मरुतस्तज्जुष्टन। युष्माकोती रिशादसः॥

अर्थ - शत्रुओं के सन्तापक हे मरुत प्रत्यक्ष उपलभ्यमान हवि आप के लिये कल्पित है। हे हिंसकों को मारने वाले तुम्हारी रक्षा के लिये हवि का सेवन करो।

मनुष्यो यतिष्ठन (ऋग्वेद १०-६३-६)

को वः स्तोमं राधति यं जुजोषथ विश्वे देवासो मनुषो यतिष्ठन।

को वोऽध्वरं तुविजाता अरं करद्यो नः पर्षदत्यंहः स्वस्तये॥

अर्थ - ऋषि देवताओं के प्रति बहुत प्रकार के वितर्क कर रहे हैं। हे देवता कौन स्तुति करने वाला त्रिवृत् पञ्च दश लक्षण स्तुति करता है। कोई नहीं है। अथवा कोई मुझसे अतिरिक्त उक्तप्रकार की स्तुति करने वाला नहीं है।

इदन्तो मसि। (७-१-४६)। मसीत्यविभक्तिको निर्देशः। इकार उच्चारणार्थः। मस् इत्ययमिकाररुपचरमावयव विशिष्टः स्यात्। मस इगागमः स्यादिति यावत्। नमो भरन्त एमसि॥ ऋग्वेद (१-१-४७)। त्वमस्माकं तव स्मसि। इमः स्मः इति प्राप्ते।

क्त्वो यक्। (७-१-४७)। दिवं सुपर्णो गत्वाय। (ऋ०वेद ८-१००-८)

इष्ट्वीनमिति च। (७-१-४८)। क्त्वाप्रत्ययस्य ईनम् अन्तादेशो निपात्यते। इष्ट्वीनं देवान्। इष्ट्वा इति प्राप्ते।

---

**शाङ्करी**–इदन्तो मसि – अन्तशब्दश्चरमावयवपरः। इत् इकार अन्तः – चरमावयवो यस्य स मस इदन्त मसि इति सम्पद्यते। तथा चायमर्थः संपद्यते मस् इत्ययं शब्दः इकारान्तो मसि इति भवति। अतो मसः सकारान्तस्य इकारागमो भवति स च तस्य – मसः चरमावयवो भवति। मूले मस इगागमः स्यादिति कथनं नोचितम् इकशब्देन प्रत्याहारभ्रमापत्तेः।

क्त्वो यक् – क्त्वा इत्यस्य यगागमः स्याच्छन्दसि। गमेः क्त्वा प्रत्यये अनुदात्तोपदेश इत्यादिना मकारलोपः क्त्वा इत्यस्य यगागमः अनुबन्धलोपः। इष्ट्वीनमिति च। यज् धातोः क्त्वा प्रत्ययः धातोः "वचिस्वपि यजादीनां किति" इत्यनेन सम्प्रसारणम् "सम्प्रसारणाच्च" इत्यनेन पूर्वरूपम् "व्रश्चभ्रस्जसृज०" इत्यादिना षत्वम् ष्टुत्वम् आकारस्येनमादेशः।

---

**तीर्था**- एमसि – आङुपसर्गपूर्वकात् गत्यर्थकात् इण्धातोर्लट् लकारः तस्य स्थाने उत्तमपुरुषबहुवचने मस्प्रत्ययः मध्ये शप् तस्य अदिप्रभृतिभ्यः शपः इत्यनेन लुकि आ इ मस इति स्थिते "आद्गुणः" इत्यनेन गुणे इदन्तो मसि इत्यनेन मस इकारागमे एमसि इति साधुः।

स्मसि – अस् धातोर्लट् लकारः तस्य स्थाने उत्तमपुरुषबहुवचने भस् प्रत्ययः मध्ये कृर्तरिशप् इत्यनेन शप् प्रत्ययः तस्य अदिप्रभृतिभ्यः शपः इत्यनेन लुकि अस् मस् इति स्थिते श्नसोरल्लोपः इत्यनेन धातोरकारस्य लोपे इदन्तो मसि इति सूत्रेण मसः इकारागमे स्मसि इति साधुः।

गत्वाय – गम् धातोः क्त्वा प्रत्ययः अनुबन्धलोपः क्त्वो यक् इत्यनेन क्त्वा इत्यस्य यगागमः अनुबन्धलोपः अनुदात्तोपदेश वनतितनोत्यादीनामनुनासकिलोपो झलि क्ङिति इत्यनेन यकारलोपे गत्वाय इति साधुः।

स्नात्व्यादयश्च। (७-१-४९)।

आदिशब्दः प्रकारार्थः। आकारस्य ईकारो निपात्यते। स्विन्नः स्नात्वी मलादिव। पीत्वी सोमस्य वावृधे। (ऋग्वेद ३-४०-७) स्नात्वा पीत्वा इति प्राप्ते।

आज्जसेरसुक्। (७-१-५०)

अवर्णान्तादङ्गात्परस्य जसोऽसुक् स्यात्। ऋग्वेद। देवासः। १-३६-४। ब्राह्मणासः। ऋग्वेद ६-७५-१०

श्रीग्रामण्योश्छन्दसि। (७-१-५६)। आमो नुट्। श्रीणामुदारो धरुणो रयीणाम्। सूतग्रामणीनाम्।

**शाङ्करी**- स्नात्वा इति आकारस्य ईकारो निपात्येत। स्नात्वी इति। एवमेव पीत्वी इत्यस्यापिः। पा पाने धातोः "समानकर्तृकयोः पूर्वकाले" इति सूत्रेण क्त्वाप्रत्यये

**तीर्था**- इष्ट्वीनम् - भ्वादिगणीय देवपूजनार्थकात् यज् धातोः "समानकर्तृकयोः पूर्वकाले" इत्वेन क्त्वा प्रत्ययः क्त्वा प्रत्ययस्य कित्वात् "वचिस्वपियजादीनां किति" इत्यनेन यकारस्य सम्प्रसारणे "सम्प्रसारणाच्च" इत्यनेन पूर्वरूपे च इज् त्वा इति स्थिते "व्रस्जभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यनेन जकारस्य षकारे ष्टुत्वेन इष्ट्वीनमिति च इति सूत्रेण आकारस्येनमादेशे इष्ट्वीनम् इति साधुः।

**विमर्श**- नमो भरन्त एमसि (ऋग्वेद १-१-७)

उप॑त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम्। नमो॒ भर॑न्त॒ एम॑सि॥

अर्थ - हे अग्नि हम प्रतिदिन और रात अन्तस्तल से नमस्कार करते हुए तुम्हारे पास आते हैं।

त्वमस्माकं तव स्मसि। (ऋग्वेद ८-९२-३२)

त्वयेदि॑न्द्र यु॒जा व॒यं प्रति॑ ब्रुवीमहि॒ स्पृधः॑। त्वम॒स्माकं॒ तव॑ स्मसि॥

अर्थ - हे इन्द्र तुम्हारी सहायता प्राप्त करके हम शत्रुओं को दूर करेंगे। तुम हमारे हो हम तुम्हारे हैं।

दिवं सुपर्णो गत्वाय। (ऋग्वेद ८-१००-८)

मनोजवा॒ अय॑मान आय॒सीम॑तर॒त्पुर॑म्॥

दिवं सु॒पर्णो॑ ग॒त्वाय॒ सोम॑ व॒ज्रिण॒ आभ॑रत्॥

अर्थ - हे मनके समान वेगवान् और गमनशील सुपर्ण (गरुण) हिरण्यमय नगर के पार गये। अनन्तर स्वर्ग में जाकर इन्द्र के लिये सोम ले आये।

**शाङ्करी**- पा इत्यस्य घुमास्थागापाजहातिसां हलि इति सूत्रेण ईकारादेशः त्वा इत्यस्याकारस्य ईकारो निपात्यते। आज्जसेरसुक् इति सूत्रे "क्त्वापि छन्दसि" (७-१-३८) इति सूत्रात् छन्दसि इत्यस्य अङ्गस्य (६-४-१) इति सूत्रात् अङ्गस्य अनुवृत्तिर्भवति अतः सूत्रार्थो जातः अवर्णान्तादङ्गात् परस्य जसोऽसुक् स्यादिति। देवासः देवशब्दाज्जसोऽसुक् आगमः देवासस इति स्थितौ सस्य रुत्व विसर्गे देवासः। एवमेव ब्राह्मणासः। श्री ग्रामण्योश्छन्दसि। (७-१-५६)। अत्र सूत्रे "ह्रस्वनद्यापो नुट्" इति सूत्रात् नुट् इति, "आमि सर्वनाम्नः सुट्" ७-१-५२ इति सूत्रात् आमि इत्यस्यानुवृत्तिर्भवति। अत्र सूत्रार्थो अनुवर्तमानः आमि इति षष्ठ्यन्ततया विपरिणम्यते। वेदे श्री ग्रामणी शब्दयोः आमो नुट् स्यात्। अतः श्रीणाम्। अस्य "वामि" इति नदीत्व विकल्पान्नदीत्वाभावे उदाहरणमिदं बोध्यम्। नदीत्वपक्षे तु "ह्रस्व नद्यापो नुट्" इत्यनेनैव नुट् सिद्धम्। सूतग्रामणीनाम्। सूताश्च ग्रामण्यश्चेतीतरेतरयोगद्वन्द्वः। सूतग्रामणी आम् इति स्थिते आमो नुटागमे सूतग्रामणीनाम् इति।

---

**तीर्था**- श्रीशब्दात् षष्ठ्याबहुवचने आम् विक्तौ 'वाऽऽमि' इति सूत्रेण श्रीशब्दस्य विकल्पेन नदीसंज्ञायां "ह्रस्वनद्यापो नुट्" इत्यनेन नुडागमे श्रीणाम् इति नदी संज्ञाया अभावपक्षे च "श्रीग्रामण्योश्छन्दसि" इत्यनेन नुडागमे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इत्यनेन णत्वे श्रीणाम् इति साधुः।

देवासः - देवशब्दात् प्रथमा बहुवचने जस् विभक्तिः अनुबन्धलोपः "आज्जसेरसुक्" इति सूत्रेण जस् विभक्तेरसुकागमः स च कित्वाज्जसः परः तत्रोकारककारयोरित्संज्ञालोपाभ्यां निवृत्तौ देव अस् अस् इति स्थिते द्वयोरकारयोः "प्रथमयोः पूर्वसवर्णः" इत्यनेन पूर्वसवर्णदीर्घे सस्य रुत्वे विसर्गे च देवासः। एवमेव ब्राह्मणासः इति।

सूतग्रामणीनाम्। सूताश्च ग्रामण्यश्च इतरेतरयोगद्वन्द्वः। सूतग्रामणीशब्दात् आम् विभक्तौ श्री ग्रामण्योश्छन्दसि इत्यनेन नुडागमे सूत ग्रामणीनाम् इति साधुः। यदा सूताश्च ग्रामण्यश्च इति विग्रहे समाहार द्वन्द्व स्वीक्रियते तदा "स नपुंसकम्" इत्यनेन नपुंसकत्वात् ह्रस्वो नपुंसके प्रातिपदिकस्येत्यनेन ह्रस्वे सूतग्रामणि च सूतग्रामणि च सूतग्रामणिच इत्यत्र एकशेषे सूतग्रामणि आम् इति स्थिते "ह्रस्वनद्यापो नुट्" इत्यनेन नुडागमे नामि इत्यनेन दीर्घे सूतग्रामणीनाम् इति साधुः।

---

**विमर्श**- दे॒वास॑स्त्वा॒ वरु॑णो मि॒त्रो अ॑र्य॒मा सन्दू॒तं प्र॒त्नमि॑न्धते।

विश्वं॒ सो अ॑ग्ने जयति॒ त्वया॒ धनं॒ यस्ते॑ द॒दाश॒ मर्त्यः॑॥ (ऋग्वेद १-३६-४)

अर्थ - हे अग्नि तुम देवताओं के पुराने दूत हो। इसलिए वरुण मित्र और

**विमर्श**– अर्यमा तुम्हें अच्छी तरह से प्रदीप्त करते है। जो मनुष्य तुम्हें हविष प्रदान करता है वह तुम्हारी सहायता से विश्व का सम्पूर्ण धन प्राप्त कर लेता है।

ब्राह्मणासः –

ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावा पृथिवी अनेहसा।
पूषा नः पातु दुरितादृता वृधो रक्षा माकिर्नो अघशंस ईशत॥
(ऋग्वेद ६-७५-१०)

अर्थ – हे ब्राह्मणों पितरों और यज्ञ के संवर्द्धक सोम सम्पादक तुम हमारी रक्षा करो। हे पाप रहित द्यावा पृथिवी तुम हमारे लिये सुखकारी होवो। पूषा हमें पाप से बचावें। हमारी पापी शत्रु हमारे उपर प्रभुत्व न कर पावे।

श्रीणामुदारो –

श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रापर्णः सोम गोपाः।
वसुः सूनुः सहसो अप्सु राजा विभात्यग्र उषसाभिधानः॥

अर्थ – प्रभात के प्रथमभाग में अग्नि अग्निहोत्र के लिये प्रज्वलि होते हैं तो उनकी शोभा अद्‌भुत होती है। वे अशेष सम्पत्तियों के आधार स्वरूप हैं। वे स्तोत्र वचनों को स्फूर्त एवं सोम रस की रक्षा करते हैं। वे धन स्वरूप हैं वे बल के पुत्र हैं वे जल के बीच में रहते हैं।

सूतग्रामणीनाम् –

तस्माद्यद्राजा संग्रामं जयत्यपि तत्र सूतग्रामणीनां गायत्र्या वै
त्रिविदा यतनवाँ स्त्रिष्टुभा पञ्चदशो जगत्येक विंशोऽथैषा॥
(काठकसंहिता २८-३) पृष्ठ २९

---

**भावार्थ**–श्रीग्रामण्योश्छन्दसि। (७-१-५६) भावार्थ – श्री ग्रामण्योः पद षष्ठी का द्विवचनान्त है। यहाँ षष्ठी सम्बन्ध अर्थ में है। इस सूत्र में "आमि सर्वनाम्नः सुट्" (७-१-५२) सूत्र से आमि पद की अनुवृत्ति हुई तथा वह षष्ट्यन्तत्वेन विपरिणमित हो गया तथा "ह्रस्वनद्यापो नुट्" (७-१-५४) सूत्र से नुट् पद की अनुवृत्ति हुई। अतः सूत्रार्थ हुआ श्री शब्द एवं ग्रामणी शब्द सम्बन्धी आम् को नुट् का आगम होता है छन्द में। लोक में आम् प्रत्यय के परे रहने पर स्त्रीलिङ्ग में विद्यमान दीर्घ ईकारान्त और ऊकारान्त शब्द की "वाऽऽमि" (१-४-५) सूत्र से विकल्प से नदी संज्ञा होती है। अतः श्रीणाम् श्रियाम् दो रूप होते हैं। अर्थात् नदी संज्ञा पक्ष में "ह्रस्वनद्यापो नुट्" (७-१-५४) सूत्र से नुडागम और अभाव पक्ष में 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' (६-४-७७) सूत्र से इकार को इयङ् आदेश होने पर श्रियाम् रूप

गोः पादान्ते। ७-१-५७

(क) विद्मा हि त्वा गोपतिं शूर गोनाम्। (ऋ०वे० १०-४७-१) पृ० १४२ हि पृ० ५

(ख) पादान्ते किम्? गवां शता पृक्षयामेषु। (ऋ० १-१२२-७)। पादान्तेऽपि क्वचिन्न छन्दसि सर्वेषां वैकल्पिकत्वात्।

(ग) विराजं गोपतिं गवाम्। (ऋ०वे० १-१६६-१) पृ० ४८९ भा ४

---

**शाङ्करी-** अत्र "आमि सर्वनाम्नः सुट्" (७-१-५२) इति सूत्रात् आमि पदमनुवर्तते तच्च षष्ठयन्तत्वेन विपरिणमते। गोः इति पञ्चम्यन्तम्। अतः ऋक्पादान्ते वर्तमानाद् गो इत्येतस्मादुत्तरस्यामो नुडागमः स्यादच्छन्दसि। पादान्ते किम्? गवां शता इत्यत्र गवाम् इति पादादौ विद्यते। अतो न नुडागमः।

---

**तीर्था-** गो शब्दात् षष्ठ्या बहुवचने आम् विभक्तौ "गोः पादान्ते" इति सूत्रेण आमो नुडागमेऽनुबन्धलोपे नुटः टित्वादामः पूर्वस्थितौ गोनाम् इति साधु। लोके तु नुडभावे गवामित्येव। छन्दसि सर्व विधीनां वैकल्पिकत्वात् विराजं गोपति गवां (ऋग्वेद १०-१६६-१) इत्यत्र नुट् न भवति।

---

निष्पन्न हुआ। वेद में नदी संज्ञा के अभाव पक्ष में भी "श्रीग्रामण्योश्छन्दसि" सूत्र से नुडागम होकर श्रीणाम् ग्रामणीनाम् ही रूप निष्पन्न होते हैं। नागेशभट्ट के मत में लोक की तरह वेद में "वाऽऽमि" इस सूत्र से नदी संज्ञा पक्ष में नुडागम में श्रीणाम् ही प्रयोग निष्पन्न होगा तथा छन्दसि दृष्टानुविधिः इस नियम के अनुसार इयङ् आदेश नहीं होने के कारण श्रियाम् प्रयोग नहीं होगा। सूत ग्रामणीनाम् भी सूतश्च ग्रामणीश्च इस विग्रह में समाहार द्वन्द्व समास करके सनपुंसकम् सूत्र से नंपुसक करके "ह्रस्वो नपुंसके प्रातिपदिकस्य" सूत्र से ह्रस्व होने पर "ह्रस्वनद्यापो नुट्" सूत्र से ही नित्य नुडागम हो जाएगा अतः इस सूत्र की कोई आवश्यकता नहीं है।

भाष्यकार के मत है कि "वाऽऽमि" सूत्र के विभाषा की वेद में व्यवस्थित विभाषा अर्थात् नदी संज्ञा जहाँ होगी वहाँ नित्य होगी। अतः उक्त श्रीणाम् में और सूतग्रामणीनाम् सूताश्च ग्रामण्यश्च में समाहार द्वन्द्व समास के पश्चात् ह्रस्व करके एक शेष होने पर "ह्रस्व नद्यापो नुट्" से नित्य नुडागम सिद्ध है इस सूत्र की कोई आवश्यकता नहीं है। हमारे मत में सूतग्रामणी शब्द से बहुवचनान्त का इतरेतर योग या कर्मधारय समास करेंगे तो ह्रस्वान्तता के अभाव पक्ष में नित्य नुडागम करने के लिये यह सूत्र आवश्यक है।

छन्दस्यपि दृश्यते। (७-१-७६)। अस्थ्यादीनामनङ्। इन्द्रो दधीचो अस्थभिः। ई च द्विवचने। ७-१-७७। अस्थ्यादीनामित्येव। अक्षीभ्यां ते नासिकाभ्याम्।

दृक्स्ववस्स्वतवसां छन्दसि। (७-१-८३)

एषां नुम् स्यात्सौ। कीदृङ्ङिन्द्रः। स्ववान्। स्वतवान्।

शाङ्करी-छन्दसि च इत्येव सिद्धे अपि दृश्यते इत्येतत्सामर्थ्यात् सर्वोपाधिव्यभिचारार्थम्। अत एव टादावचि इत्युक्तम् ततोऽन्यत्रापि इन्द्रो दधीचो अस्थभिः इत्यत्र अनजादावपि भिसि अनङ् दृश्यते। विभक्तावित्युक्तमविभक्तावपि दृश्यते यथा अस्थन्वन्तं यदनस्था विभर्ति। अस्थन्वन्तमित्यत्र अस्थिशब्दात् तदस्यास्त्यस्मिन्निति मतुप्। (५-२-९४) इति सूत्रेण मतुप्, अनो नुट् इति सूत्रेण मतुपो नुडागमः छन्दपि दृश्यते इति सूत्रेणानङि कृते नलोपः प्रातिपदिकान्तस्य इति सूत्रेण नङो नकारलोपः। ई च द्विवचने। द्विवचने परतश्छन्दसि विषये अस्थ्यादीनामीकारादेशो भवति। अत एव अक्षीभ्यां ते नासिकाभ्याम् इत्यत्र भ्यामिति द्विवचने परत ईकारादेशो भवति।

दृक् स्ववसिति- अत्र सावनडुहः (७-४-८२) इत्यतः सौ इति, आच्छीनद्योर्नुम्। (७-१-८०) इत्यतो नुमिति पदम्, अङ्गस्ये(६-४-१)ति सूत्रं चानुवर्तते। अतो दृक् स्ववस् स्वतवसां नुमागमो भवति सु प्रत्यये परे छन्दसि।

विमर्श-(क) जगृम्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम्।
विद्मा हित्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः।
(ऋग्वेद १०-४७-१) पृष्ठ १४२

अर्थ - अनेक धनों के स्वामी हे इन्द्र! धनाभिलाषी हम तुम्हारे दाहिने हाथ को पकड़ते हैं। शूर इन्द्र हम तुम्हें अनेक गौवों के स्वामी के रूप में जानते हैं। फलत तुम हमें अनेक प्रकार से वृद्धि को प्राप्त होने वाला धन दो।

(ख) स्तुषे सा वाँ वरुण मित्र रातिर्गवां शता पृक्षयामेषु प्रजे।
श्रुतरथे प्रियरथे दधानाः सद्यः पुष्टिं निरुन्धानासो अग्मन्॥ ऋग्वेद १-१२२-७ पृष्ठ ५५३ हिन्दी पृष्ठ ५

(ग) ऋषभं मा समानानां सपत्नानां विषासहिम्।
हन्तारं शत्रुणां कृधि विराजं गोपतिं गवाम्। (ऋग्वेद १०-१६६-१ पृष्ठ ४८९)

**शाङ्करी-** कीदृङ्ङिन्द्रः। किम् उपपदे दृश् धातोः "त्यदादिषुदृशोऽनालोचने कञ्च" इति सूत्रेण चात् क्विन् प्रत्ययः तस्य सर्वापहारलोपः (ककारस्य "लशक्वतद्धिते" इत्यनेन इकारस्य "उपदेशेऽजनुनासिक इत्" इत्यनेन नकारस्य "हलन्त्यम्" इत्यनेन वकारस्य "वेरपृक्तस्य" इत्यनेन)। "इदं किमोरीश्की" इत्यनेन किमः की आदेश अनेन सूत्रेण नुमागमः क़ीदृन्श्सु "सोर्हल्ङ्याब्भ्यो" इत्यादिना लोपः शकारस्य "संयोगान्तस्य लोपः" क्विन् प्रत्ययस्य कुः इत्यनेन नकारस्य ङकारः इन्द्रशब्देकारस्य ङुट्। स्ववान्। सुष्ठु अवो - रक्षणं यस्य सु उपसर्गात् अवतेरसुन् स्ववः शब्दात् प्रकृतसूत्रेण नुम् सान्तमहतः संयोगस्य इत्यनेनोपधा दीर्घः सस्य संयोगान्तलोपः तस्यासिद्धत्वान्नलोपो न। स्वतवान्। सौत्रः तु धातुः वृद्ध्यर्थः ततो असुन् स्वं तवो वृद्धिर्यस्येति विग्रहे सर्वधातुभ्योऽसुन् इत्युणादि सूत्रेण असुन् प्रकृत सूत्रेण नुम्।

---

**तीर्था-** **कीदृङ्ङिन्द्रः**। कीदृश दृश्यत इति विग्रहे किम् उपपदपूर्वकात् दृश्धातोः "त्यदादिषु दृशोऽनालोचने कञ्च" इत्यनेन क्विन् प्रत्ययः तस्य सर्वापहारी लोपः किम् दृश इति स्थिते इदङ्किमोरीश्की (६-३-९०) इत्यनेन किमः की आदेशः "दृक् स्ववस्स्वतवसां छन्दसि" इत्यनेन दृश् धातोर्नुमागमः अनुबन्धलोपः सुप्रत्यय परे कीदृन् श् स् इति स्थिते "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" इत्यनेन सकारलोपः शका संयोगान्तस्य लोपः इत्यनेन लोपे "क्विन्प्रत्ययस्य कुः" इत्यनेन नकारस्य कुत्वे कीदृङ् इन्द्र इति स्थिते "ङमो ह्रस्वादचि ङमुण नित्यम्" इत्यनेन अचो ङमुडागमे कीदृङ् ङिन्द्रः।

**स्ववान्-** सुष्ठु अवो रक्षणं यस्य इति विग्रहे स्ववस् शब्दात् प्रथमाया एकवचने सु विभक्तौ "दृकस्ववस्स्वतवसां छन्दसि" इति सूत्रेण नुमागमे स्ववन्स सु इति स्थिते "हल्ङ्याब्भ्यो दीर्घात्०" इत्यादि सूत्रेण सोः सकारस्य लोपः "संयोगान्तस्य लोपः" इत्यनेन संयोगान्त सकारस्य लोपः तस्यासिद्धत्वात् "नलोपः प्रातिपदिकान्तस्य" इत्यनेन नलोपाभावे "सान्तमहतः संयोगस्य" इत्यनेन उपधादीर्घे स्ववान् इति साधु।

**स्वतवान्-** स्वं तवो वृद्धिर्यस्य इति विग्रहे वृद्धयर्थकात् सौत्रतुधातोः "सर्वधातुभ्योऽसुन्" इत्यौणादिकसूत्रेण असुन् प्रत्यये अनुबन्धलोपे प्रत्ययस्यार्धधातुकत्वात् धातोरुकारस्य गुणेऽवादेशे स्वतवस् शब्दात् प्रथमा एकवचने सु प्रत्यये स्वतवस् सु इत्यत्र "दृकस्ववस्स्वतवसां छन्दसि" इत्यनेन नुमागमे स्वतवन् स् सु इति स्थिते सोः सकारस्य "हल्ङ्याब्भ्यो०" इत्यादिना लोपे सस्य "संयोगान्तस्य लोपः" तस्यासिद्धत्वात् "नलोपः प्रातिपदिकान्तस्य" इत्यनेन नलोपाभावे "सान्त महतः संयोगस्य" इत्यनेन उपधादीर्घे स्वतवान् इति साधु।

उदोष्ठ्यपूर्वस्य (७-१-१०२)

अङ्गावयवौष्ठ्यपूर्वो य ॠत तदन्तस्याङ्गस्य उत् स्यात्। पिपूर्तः।

बहुलं छन्दसि। (७-१-१०३) ततुरिः। ऋ०वे० १-१४५-३

दूरे ह्यध्वा जगुरिः पराचैः।

---

**शाङ्करी**- लोके उदोष्ठ्यपूर्वस्येति पूर्वसूत्रेण अङ्गावयव औष्ठ्यपूर्वको य ॠत तदन्तस्याङ्गस्य ॠकारस्य उत भवति, यथा पिपूर्त इत्यत्र। छन्दसि तु "बहुलं छन्दसि" इति सूत्र निर्देशात् बहुलस्य क्वचिदन्यदेवेत्यर्थमाश्रित्य अनोष्ठ्यपूर्वा तॄणामपि तॄप्रभृतिधातूनाम् ॠकाराणामुत्वं विधीयते। यथा ततुरिः इत्यादौ। अत्र भ्वादिगणपठित तॄधातोः आदृगमहन् जनः किकिनौ लिट् च इत्यनेन कि उत किन् प्रत्ययः धातोः "लिटिधातोरनभ्यासस्ये"त्यनेन पूर्वं द्वित्वं पूर्वस्याभ्यासादिकार्यं ततः ततॄ इ

---

**विमर्श**- कीदृङिन्द्रः सरमेका दृशीका यस्येदं दूतीरसरः पराकात्।

ऋग्वेद १०-१०८-३

अर्थ - सरमा नाम की इन्द्र की दूती पणि इत्यादि नाम के असुरों के पास गयी है। असुर पणि गण उससे पूछते हैं जिस इन्द्र की दूती बनकर इतनी दूर तुम आई हो वे इन्द्र कैसे हैं। उनका पराक्रम कितना है। उनकी सेना कैसी है, इन्द्र आवें उन्हें हम मित्र मानने के लिये प्रस्तुत हैं वे हमारी गायें लेकर उनके स्वामी बनें।

स्ववान् - ऋग्वेद १-३५-१०

हिरण्यहस्तो असुरः सुनीथः सुमृलीकः स्ववाँ यात्वर्वाङ्।

अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रति दोषं गृणानः॥ १-३५-१०

अर्थ - सुवर्णहस्त प्राणदाता सुनेता हर्षदाता और धनदाता सविता अभिमुख होकर आवें। वे देव राक्षसों और यातुधानों का निराकरण करके प्रतिरात्रि अस्तुति प्राप्त कर अवस्थित हैं।

यस्त इध्मं जभरत्सिष्विदानो मूर्धानं वा ततपते त्वाया।

भुवस्तस्य स्वतवाँ पायुरग्ने विश्वस्मात्सीमघायत उरुष्य॥

ऋग्वेद ४-२-६

अर्थ - हे अग्नि जो मनुष्य तुम्हारे लिये पसीने से युक्त होकर लकडियों को ढोता है जो तुम्हें प्राप्त की कामना से अपने मस्तक को काष्ठ भार से उतान करता है उसे तुम धनवान् बनाते हो, और उसका पालन करते हो। और जो कोई उसके अनिष्ट की कामना करता है उससे तुम उसकी रक्षा करते हो।

**शाङ्करी-** इत्यवस्थायां "बहुलं छन्दसि" इत्यनेन ऋकारस्योत्वं रपरत्वञ्च। सुबोधिनीकृद् व्याख्या पूर्वमुत्त्वं ततः स्थानिवद्भावेन रूपातिदेशे तृ इत्यस्य द्वित्वं तु नोचितं गौरवात्। तदुक्तं "द्विर्वचनेऽचि" इति सूत्रे तत्वबोधिन्याम् – आदेशमङ्गीकृत्य पुनः स्थानिरूपाश्रयणापेक्षया निषेधपरतया व्याख्यानमेव लघु, प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्, इति न्यायात्। निषेधपरतयेति – तृ धातोः कि उत किन् प्रत्यये तृ इ इति स्थिते "लिटिधातोरनभ्यासस्ये"(६-१-८)त्यनेन धातोः प्राप्तं द्वित्वं परत्वात् बाधित्वात् "इको यणचि" (६-१-७७) इत्यनेन यण् प्राप्तं तद् 'द्विर्वचनेऽचि' इत्यनेन निषिध्यते ततः तृ इत्यस्यैव द्वित्वे अभ्यासादिकार्यमिति।

---

**तीर्था-** ततुरिः – भ्वादिगणपठित प्लवन संतरणार्थकात् तृ धातोः "आदृगमहनजनः किकिनौ लिट् च" इत्यनेन कि उत किन् प्रत्ययः धातोः 'लिटिधातोरनभ्यासस्ये'त्यनेन द्वित्वं पूर्वतृ इत्यस्य 'पूर्वोऽभ्यासः' इत्यनेनाभ्यास संज्ञा ऋकारस्य 'उरत्' इत्यनेनात्वं 'उरण रपरः' इत्यनेन रपरत्वे 'हलादिः शेषः' इत्यनेनादिहल् शेषः ततृ इति स्थिते "बहुलं छन्दसि" इत्यनेन ऋकारस्योत्वं ततुरि इत्यस्य च "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे च ततुरिः इति साधुः।

जगुरिः – गृ धातोः "आदृगमहनजनः किकिनौ लिट् च" इत्यनेन कि उत् किन् प्रत्ययः धातोः "लिटि धातोरनभ्यासे"त्यनेन द्वित्वं पूर्व गृ इत्यस्य "पूर्वोऽभ्यासः" इत्यनेनाभ्याससंज्ञायाम् "उरत्" इत्यनेन ऋकारस्यात्वम् "उरण् रपरः" इत्यनेन रपरत्वे "हलादिः शेषः" इत्यनेन आदि हल् शेषे "कुहोश्चुः" इत्यनेनाभ्यासगकारस्य श्चुत्वेन जकार जगृ इ इति स्थिते "बहुलं छन्दसि" इत्यनेन ऋकारस्योत्वे रपरत्वे च जगुरि इत्यस्य "कृत्तद्धितसमासाश्चे" त्यनेन प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे च जगुरिः इति साधु।

---

**विमर्श-** ततुरिः –

तमिद्गच्छन्ति जुह्व १ स्तमर्वतीर्विश्वान्येकः शृणवद्वचांसि मे।
पुरु प्रैषस्ततुरिर्यज्ञ साधनोऽच्छिद्रोतिः शिशुरादत्त संरभः॥

ऋग्वेद १-१४६-३

अर्थ – विभिन्न देवताओं के उद्देश्य से सोम आदि की आहुतियाँ साक्षात् अग्नि को लक्ष्य करके दी जाती हैं। हमारे द्वारा की गयी स्तुतियाँ भी अग्नि को ही प्राप्त होती हैं। क्योंकि अग्नि सर्वदेव रूप हैं। वे बहुतों के प्रवर्तक तारयिता और यज्ञ के साधन हैं। उनकी रक्षा शक्ति छिद्र-व्यवधान रहित है। वह शिशुवों की तरह प्रिय और शत्रुओं को सन्तप्त करने वाला तथा यज्ञ के अधिष्ठाता हैं।

ह्रुह्वरेश्छन्दसि। (७-२-३१)

ह्वरेर्निष्ठायां ह्रु आदेशः स्यात्। अह्रुतमसि हविर्धानम्। वा०सं० १-९

अपरिह्वृताश्च। (७-२-३२)

पूर्वेण प्राप्तस्यादेशस्याभावो निपात्यते।

अपरिह्वृताः सनुयाम् वाजम्।

---

**शाङ्करी-** ह्रु ह्वरेरिति।

श्वीदितो निष्ठायामित्यतो (७-२-१४) निष्ठायामित्यनुवर्तते। अतो निष्ठाप्रत्यये परे ह्वृ धातोः ह्रु इत्यादेशश्छन्दसि। अह्रुतमिति। न ह्रुतम् अह्रुतम्। ह्रु कौटिल्ये धातोः क्तप्रत्यये ह्वरेः प्रकृत सूत्रेण ह्रु आदेशः। नञो ह्रुना सह समासः सामान्ये नपुंसकम् अह्रुतमिति। अपरिह्वृतेति। पूर्वसूत्रेण प्राप्तस्य ह्रु इत्यादेशस्याभावो निपात्यते। छन्दसिबहुवचनान्तस्यैव प्रयोग दर्शनादत्र बहुवचननिर्देशः। नञ् परि उपसर्ग पूर्वकात् ह्वृ धातोः क्त प्रत्यये ''ह्रु ह्वरेश्छन्दसि'' इत्यनेन प्राप्तस्य ह्रु इत्यादेशस्य प्रकृत सूत्रेणाभावो निपातितः।

---

**तीर्था-** अह्रुतम्। भ्वादिगणपठित कौटिल्यार्थकात् ह्वृ धातोः क्तप्रत्ययेऽनुबन्धलोपे ह्वृत इति स्थिते ''ह्रुह्वरेश्छन्दसि'' इति सूत्रेण ह्रु आदेशे ''नञ्'' इति सूत्रेण नञो ह्रुत इत्यस्य समासे ''कृत्तद्धितसमासाश्च'' इत्यनेन प्रातिपदिकत्वात् सौ ''सामान्ये नपुंसकम्'' इत्यनेन नपुंसके ''अतोऽम्'' इत्यनेन अम् आदेशेः अह्रुतमिति साधु।

अपरिह्वृता- नञ्परि उपसर्गपूर्वकात् ह्वृ धातोः क्तप्रत्यये ''ह्रु ह्वरेश्छन्दसि'' इत्यनेन धातोः ह्रु आदेशे प्राप्ते ''अपरिह्वृताश्च'' इत्यनेन तस्य निपातनात् निषेधे अपरिह्वृता इति साधु।

---

**विमर्श-** जगुरिः - किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः।
कास्मेहितिः का परितक्म्या सीत्कथं रसाया अतरः पयांसि।
(ऋग्वेद १०-१०८-१)

अर्थ - सरमा नाम की इन्द्र की दूती से पणि इत्यादि नाम के असुर पूछ रहे हैं हे सरमा तुम क्या किसी इच्छा से यहाँ आइ हो क्योंकि यह मार्ग बहुत दूर का है। इस मार्ग से आते समय पीछे की ओर दृष्टि डालने पर यहाँ कोई नहीं आ सकता। हमारे पास यहाँ कौन सी वस्तु है जिसके लिये तुम यहाँ आइ हो, और कितनी रातों में आइ हो, नदी के जल को कैसे पार की हो।

**विमर्श-** हु ह्वरेश्छन्दसि (७-२-३१)

अह्रुतमसि हविर्धानम्। (वाजसः संहिता १-९) पृष्ठ ८२-८४

(क) मन्त्रार्थ – हेशकट तुम अकुटिल हो, अर्थात् तुम पर आरोहण करने पर भी भङ्ग होने का भय नहीं है। तुम व्रीहिरूप हवि के धारक अथवा पोषक हो। अतः दृढ रहो। तुम पर आरोहण करने वाले यजमान के प्रति तुम सावधान रहो। तुम कुटिल (टेढ़े मेढ़े) मत होना। तुम्हारा यजमान भी कुटिल न हो। अध्वर्यु विष्णुस्त्वा क्रमताम् इस मन्त्र का उच्चारण करते हुए शकट के दक्षिण चक्र पर आरोहण करे। तदनन्तर शकट में रखे हुए यवों को अथवा व्रीहि को हवि के लिये उरु वाताय मन्त्र का उच्चारण करते हुए उनको देखे। यव अथवा व्रीहियों का अवलोकन हवि के संस्कारार्थ है। इसलिये हवि की प्रधानता और कर्म की गौणता है। और जहाँ व्रीहि यव आदि अनेक द्रव्य हों वहाँ संस्कार्य द्रव्यों की भिन्नता के कारण 'प्रतिप्रधानं गुणावृत्तिः' इस न्याय से जितने द्रव्य हों उनका पृथक्-पृथक् वीक्षण करे। उस वीक्षण का तृण लोष्ठ आदि यदि हों तो उन अप द्रव्यों को अपहतम् इस मन्त्र को बोलते हुए उनको उनमें से निकाल दे। यदि उनमें उपद्रव्य न हो तो ब्रीहि अथवा यवों का उक्त मन्त्र से स्पर्शमात्र कर ले।

अफ्रुतमसि हविर्द्धंषन्दृᳲह स्व मा ह्वार्मांते यज्ञपतिह्वार्षीत्

विष्णुंस्त्वा क्रमतामुरु वातायापं हतꣳरक्षो यच्छंन्तां पञ्च। वाजसेयि संहिता १-९। पृष्ठ ८२

अर्थ – हे शकट तुम अकुटिल हो, अर्थात् तुम पर आरोहण करने पर भी भङ्ग होने का भय नहीं है। तुम व्रीहिरूप हवि के धारक अथवा पोषक हो। अतः दृढ रहो। तुम पर आरोहण करने वाले यजमान के प्रति सावधान रहो। तुम कुटिल (टेढे मेढे) मत होना। तुम्हारा यजमान भी कुटिल न हो। अध्वर्यु विष्णुस्त्वाक्रमताम् मन्त्र कहते हुए शकट के दक्षिण चक्र पर आरोहण करे।

अपरिह्वृताः।

विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजम्।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥१-१००-१९ ॥ ऋग्वेद।

अर्थ – सभी कालों में वर्तमान इन्द्र हमारे पक्ष में बोल अमर (देवता लोग) भी। निश्छल भाव से हविरूप अन्न को अच्छी तरह से आपस में विभक्त कर उपभोग करें, और मित्र वरुण अदिति सिन्धु पृथिवी आकाश उन्हें पूजें।

सोमे ह्वरितः। (७-२-३३)

इड् गुणौ निपात्येते। मा नः सोमों ह्वरितः।

ग्रसित स्कभितस्त भितोत्तभित चत्तविकस्ताविशस्तृशंस्तृशास्तृ तरुतृतरूतृ वरुतृवरूतृवरूत्रीरुज्ज्वलिति क्षरिति वमित्यमितीति च। (७-२-३४) अष्टादश निपात्यन्ते। तत्र ग्रसु स्कम्भु स्तम्भु एषामुदित्वान्निष्ठायामिट्

---

शाङ्करी- सोमे वाच्ये ह्वृ धातोः क्त प्रत्यये परे निपातनात् त्रीणि कार्याणि छन्दसि क्रियन्ते। इड्गुणाविति – ह्वृ धातुः अनुदात्तोऽस्ति अतस्ततः परस्य क्त प्रत्ययस्य एकाच उपदेशेऽनुदात्तात् (७-२-१०)। इत्यनेन प्राप्त इडागम निषेधः अनेन सूत्रेण तदभावः इडागमो निपात्यते। अपि च क्त प्रत्ययस्य कित्वात् तस्मिन् परे धातोः ऋकारस्य क्ङिति च इत्यनेन गुणनिषेधे प्राप्ते तदभावो (गुणो) निपात्यते। ह्वृ धातोर्निष्ठाप्रत्यये परे "ह्रु ह्वरेश्छन्दसि" इत्यनेन ह्रु आदेशः प्राप्तस्तदभावोऽपि निपात्येत। अतो ह्वरित इति।

हिन्दी में – सोम वाच्य रहने पर ह्वृ धातु से क्त प्रत्यय पर में हो तो ह्रु ह्वरेश्छन्दसि" सूत्र से ह्वृ धातु के स्थान में ह्रु आदेश प्राप्त है किन्तु सोमवाच्य रहने पर इसका इस सूत्र से निषेध होता है, तथा ह्वृ धातु अनुदात्त है अतः इससे पर में क्त प्रत्यय को एकाच उपदेशेऽनुदात्तात् सूत्र से इडागम का निषेध प्राप्त है इसका अभाव अर्थात् इडागम इस सूत्र से निपातनात् होता है। इसी प्रकार से ह्वृ धातु के ऋकार को "सार्वधातुकार्धधातुकयोः" इस सूत्र से गुण प्राप्त था किन्तु क्त प्रत्यय के कित् होने से "क्ङिति च" इस सूत्र से निषेध हो गया किन्तु इस सूत्र से पुनः निपातनात् गुण हुआ।

---

तीर्था- ह्वरित। भ्वादिगणपठित कौटिल्यार्थकात् ह्वृ धातोः क्तप्रत्ययः अनुबन्धलोपः निष्ठाक्तप्रत्यये परे धातो "ह्रुह्वरेश्छन्दसि" इति सूत्रेण ह्रु आदेशः प्राप्तः "सोमे वाच्ये सोमे ह्वरितः" इति सूत्रेण निपातनात् तस्य निषेधः। अपि च ह्वृ धातु अनुदात्तोऽस्ति अतः ततः परस्य क्तप्रत्ययस्य प्राप्त इडागमस्य "एकाच उपदेशेऽनुदात्तात्" इत्यनेन निषेधे पुनः प्रकृतसूत्रेण निपातनात् इडागमे, तथा च धातोः परस्य क्तप्रत्ययस्य कित्वात् तस्मिन् परे ह्वृ घटकऋकारस्य "सार्वधातुकार्धधातुकयोः" इत्यनेन प्राप्त गुणस्य "क्ङिति च" इत्यनेन निषेधे सोमे ह्वरित इति सूत्रेण निपातनात् गुणे ह्वरित इत्यस्य कृदन्तत्वात् "कृत्तद्धिसमासाश्च" इत्यनेन प्रातिपदिक संज्ञायां सौ उकारस्येत्संज्ञालोपाभ्यामपहारे सस्य रुत्वे विसर्गे च ह्वरित इति साधु।

प्रतिषेधे प्राप्ते इण्निपात्यते। युवं शचीभिर्ग्रसितामंमुञ्चतम्। ऋग्वेद (१०-३९-१३) विष्कंभिते अजरे। ऋग्वेद (६-७०-१)। येन स्वः स्तभितम्। (ऋग्वेद १०-१२१-५)। सत्येनोत्तभिता भूमिः। (ऋग्वेद १०-८५-१)। स्तभितेत्येव सिद्धे उत्पूर्वस्य पुनर्निपातनमन्योपसर्गपूर्वस्य मा भूदिति। चते याचने। कस गतौ आभ्यांक्तस्येडभावः। चत्तो इतश्चत्तामुतः (ऋग्वेद १०-१५५-२)। त्रिधा ह श्यावमश्विना विकस्तम् (ऋग्वेद १-११७-२४)। उत्तानाया हृदयं यद्विकस्तम्। निपातनं बहुत्वापेक्षं सूत्रे बहुवचनं विकस्ता इति तेनैकवचनान्तोऽपि प्रयोगः साधुरेव। शसु शंशु शासु एभ्यस्तृच इडभावः। एकस्त्वष्टुरश्वस्याविशस्ता। (ऋग्वेद १-१६२-१९)। ग्राव ग्राभ उता शस्ता। (ऋग्वेद १-१६२-५)। प्रशास्ता पोता ऋग्वेद (१-९४-६)। तरतेर्वृङ्वृञोश्च तृच उट् ऊट् एतावागमौ निपात्येते। तरुतारं (ऋग्वेद १०-१७८-१) रथानाम्। तरूतारम्। वरुतारं वरूतारम्। वरूत्रीभिः मैत्रायणी सं २-७-६-१६९ सुशरणो नों अस्तु। अत्र ङीबन्त निपातनं प्रपञ्चार्थम्। वरूतृशब्दो हि निपातितः। ततो ङीपा गतार्थत्वात्। उज्ज्वलादिभ्यश्चतुर्भ्यः शप इकारादेशो निपात्यते। ज्वलदीप्तौ। क्षर संचलने। टुवम् उद्गिरणे। अम् गत्यादिषु। इह क्षरितीत्यस्यानन्तरं क्षमितीत्यपि केचित् पठन्ति। तत्र क्षमूष् सहने इति धातुर्बोध्यः। भाषायां तु ग्रस्त स्कब्धस्तब्धोत्तब्धचतितविकसिताः। विशसिताः। शंसिता। शसिता। तरीता। तरिता। वरीता। वरिता। उज्जवलिति। क्षरति। पाठान्तरे क्षमति। वमति। अमति।

---

**शाङ्करी**- ग्रसु अदने, यस्य विभाषा (७-२-१५) इति सूत्रेण इट् निषेधः सिद्धान्तस्य इणनिपात्यते अत आह ग्रसित। क्रमेण चैतेषामुदाहरणानि - युवं शचीभिर्ग्रसिताभमुञ्चतम् (ऋग्वेद १०-३९-१३) इत्युद्धृतम्, विष्कभिते अजरे (ऋग्वेद ६-७०-१)। येन स्वः स्तभितम् (ऋग्वेद १०-१२१-५) एवमेव स्कन्भु स्तन्भु रोधानार्थो सौत्रौ स्तन्भु स्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च'' इति सूत्रस्थौ धातू एतयो रपि उदित्वात् क्त्वा प्रत्ययस्य ''उदितो वा'' (७-३-५६) इत्यनेन इड् विकल्पेन विहितः इति तस्य ''यस्य विभाषा'' (७-२-१५) इत्यनेनेणनिषेधे-ऽनेनेणनिपात्यते। एवमेव स्कन्भु स्तन्भुरोधनार्थौ ''स्तन्भुस्तुन्भुस्कन्भुस्कन्भुस्कुञ्भ्यः

शाङ्करी- श्रुश्च''।(३-१-८२) इति सूत्रस्थौ उदितौ च एताभ्यां परस्य क्त्वा प्रत्ययस्य ''उदितो वा'' (७-२-५६) इत्यनेन विकल्पेन इडागमः विहितः अतस्तस्य ''यस्य विभाषा'' (७-२-१५) इति सूत्रेणेडागमस्य निषेधः तस्य इडागमो निपात्यते। चते याचने इति भ्वादिगणपठितस्वरितेत् सेट्धातुस्ततः परस्य कस्येड्भावोनिपातितः। तथोक्तस्योदाहरणम् (चत्तो इतश्चत्तामुतः (१०-१५५-२ ऋग्वेद) लोके चतितः। एवमेव कसगतौ इति धातुः भ्वादिगणपठित सेट्। ततोऽपि कतस्येडभावो निपातितः। तथा चोदाहरणम् - त्रिधा श्यावमश्विना विकस्तम् (ऋग्वेद १-११७-२४)।

विकसितम् इति लोके। सूत्रे विकस्ता इति बहुवचनान्त पाठः प्रयोगबहुत्वापेक्षो न तु बहुवचनान्ते आग्रहः। तेन प्रकृतोदाहरणे विकस्तमिति एकवचनान्त प्रयोगः साधुरेव। अश्वस्याविशस्ता। वि उपसर्गपूर्वाद् भ्वादिगणपठित हिंसार्थकात् शसुधातोस्तृच् प्रत्ययः तस्येऽभावो निपातितः। अश्वस्या इत्यत्र अन्येषामपि दृश्यते (६-३-१३७) इत्यनेन दीर्घः। उदाहरणञ्च - एकस्त्वष्टुरश्वस्या विशस्ता (ऋग्वेद (१-१६२-१९)। विशसिता इति लोके। ग्राव ग्राभ उत शंस्ता। शंसिता इति लोके। भ्वादिगणपठित स्तुत्यर्थकात् शंसु धातोस्तृच् प्रत्ययः तस्येडभावो निपात्यते। प्रशास्ता पोता (ऋग्वेद १-६४-६)। भ्वादिगण पठितानुशासनार्थकात् प्रोपसर्गपूर्वकात् शासु धातोस्तृच् प्रत्ययः तस्येडभावो निपात्यते। प्रशासिता इति लोके। तरुतारम् - प्लवन तरणार्थकात् सेट् तृधातोः तृचि तस्य प्राप्त इडागमं बाधित्वा प्रकृत सूत्रेण निपातनात् उडागमे तस्य टित्वात् आदौ स्थिते तरुतारम्। ऊडागमे तरुतारम्। क्र्यादिगणपठित वृङ् संभक्तौ धातोः, स्वादिगणपठित वृञ् वरणे धातोः उडागमे वरुतारम्, ऊडागमे वरूतारम्। ततो ऋन्नेभ्यो ङीप् इति ङीप् वरूत्रीभिः। उज्ज्वलादिभ्य इति। भ्वादिगणपठित दीप्त्यर्थक ज्वल्धातोर्लटि, तिपि शपि च शप् इकारादेशो निपात्यते। एवमेव क्षरसंचलने (टुवम् उद्गिरणे, भ्वादिगणपठित गत्याद्यर्थकात् अम् धातोरपि। उज्ज्वलिति, क्षरिति, वमिति, अमिति। चतूर्णां शपोऽकारस्येत्वेन सिद्धिरिति।

---

तीर्था- १. ग्रसिताम् - भ्वादिगणपठितादनार्थकात् ग्रसुधातोरुकारस्येत्संज्ञायां ततो ''निष्ठा'' सूत्रेण क्तप्रत्ययः अनुबन्धलोपे तकारस्य ''आर्धधातुकस्येड्वलादेः'' इत्यनेनेडागमे प्राप्ते तस्य ''उदितो वा'' (७-२-५६) इत्यनेन विकल्पेनेडागमे प्राप्ते ''यस्य विभाषा'' (७-२-१५) इत्यनेन निषेधे ''ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता-विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिवमित्यमितीति च'' इति सूत्रेण निपातनादिडागमे स्त्रीत्वविवक्षायां टापि। द्वितीयाया एकवचने ग्रसिताम् इति।

**तीर्था– २. विष्कभिते** – विउपसर्गपूर्वकात् रोधनार्थक सौत्र स्कम्भुधातोः उपधानकारस्य ''अनिदितां हल उपधायाः क्ङिति'' इत्यनेनेत्संज्ञा लोपे ततो निष्ठा सूत्रेण क्तप्रत्ययः अनुबन्धलोपः तकारस्य ''आर्धधातुकस्येड्वलादेः'' इत्यनेनेडागमे प्राप्ते ''उदितो वा'' इत्यनेन विकल्पेनेडागमे प्राप्ते ''यस्य विभाषा'' इत्यनेन निषेधे ''ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूह–वरुत्रीरुज्ज्वलिति क्षरितिक्षमितिवमित्यमितितीति च'' इत्यनेन निपातनादिडागमे कृदन्तात्वात् ''कृत्तद्धितसमासाश्च'' इत्यनेन प्रातिपदिकत्वात् सप्तम्याः एकवचने ङि विभक्तौ अनुबन्धलोपे ''आदेशप्रत्यययोः'' इत्यनेन सकारस्य षत्वे विष्कभिते इति साधु।

**३. स्तभितम्।** रोधनार्थकसौत्र स्तन्भुधातोरुकारस्येत्संज्ञायां ततो निष्ठासूत्रेण क्तप्रत्ययः अनुबन्धलोपः उपधानकारस्य ''अनिदितां हल उपधायाः क्ङिति'' इत्यनेन लोपे तकारस्य आर्धधातुकस्येड्वलादेः इतयनेनेडागमे प्राप्ते तं प्रबाध्य ''उदितो वा'' इत्यनेन विकल्पेनेडागमे प्राप्ते यस्य विभाषा इत्यनेन निषेधे ''ग्रसित स्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृचरूतृवरूत्री–रुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च'' इत्यनेन निपातनादिडागमे कृदन्तत्वात् ''कृत्तद्धितसमासाश्च'' इत्यनेन प्रातिपदिकत्वात् सौ क्लीवत्व विवक्षायां तस्य ''अतोऽम्'' इत्यनेनामादेशे ''अमिपूर्वः'' इत्यनेन पूर्वरूपे स्तभितम् इति। एवमेव उत् उपसर्गपूर्वात् सौत्र तन्भु धातोः उत्तभिता इति।

**४. उत्तभिता।** उत् उपसर्गपूर्वकात् रोधनार्थकात् सौत्र स्तन्भुधातोः निष्ठासूत्रेण क्तप्रत्ययः अनुबन्धलोपः उपधानकारस्य ''अनिदितां हल उपधायाः क्ङिति'' इत्यनेन लोपे उत् स्तभ् त इति स्थिते तकारस्य ''ग्रसित स्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृचरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च'' इत्यनेन निपातनादिडागमे सकारस्य ''उदः स्थास्तम्भो पूर्वस्य'' इत्यनेन पूर्वसवर्णेन थकारः तस्य ''झरो झरि सवर्णे'' इत्यनेन लोपे स्त्रीत्वविवक्षायां टापि उत्तभिता इति।

**५. चत्तो इति –**

भ्वादिगणपठित याचनार्थकात् सेट् चते धातोः ''उपदेशेऽजनुनासिक इत्'' इत्यनेन एकारस्येत्संज्ञायां ''निष्ठा'' इति सूत्रेण क्त प्रत्ययऽनुबन्धलोपः तस्य ''आर्धधातुकस्येड्वलादेः'' इत्यनेनेडागमे प्राप्ते ''ग्रसित स्कभितस्तभि–तोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृचरूतृवरूत्रीरुज्ज्वलिति–

**तीर्था**- क्षरितिक्षमितिवमित्यमितीति च'' इति सूत्रेण निपातनात् इडभावे कृदन्तत्वात् ''कृत्तद्धितसमासाश्च'' इत्यनेन प्रातिपदिकत्वात् सौ तस्य ''ससजुषो रुः'' इत्यनेन रुत्वे चत्ते उत्वे गुणे च चत्तो इति। लोके चतित इति।

**६. विकस्ता - विकस्तम् -**

अदादिगणपठित वि उपसर्गपूर्वकाद्गत्यर्थकात् सेट् कस् धातोः ''निष्ठा'' इति सूत्रेण क्त प्रत्ययऽनुबन्धलोपः तकारस्य ''आर्धधातुकस्येड्वलादेः'' इत्यनेनेडागमे प्राप्ते ''ग्रसित स्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृव-रुतृचरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च'' इत्यनेन निपातनादिडभावे कृदन्तत्वात् ''कृत्तद्धितसमासाश्च'' इत्यनेन प्रातिपदिकसंज्ञायां प्रथमाया बहुवचने जस् विभक्तौ ''चुटू'' इत्यनेन जकारस्येत्सञ्ज्ञायां विकस्त अस् इति स्थितौ ''प्रथमयोः पूर्वसवर्णः'' इत्यनेन पूर्वसवर्णदीर्घे विकस्ताः इति। लोके विकसिताः इति।

नपुंसकलिङ्गे एकवचने विकस्तम्- सुविभक्तेः ''अतोऽम्'' इत्यनेन अमादेशः ''अमिपूर्वः'' इत्यनेन पूर्वरुपम्। इडागमे विकसितम्।

**७. विशस्ता -**

वि उपसर्गपूर्वकात् भ्वादिगणपठित हिंसार्थकशसुधातोः उकारस्येत्संज्ञायां ''ण्वुलतृचौ'' इत्यनेन कर्तरि तृच् प्रत्ययः चकारस्य ''हलन्त्यम्'' इत्यनेन इत्संज्ञा विशस् तृ इत्यस्मात् सु प्रत्यय ऋकारस्य ''ऋदुशनस्पुरुदंसोऽनेहसां च'' इत्यनेन अनङ् आदेशो विशस् तन् स् इति स्थिते ''असृन्तृच्स्वसृनसृनेष्टृत्वष्टृक्षतृ होतृपोतृप्रशास्तृणाम्'' इत्यनेनोपधाऽकारस्य दीर्घे तृचः आर्धधातुकत्वात् ''आर्धधातुकस्येड्वलादेः'' इत्यनेनेडागमे प्राप्ते ''ग्रसित स्कभितस्तभितोत्तभित-चत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृचरूतृवरूत्रीरुज्ज्वलितिक्षरिति-क्षमितिवमित्यमितीति च'' इत्यनेन निपातनात् निषेधे सकारस्य ''हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्'' इत्यनेन लोपः, नकारस्य ''नलोपः प्रातिपदिकान्तस्य'' इत्यनेन लोपे च विशस्ता इति।

८. शंस्ता।

एवमेव भ्वादिगणपठित सेट् स्तुत्यर्थकशंसुधातोः उकारस्येत्संज्ञायां तृचि निपातनादिडभावे शंस्ता।

९. प्रशास्ता - अदादिगणपठितसेट् अनुशिष्टार्थकशासुधातोः उकारस्येत्संज्ञायां तृचि निपातनादिडभावे प्रशास्ता इति।

१०. तरुतारम् - भ्वादिगणपठितप्लवनसंतरणार्थकात् सेट् तृधातोः ण्वुल्तृचौ

**तीर्था**- इत्यनेन तृचि अनुबन्धलोपे तृ तृ इति स्थिते तृच् "आर्धधातुकं शेषः" इत्यनेन आर्धधातुकसंज्ञायाम् "आर्धधातुकस्येड्वलादेः" इत्यनेनेडागमेप्राप्ते तं प्रबाध्य "ग्रसित स्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृव-रूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च" इत्यनेन निपातनात् इडागमाभावे अनुबन्धलोपे धातोः ऋकारस्य "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे रपरत्वे च तरु तृ इत्यस्य कृदन्तत्वात् "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञायां द्वितीयाया एकवचने अम् प्रत्ययः तृच् प्रत्यय ऋकारस्य "ऋतो ङिसर्वनामस्थानयोः" इत्यनेन गुणे रपरत्वे च तरुतर् अम् इति स्थिते "अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृ-पोतृप्रशास्तृणाम्" इत्यनेन उपधाऽकारस्य दीर्घे तरुतारम् इति।

११. तरूतराम् – एवमेव – तृधातोः तृचि इडागमं वाधित्वा ऊडागमे उपधादीर्घे तरूतराम् इति।

१२. वरुतार – इत्यत्र च क्र्यादिगणपठित वृङ् संभक्तौ धातोः, स्वादिगणपठित वृञ् वरणे धातोर्वा तृचि तस्य इडागमं प्रबाध्य उडागमे।

१३. वरुतारम् – ऊडागमे च वरूतारमिति च।

१४. वरूत्रीः – वृङ् धातोर्वृञ् धातोर्वा तृचि ऊडागमे वरूतृ इत्यस्य स्त्रीत्वविवक्षायां "ऋन्नेभ्यो ङीप्" इत्यनेन ङीपि अनुबन्धलोपे "इको यणचि" इत्यनेन ऋकारस्य यणि वरूत्री इत्यस्मात् प्रथमाया बहुवचने जस् प्रत्ययेऽनुबन्धलोपे "वा छन्दसि" इत्यनेन पूर्वसवर्णदीर्घे रुत्वे विसर्गे च वरूत्रीः इति।

तृतीयाया बहुवचने वरूत्रीभिः इति।

१५. उज्ज्वलिति – उत् उपसर्गपूर्वकात् भ्वादिगणपठित सेट् दीप्त्यर्थकज्वलधातोर्वर्तमाने लट् इत्यनेन लट् तस्य "तिप्तस्झि...." इत्यादिना तिबादेशे तस्य तिङ्शित्सार्वधातुकम् इत्यनेन सार्वधातुकसंज्ञायाम् "कर्तरि शप्" इत्यनेन शप् तस्य "ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृ-शंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च" इत्यनेन निपातनात् इकारादेशः "स्तोः श्चुना श्चुः" इत्यनेन चकारः तस्य झलां जश् झशि इत्यनेन जश्त्वे उज्ज्वलिति इति।

१६. क्षरिति – भ्वादिगणपठितसंचरणार्थक सेट् क्षर् धातोर्लट् तस्य स्थाने "तिप्तस्झि...." इत्यादिना प्रथमपुरुषैकवचने तिबादेशेऽनुबन्धलोपे तस्य "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायाम् "कर्तरि शप्" इत्यनेन शप् तस्य "ग्रसितस्कभित०" इत्यादिना निपातनात् इकारादेशः क्षरिति इति।

**तीर्था**- १७. वामिति - भ्वादिगणपठित सेट् उद्गिरणार्थक (टु) वम् धातोर्लट् तस्य स्थाने "तिसस्झि...." इत्यादिना प्रथमपुरुषैकवचने तिबादेशेऽनुबन्धलोपे तस्य "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायाम् "कर्तरि शप्" इत्यनेन शप् तस्य "ग्रसितस्कभित०" इत्यादिना निपातनात् इकारादेशः वामिति इति।

१८. अमिति - भ्वादिगणपठित सेट् गत्याद्यर्थक अम् धातोर्वर्तमाने लट् इत्यनेन लट् तस्य स्थाने "तिसस्झि...." इत्यादिना प्रथमपुरुषैकवचने तिबादेशेऽनुबन्धलोपे तस्य "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायाम् "कर्तरि शप्" इत्यनेन शपि अनुबन्धलोपः अकारस्य "ग्रसितस्कभित०" इत्यादिना निपातनात् इकारादेशः अमिति इति।

---

**विमर्श**- (क)१. ग्रसितम् - (मैत्रायणी संहिता (३-७-४) पृष्ठ २६१

ग्रसितश्वा एतत् सोमस्य यदापन्नम्, ग्रसितमेते सोमस्य निष्खिदन्ति ये सोम विचिन्वन्ति, तस्मात् सोमविक्रयिणो बहु क्रीणन्तो बहुविन्दमानाः क्षोधुकाः......

(ख)१ ग्रसिताम् (ऋग्वेद १०-३९-१३)

तावर्तियातं जयुषा विपर्वतमपिन्वतं शयवे धेनुमश्विना।
वृकस्य चिद्वर्तिकामन्तरास्याद्युवं शचीभिर्ग्रसितामंमुञ्चतम्॥

अर्थ - हे दोनों अश्विनीकुमारों! तुम लोग उसी रथ पर चढ़कर पर्वत की ओर जाने वाले मार्ग पर गमन करो और सयुनामक मनुष्य की बूढ़ी गाय को फिर दूध वाली बना दो तुम्हारे में ऐसी क्षमता है क्योंकि तुमने तेंदुए के मुख से गिरे हुए वर्तिका (चटका) पक्षी को निकालकर उद्धार किया था।

(क)२ विष्कम्भिते अजरे (ऋग्वेद ६-७०-१) हिन्दी पृष्ठ ३७-३८

घृतवती भुवनानामभिश्रियोवर्ती पृथ्वी मधुदुघे सुपेशसा।
द्यावापृथिवी वरुणस्य धर्मणा विष्कगिते अजरे भूरिरेतसा॥

अर्थ - हे द्यावापृथिवी तुम जलवती भूतों के आश्रय स्थल विस्तीर्णा प्रसिद्धा जलदोहनकर्त्री सुरूपा वरुण के धारण द्वारा पृथक् रूप से धारिता नित्या और बहुकर्मा हो।

(ख)२ स्कभितः। (ऋग्वेद १०-१४९-२)

यत्रा समुद्रः स्कभितो व्यौनदपान्नपात्सविता तस्य वेद।
अतो भूरत आ उत्थितं रजोऽतो द्यावापृथिवी अप्रथेताम्॥

अर्थ - जिस स्थान पर रहकर समुद्र के समान मेघराशि पृथिवी को आर्द्र करती है उस स्थान को जल पुत्र सविता जानते हैं। सविता से ही पृथिवी आकाश

**विमर्श**– और द्यावा पृथिवी विस्तीर्ण हुये हैं।

(३) स्तभितम्। (ऋग्वेद १०-१२१-५)

येन द्यौरुग्रा पृथिवी च दृह्ला येन स्वः स्तभितं येन नाकः।

यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम॥

अर्थ – जिन्होंने इस उन्नत आकाश और पृथिवी को अपने अपने स्थानों पर दृढतापूर्वक स्थापित किया है, जिन्होंने स्वर्ग और आदित्य को रोक रखा है और जो अन्तरिक्ष में जल के निर्माता हैं उसका नाम वाले प्रजापति देवता की हविष के द्वारा पूजा करें।

४. उत्तभिता (ऋग्वेद १०-८५-१)

सत्यनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः

ऋतेनादित्यस्तिष्ठन्ति दिवि सोमो अधिश्रितः।

अर्थ– देवताओं में ब्रह्मा सत्यरूप हैं और वे ही पृथिवी को आकाश में रोक रखे हैं। अथवा सत्यरूप धर्म के द्वारा ही भूमि धृत अवस्थित है। सूर्य ने ही आकाश एवं स्वर्ग को अपने स्थान पर स्तम्भित अवस्थित कर रखा है। यज्ञ की आहुति से ही सूर्य आदि देवता अवस्थित हैं। द्युलोक में अर्थात् स्वर्ग में देवतारूप एवं औषधिरूप सोम अवस्थित हैं।

५. चतः (ऋग्वेद १०-१५५-२)

चत्तो इतश्चत्तामुतः सर्वाभ्रूणान्यारुषी।

अराय्यं ब्रह्मणस्पते तीक्ष्णं शृङ्गो दृषन्निहि।

अर्थ – हे पूर्व में चर्चित अलक्ष्मी (दरिद्रा देवी तुम वृक्ष लता शस्य आदि अङ्कुरों को नष्ट करके दुर्भिक्ष ले आती हो। तीक्ष्ण तेजवाले ब्रह्मणस्पति दान विरोधिनी इस अलक्ष्मी को यहाँ से दूर करके यहाँ आओ।

(क)६. विकस्तम् (ऋग्वेद १-११७-२४)

हिरण्यहस्तमश्विना रराणा पुत्रं नरावध्रिमत्या अदत्तम्।

त्रिधा ह श्यावमश्विना विकस्तमुज्जीवस ऐरयतं सुदान्॥

अर्थ – हे दानशील नेता अश्विद्वय (दोनों अश्विनीकुमार) तुम ने वध्रिमती को हिरण्यहस्त नाम का पुत्र दिया था। दानशील अश्विद्वय तुमने तीन भागों में विभक्त श्याव ऋषि को जीवित किया था।

(ख)६. पुनरपि (मैत्रायणी संहिता २-७-४-४६)

सं ते वायुर्मातरिश्वा दधतूत्तानाया हृदयं यद्विकस्तम्।

**विमर्श-** यों देवानां चरसि प्राणथेन कस्मै देववषडस्तु तुभ्यम्॥

७. विशस्ता (ऋग्वेद १-१६२-१९) हिन्दी पृष्ठ २४४

एकस्त्वष्टुरश्वस्या विशस्ता द्वायन्तारा भवतस्तथ ऋतुः।
या ते गात्राणामृतुथा कृणोमि ताता पिण्डानां प्रजुहोम्यग्नौ॥

अर्थ - तेजः पुञ्ज कालात्मा रूप अश्व का ऋतु ही एकमात्र विशासक विभाग करने वाला है। उन्हें दो दिन और रात धारण करते हैं। अश्व तुम्हारे शरीर के जिन अवयवों को यथा समय काटता हूँ उन का पिण्ड बनाकर अग्नि को प्रदान करता हूँ।

८. शंस्ता (ऋग्वेद १-१६२-५) हि०पृ० २३७। (शोभनमेघोपेत ब्रह्मा)

होताध्वर्युरावया अग्निमिन्धो ग्राव ग्राभं उत शंस्ता सुविप्रः।
तेन यज्ञेन स्वरं कृतेन स्विष्टेन वक्षणा आपृणध्वम्॥

अर्थ - होता (देवों को बुलाने वाले) अध्वर्यु (यज्ञ के नेता) आवया (हव्यदाता) अग्निमिन्ध (अग्नि को प्रदीप्त करने वाला) ग्रावग्राम (प्रस्तरद्वारा सोमरस निकालने वाला) शंस्ता (नियमानुसार कर्म का अनुष्ठान करने वाला) और ब्रह्मा (सभी यज्ञकार्यों के प्रधान सम्पादक) प्रसिद्ध, अलंकृत और सुन्दर यज्ञ द्वारा नदियों को पूर्ण करें।

९. प्रशास्ता (प्रकर्षेण शिक्षकः)

त्वमध्वर्युरुत होतासिपूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः।
विश्वा विद्वाँ आर्त्विज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव॥

ऋग्वेद १-९४-६ हिन्दी ७१६

अर्थ - हे अग्नि तुम अध्वर्यु, मुख्यहोता, प्रशास्ता, पोता और जन्म से ही पुरोहित हो। ऋत्विक् के सारे कार्यों से तुम अवगत हो। इसलिए तुम यज्ञ सम्पूर्ण करो। अग्नि तुम्हारे मित्र रहने पर हम हिंसित नहीं होंगे।

(१०-११) तरुतारम् - तरूतारम्

तरुतारं। (संग्रामे जेतारम्)। स्थानाम्।
त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम्।
अरिष्टनेमि पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम॥

ऋग्वेद १०-१७८-१ हिन्दी पृष्ठ ६७८

अर्थ - जो तार्क्ष्यपक्षी (गरुड) बलवान् है, जिसे देवों ने सोम लाने के लिए भेजा था, जो विपक्षी विजयी शत्रुओं के रथों का जेता है, जिसके रथ का कोई

**विमर्श-** ध्वंस नहीं कर सकता, और जो सैनिकों को युद्ध में प्रेरित करता है उसी को हम मंगल की कामना से बुलाते हैं।

१२. वरुतारम् (१३) वरूतारम् के प्रयोग उपलब्ध नहीं हुए।

१४(क) वरुत्री (मैत्रायणी संहिता २-७-६-६९) पृष्ठ १५४-१

वरुत्री त्वा देवीं विश्वदेव्यवती पृथिव्याः सधस्थे अङ्गिरस्वत् पचतामुखे।

१४(ख) वरूत्रीभिः - (ऋग्वेद ७-३४-२२) हि०पृ० २०२

ता नों रासन्नातिषाचो वसून्या रोदसी वरुणानी श्रृणोतु।

वरूत्रीभिः सुशरणो नों अस्तु त्वष्टा सुदत्रो विदधातु रायः॥

अर्थ - दान निपुण देवपत्नियाँ हमारा मनोरथ अर्थात् हमें अभीष्ट धन प्रदान करें। द्यावा-अन्तरिक्ष, पृथिवी और वरुणपत्नी भी सुनें। कल्याण करने वाले और दानशील त्वष्टा, उपद्रव निवारिणी देवस्त्रियाँ साथ हमारे लिये अच्छा शरणप्रद होवें।

१५. अमिति- शुक्लयजुर्वेद माध्यनन्दिन संहिता (२२-५) पृष्ठ ४६

प्रजापतये त्वा जुष्टं प्रोक्षामीन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामि वायवे त्वा जुष्टं प्रोक्षामि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि।

यो अर्वन्तं जिघांसति तमभ्यमीति वरुणः परो मर्तः परः श्वा।

अर्थ - कूप आदि के स्थिर जल के समीप जाकर अध्वर्यु अश्व का प्रोक्षण करे। हे अश्व प्रजापति के प्रियपात्र तुम्हारा प्रोक्षण करता हूँ। इससे अश्व वीर्यवान् बनता है। इन्द्र और अग्नि देवता के तुम प्रिय हो तुम्हारा प्रोक्षण करता हूँ। इससे अश्व में ओज आता है। तुम वायु के प्रिय हो, वायु की प्रीति के लिये तुम्हारा प्रोक्षण करता हूँ इससे अश्व में वेग आता है। विश्वेदेव देवताओं की प्रीति के लिये तुम्हारा प्रोक्षण करता हूँ। इससे अश्व में यश का आधान होता है। सब देवताओं की प्रीति के लिये तुम्हारा प्रोक्षण करता हूँ। इससे सब देवताओं का अश्व में आवाहन होता है। अध्वर्यु यजमान से कहलावें कि जो शत्रु वेगवान् अश्व को मारना चाहता है वरुण उसको मारे। कुक्कुर को वेंत की चटाई पर रखकर घोड़े के नीचे तैरावें और कहे कि इससे घोड़े को मारने की इच्छावाला शत्रु तिरस्कृत हुआ। श्वान के समान तुच्छ ताड़न के अधिकारी शत्रु का तिरस्कार किया गया है।

---

**भावार्थ-**''ग्रसितस्कभितस्तभित..'' (७-२-३४) इत्यादि सूत्र से निपातन के द्वारा ग्रसित इत्यादि १८ पद निष्पन्न किये जाते हैं। जैसे भ्वादिगणपठित अदनार्थक उदित ग्रसु धातु से ''ग्रसितस्तन्भुस्तुन्भु स्कन्भुस्कुन्भु स्कुञ्भ्यः श्नुश्च'' (३-१-८२) सूत्र में पठित स्कुन्भु स्तुन्भु सौत्र सेट् उदित धातुओं से क्त्वा प्रत्यय के विहित होने पर

**भावार्थ-** उसको ''आर्धधातुकस्येड्वलादेः'' इस सूत्र से प्राप्त नित्य इडागम को बाधकर ''उदितो वा'' (७-२-५६) सूत्र से विकल्प से इडागम होता है, इसलिये इन धातुओं से क्त प्रत्यय के विहित होने पर इसको ''यस्य विभाषा'' (७-२-१५) सूत्र से इडागम का निषेध हो गया। अतः यहाँ क्त प्रत्यय को इस सूत्र से निपातन के द्वारा इडागम करके ग्रसित, स्कभित, स्तभित ये तीन शब्द निष्पन्न किये जाते हैं। लोक में ग्रस्त, स्कब्ध, स्तब्ध रूप निष्पन्न होते हैं। इसी प्रकार उत्तभित को समझना चाहिए। चत्त पद में भ्वादिगणपठित याचनार्थक सेट् चतेधातु से एवं विकस्ता में गत्यर्थक कस् धातु से क्त प्रत्यय के विहित होने पर उसको प्राप्त इडागम का प्रकृत सूत्र से निपातन के द्वारा निषेध होने पर क्रमशः चत्त एवं वि उपसर्ग पूर्वक कस् धातु से बहुवचन में विकस्ता रूप बनता है। भ्वादिगण पठित सेट् हिंसार्थक शसु स्तुत्यर्थक शंसु तथा अनुशासनार्थक शासु धातुओं से ''ण्वुलतृचौ'' सूत्र से तृच् प्रत्यय हुआ तथा उसको ''आर्धधातुकस्येड्वलादेः'' सूत्र इडागम प्राप्त था जिसका प्रकृत सूत्रसे निपातन के द्वारा निषेध होने से क्रोष्टा की भाँति क्रमशः वि उपसर्ग पूर्वक विशस्ता शंस्ता एवं प्र उपसर्गपूर्वक प्रशास्ता रूप निष्पन्न होते हैं। तरुताम्, तरूतारम् ये दो प्रयोग भ्वादिगणपठित प्लवन संतरणार्थक सेट् तॄ धातु से तृच् प्रत्यय होने के पश्चात् उसको ''आर्धधातुकस्येड्वलादेः'' सूत्र से इडागम प्राप्त था उसे बाधकर प्रकृत सूत्र से उट् एवं ऊट् आगम हुआ ऋकार को ''सार्वधातुकार्धधातुकयोः'' सूत्र से गुण एवं ''उरण् रपरः'' सूत्र से रपर होकर तरुतृ तरूतृ शब्द से द्वितीया के एकवचन में अम् प्रत्यय हुआ तथा ऋकार को ''ऋतो ङि सर्वनामस्थानयोः'' सूत्र गुण एवं रपर होकर तरुतर अम् एवं तरूतर अम् इस स्थिति में तर के उपधा अकार को ''अप्तृन्तृच् स्वसृनप्तृ....'' (६-४-११) सूत्र से दीर्घ होकर उक्त दोनों रूप निष्पन्न हुऐ। इसी प्रकार वरुतारम्, एवं वरुतारम् दोनों रूप क्र्यादि गणपठित सेट् वृङ् संभक्तौ एवं स्वादिगण पठित वृञ् वरणे धातु से तृच् प्रत्यय तथा उनको प्रकृत सूत्र से क्रमशः उट् और ऊट् का निपातनात् आगम करके निष्पन्न हुए। वरूत्रीभिः में वरूत्री वरुतृशब्द से स्त्रीत्व विवक्षा में ऋन्नेभ्यो ङीप् सूत्र से ङीप् प्रत्यय होकर निष्पन्न हुआ। उज्ज्वलिति, क्षरिति, वमिति, अमिति ये चारों रूप क्रमशः भ्वादिगण पठित सेट् उत् उपसर्गपूर्वक दीप्त्यर्थक ज्वल् धातु से लट् तिप् शप् एवं शप् के अकार को प्रकृत सूत्र से निपातनात् इकार होकर उज्ज्वलिति, भ्वादिगणपठित सेट् संचरणार्थक क्षर् धातु से लट् तिप् शप् होकर शप् के अकार निपातनात् इकार होकर क्षरिति। इसी प्रकार भ्वादिगणपठित सेट् उद्‌गिरणार्थक (टु) वम् धातु से वमिति तथाभ्वादिगणपठित सेट् गत्यार्थक् अम् धातु से अमिति की भी निष्पत्ति समझनी चाहिये।

बभूथाऽऽततन्थजगृम्भववर्थेति निगमे। (७-२-६४)

विद्मा तमुत्सं यतं आबभूथ। येनान्तरिक्षमुर्वाततन्थ। (ऋग्वेद ३-२२-२)

जगृम्भा ते दक्षिणमिन्द्र हस्तम्। (ऋग्वेद १०-४७-१)

त्वं ज्योतिषा वितमो ववर्थ। भाषायां तु बभूविथ। आतेनिथ। जगृहिम। ववरिथेति।

---

**शाङ्करी**– बभूथ – भ्वादिगणपठित सेट् सत्तार्थक भू धातोः, लिट्लकारः तस्य स्थाने मध्यमपुरुषस्य एकवचने सिप् प्रत्ययः तस्य स्थाने "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इति सूत्रेण थल् आदेशः "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यनेन पूर्वस्य अभ्याससंज्ञायां "भवतेरः" इत्यनेनात्वे "अभ्यासे चर्चः" इत्यनेन जश्त्वे 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमे प्राप्ते "बभूथाऽऽततन्थजगृम्भवर्थेति निगम्" इति सूत्रेण निपातनात् तस्य अभावे वभूथ इति।

आङुपसर्गपूर्वात् तनादिगण पठित विस्तारार्थकात् तनुधातोः मध्यमपुरुषस्य एकवचने सिप् प्रत्यये तस्य स्थाने "परस्मैपदानां णलतुसुस्थलथुसुसणल्वमाः" इति सूत्रेण थलादेशे "आर्धधातुकस्येड्वलादेः" इत्यनेन इडागमे प्राप्ते "बभूथाऽऽततन्थ जगृम्भववर्थेति निगमे" इतिनिपातनात् इडागमाभावे धातोर्द्वित्वादि कार्ये आततन्थ।

क्र्यादिगणपठितात् उपादानार्थकात् ग्रह धातोर्लिट्लकारे तस्य स्थाने उत्तमपुरुषस्य बहुवचने मस् प्रत्यये तस्य स्थाने "परस्मैपदानां णलतुसुस्थलथस-णल्वमाः" इत्यनेन भ आदेशे लिटिधातोरनभ्यासस्य इत्यनेन द्वित्वे "हलादिः शेषः" इत्यनेन आदि हल् शेषे "कुहोश्चुः" इत्यनेन चुत्वे "ग्रहिज्यावयिव्यधिवष्टि-विचतिवृश्च०" इत्यादिना सम्प्रसारणे पूर्वरूपे "हृग्रहोर्भश्छन्दसि" इत्यनेन हकारस्य भकारे स्थानव्यत्ययेन जगृम्भ इति।

ववर्थ। वृञ् वरणे धातोर्लिट् लकारे तस्य स्थाने मध्यमपुरुष एकवचने सिप् प्रत्यये तस्य स्थाने "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन थल् आदेशे "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यनेन पूर्वस्याभ्यास संज्ञायां "उरत्" इत्यनेन ऋकारस्य अत्वे "हलादिः शेषः" इत्यनेन आदि हलशेषे थलः आर्धधातुकत्वात् "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे "आर्धधातुकस्येड्वलादेः" इत्यनेन इडागमे प्राप्ते बभूथा ततश्च जगृम्भ इत्यादि निपातनात् इडभावे ववर्थ इति।

**तीर्था- बभूथ-** भ्वादिगणपठित सत्तार्थकात् सेट् भूधातोः 'परोक्षे लिट्' इति सूत्रेण लिट् लकारः तस्य स्थाने "तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथां-ध्वमिड्वहिमहिङ्" इति सूत्रेण मध्यमपुरुषैकवचने सिबादेशः तस्य "लिट् च" इत्यनेनार्थधातुकसंज्ञायां पुनः सिपः स्थाने "परस्मैपदानां णलतुसुस्थलथु-सणल्वमाः" इत्यनेन थल् आदेशः धातोः "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वे पूर्वस्य च "पूर्वोऽभ्यासः" इत्यनेनाभ्याससंज्ञातस्य च "भवतेरः" इत्यनेनाकारे भभूथ इति स्थिते "अभ्यासे चर्चः" इत्यनेन पूर्वभकारस्य जश्त्वेन बकारे बभूथ इति स्थिते थलः "आर्धधातुकस्येड्वलादेः" इत्यनेन लोकवत् इडागमे प्राप्ते "बभूथाऽऽततन्थजगृम्भववर्थेति निगमे" इति सूत्रेण निपातनात् इडागम निषेधे बभूथ इति। लोके तु इडागमे बभूविथ इति। एवमेव तनादिगणपठित विस्तारार्थक सेट आङ्पूर्वकात् तनु धातोः आततन्थ इत्यपि ज्ञेयम्।

**जगृम्भ** - क्रयादिगणपठितोपादानार्थकसेट् ग्रहधातोर्लिट् लकारः तस्य स्थाने "तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्" इति सूत्रेण उत्तमपुरुषबहुवचने भसादेश तस्य "लिट् च" इत्यनेनार्धधातुकसंज्ञायां "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन भ आदेश।

---

**विमर्श-** (क) बभूथ (ऋग्वेद १-१६५-५) हिन्दी पृष्ठ ३०४

अतो वयमन्तमेभिर्युजानाः स्वक्षत्रेभिस्तन्वः शुम्भमानाः।
महोभिरेताँ उपयुज्महे न्विन्द्र स्वधामनु हि नो बभूथ॥

अर्थ - (इन्द्र के द्वारा ऐसा कहने पर) मरुद्गण कह रहे हैं - हे इन्द्र इसीलिए हम महातेज से अपने शरीर को अलङ्कृत करके निकटवर्ती और बली अश्वों से युक्त होकर यज्ञस्थान में जाने के लिए शीघ्र ही तैयार हुए हैं। तुम रेत या बल के साथ हमारे साथ ही रहो।

(ख)(घ) ववर्थ ऋग्वेद १-९१-२२ हिन्दी पृष्ठ ६९२

त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः।
त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ॥

अर्थ -हे सोम! तुमने सारी ओषधियाँ, वृष्टि, जल और गायें बनाई हैं। तुमने इस व्यापक अन्तरिक्ष को विस्तृत किया है और ज्योति द्वारा उसका अन्धकार विनष्ट किया है।

आततन्थ। (ऋग्वेद ३-२२-२)

अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र।

सनिंस सनिवांसम्। ७/२/६९।

सनिमित्येतत्पूर्वात्सनतेः सनोतेर्वा क्वसोरिड् एत्वाभ्यासलोपाभावश्च निपात्यते।

(क) अग्नित्वाग्ने सनिंससनिवांसम्। (आ०श्रो० १.३.४.१६)

(वा०) पावकादीनां छन्दसि प्रत्ययस्थात्कादित्वं नेति वाच्यम्।

(ख) हिरण्यवर्णाः शुचयः पावकाः। (अ०वे० १.३३.१)

---

**शाङ्करी**– सनिं ससनिवांसम् – अत्र 'वस्वेकाचाद्घसाम्' (७-२-६७) इति सूत्रात् वसु 'गमेरिट्परस्मैपदेषु (७-२-५८)' इत्यत इट् इति। अतः सनिम् पूर्वकस्यभ्वादि गणीय षणसंभक्तौ धातोः, तनादि गणीय षणु दाने वा धातोर्वापरस्य क्वसोरिड् एत्वाभ्यास लोपाभावश्च निपात्यते। सनिं ससनि वांसम्। सनिं पूर्वात् सन् धातोः छन्दसि लिट्

---

**विमर्श**– येनान्तरिक्ष मुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः॥

अर्थ – हे यजनीय अग्नि तुम्हारा तेज द्युलोक तथा पृथिवी की औषधियों एवं जल में भी है। जिसके द्वारा तुमने अन्तरिक्ष को भी व्याप्त किया है, वह तेज उज्वल समुद्र के समान विशाल और मनुष्यों के लिये दर्शनीय है।

जगृम्भ। (ऋग्वेद १०-४७-१)

जगृम्भाते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम्।

विद्मा हित्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः॥

अर्थ– अनेक प्रकार के धनों के स्वामी हे इन्द्र धनाभिलाषी हम तुम्हारे दाहिने हाथ को पकड़ते हैं। शूर इन्द्र तुम्हें इन्द्र तुम्हें हम अनेक गौवों के स्वामी के स्वामी के रूप में जानते हैं। अतः आप हमें विचित्र और वर्षक (वर्दिष्णु) धन दें।

---

**भावार्थ**–भ्वादिगणपठित सत्तार्थक सेट् भूधातु से, तनादिगणपठित विस्तारार्थक सेट् तनु धातु से, क्र्यादिगणपठितोपादानार्थक सेट् ग्रह धातु से और स्वादिगणपठित वरणार्थक सेट् वृञ् धातु से लिट् लकार के मध्यमपुरुष के एकवचन में सिप् प्रत्यय के स्थान पर थल आदेश होने के बाद उसको लोक के समान "आर्धधातुकस्येड्वलादेः" सूत्र से इडागम प्राप्त हुआ। निगम अर्थात् वेद में "बभूथाऽऽततन्थजगृम्भववर्थेति निगमे" इस सूत्र से निपातनात् इडागम का निषेध हो गया। अतः बभूविथ इत्यादि रूप के प्रसङ्ग में बभूथ इत्यादि इड् रहित रूप निष्पन्न होते हैं।

घोर्लोपो लेटि वा। ७-३-७०

(क) दध॒द्रत्नानि दा॒शुषे। (ऋग्वेद ४-१५-३)

(ख) सोमों ददद् गन्धर्वाय (ऋग्वेद १०-८५-४१)

(ग) यदग्निरग्नये ददात्।

मीनातेर्निगमे। ७-३-८१।

शिति ह्रस्वः। (घ) प्रमिणन्ति व्र॒तानि। लोके प्रमीणन्ति।

---

**शाङ्करी-** इत्यनेन लिट् लकारः, तस्य स्थाने "क्वसुश्च" इत्यनेन क्वसुरपि भूत सामान्ये। पावकाः। पुनन्ति, पावयन्ति वेत्यत्र ण्वुलिटापिच "प्रत्ययस्थात्का०" प्राप्ते त्वं निषिध्यते।

घोर्लोपो .......... अत्र अङ्गस्येत्यनुवर्तते, घोः इति षष्ठ्यन्तं तत्र विशेषणत्वेनान्वेति। अतो घुसंज्ञकस्याङ्गस्य विकल्पेन लोपो भवति लेटि परे।

दधद्रत्नानि – जुहोत्यादिगणपठित धारणपोषणार्थक धाञ् धातोर्लेट् तिबादेशः शपः श्लुः द्वित्वम्। दददगन्धर्वाय। जुहोत्यादिगणपठित दानार्थक दाञ् धातोः पूर्ववत्। लोपाभावपक्षे ददात् इति।

मीनातेर्निगमे। प्रकृतसूत्रे 'प्वादीनां ह्रस्वः' (७-३-८०) इत्यतो ह्रस्व इति ष्ठिवुक्लमुचमां शिति (७-३-७५) इत्यतः शिति इति, अङ्गस्य (६-४-१) इति चानुवर्तते। अतो वेदे मीञ् धातोरङ्गस्य शिति प्रत्यय परे ह्रस्वो भवति।

---

**तीर्था-** **सनिंसनिवांसम्** – सनिम् इत्येतत्पूर्वात् भ्वादिगणीय संभक्तार्थकात् षण्धातोः तनादिगणीय दानार्थकात् षणु धातोर्वा 'धात्वादेः षः सः' इत्यनेन षकारस्य सकारे 'छन्दसि लिट्' इति सूत्राल्लिट् लकारः तस्य स्थाने 'क्वसुश्च' इत्यनेन क्वसु आदेशः अनुबन्धलोपः सनिं सन वस् इति स्थितौ 'लिटिधातोरनभ्यासस्य' इत्यनेन धातोर्द्वित्वे पूर्वस्य "पूर्वोऽभ्यासः" इति सूत्रेण अभ्यास संज्ञायां "हलादि शेषः" इत्यनेन अभ्यासस्य आदि हल शेषे सनिं स सन् वस् इति स्थितौ "अत एक हल्मध्येऽनादेशादेर्लिटि" इति सूत्रात् अभ्यासलोपे धातोः अकारस्य एत्वे च प्राप्ते "सनिं संनिवासम्" इति सूत्रान्निपातनात् क्वसोर्निपातनात् इडागमः धातोः एत्वाभ्यासलोपाभावश्च वस् (क्वसु) इत्यस्य "उगिदचां सर्वनामस्थानेऽधातोः" इति सूत्रेण नुमागमः "सान्तमहतः संयोगस्य" इत्यनेनोपधादीर्घे द्वितीयाया एकवचने सनिं ससनिवांसम् इति।

दधत् – जुहोत्यादिगणपठित धारण पोषणार्थकात् धाञ् धातोर्लेट्लकारः तस्य तिबादेशः मध्ये "कर्तरि शप" इत्यनेन शप् तस्य "जुहोत्यादिभ्यः श्लुः" इत्यनेन श्लुः (लोपः) "श्लौ" इत्यनेन धातोर्द्वित्वे धा धा ति इति स्थिते पूर्वस्य

अस्ति सिचोऽपृक्ते। (७-३-९६)

बहुलं छन्दसि। (७-३-९७)

सर्वमा इदम्। असीदीति प्राप्ते। अस्तेर्लङ् तिप् ईडभावः अपृक्तत्वाद्धल्ङ्यादि लोपः। रुत्व विसर्गौ। संहितायां तु भो भगो (८-३-

---

**तीर्था**– "पूर्वोऽभ्यासः" इति सूत्रेण अभ्यासंज्ञा "ह्रस्वः" इति सूत्रेण ह्रस्वः "अभ्यासे चर्चः" इति सूत्रेण अभ्यास धकारस्य जश्त्वेन दकारः द्वितीय धाघटकाकारस्य "घोर्लोपो लेटि वा" इत्यनेन लोपः लेटोऽडाटौ इत्यनेन लेटोऽडागमः अनुबन्धलोपः इतश्च लोपः परस्मैपदेषु इत्यनेन तिपः इकारस्य लोपे दधत् इति। एवमेव ददत् इति।

प्रमिणन्ति – क्र्यादिगणपठित हिंसार्थक मीञ् धातोर्लट् लकारस्तस्य स्थाने प्रथमपुरुष बहुवचने झि आदेशः तत्र झकारस्य "झोऽन्तः" अन्त आदेशः "क्र्यादिभ्यः श्नाः" इत्यनेन धातोः श्ना विधीयते तत्र शकारस्य "लशक्वतद्धिते" इत्यनेन इत्संज्ञायां प्रमीना अन्ति इति स्थिते "मीनातेर्निगमे" इत्यनेनेकारस्य ह्रस्वः "श्नाभ्यस्तयोरातः" इत्यनेन आकारलोपे "हिनु मीना" इत्यनेन णत्वे प्रमिणन्ति इति।

---

**विमर्श**– दधत् रत्नानि दाशुषे। (ऋग्वेद ४-१५-३)

परि वाजपतिः कविरग्नि र्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे।

अर्थ – अन्न के पालक मेधावी अग्नि हवि देनेवाले यजमान को रमणीय धन देकर हवि को चारों तरफ से व्याप्त करते हैं।

सोमोंददद्गन्धर्वाय (ऋग्वेद १०-८५-४१)

सोमो ददद्गन्धर्वाय गन्धर्वो ददद्ग्नये।

रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्॥

अर्थ– सोम ने उस स्त्री को गन्धर्व दिया, गन्धर्व ने उसे अग्नि को दिया और अग्नि ने धन सन्तान सहित मुझे दिया।

प्रमिणन्ति व्रतानि। (ऋग्वेद १०-१०-५)

गर्भे नु नौ जनिता दंपती कर्देवस्त्वष्टा सविता विश्वरूपः।

नकिरस्य प्रमिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः॥

अर्थ– यम के प्रति यमी की उक्ति। रुपकर्ता शुभाशुभ प्रेरक सर्वात्मक दीव्य और जनक प्रजापति ने तो हमें गर्भावस्था में ही दम्पति बना दिया है। प्रजापति का कर्म कोई लुप्त नहीं कर सकता। हमारे इस सम्बन्ध को द्यावा पृथिवी भी जानते हैं।

१७) इति यत्वम्। "लोप शाकल्यस्य" (८-३-१९) इति यलोपः। गोभिरक्षाः। सिच इडभावश्छान्दसः। अट्। शेषं पूर्ववत्।

---

**शाङ्करी**– अ 'अस्ति सिचोऽपृक्ते' इति सूत्रम्, ब्रुव ईट् इत्यत ईट्, उतो वृद्धिर्लुकि हलि इत्यतो हलि इति, तुरुस्तुशम्यमः सार्वधातुके (७-३-९५) इत्यतः सार्वधातुके इति चानुवर्तते। अतः सुत्रार्थः – अस् धातोः सिचश्चपरस्यापृक्तहलः ईडागमो भवति बहुलम्। सर्वम् आ इदम्। अस् धातोर्लुङ् तस्य तिबादेशः अनुबन्धलोपः शप् तस्य "अदिप्रभृतिभ्यः शपः" इति सूत्रेण शपोलुकि "इतश्च" (३-४-१००) इति सूत्रेण इकारलोपः "आडजादीनाम्" इत्यनेनाडागमः 'आ अस् त्' इति स्थिते सवर्णदीर्घः सकारस्य "अस्तिसिचोऽपृक्ते" इत्यनेन प्राप्तेडागमस्य "बहुलं छन्दसि" (७-३-९७) इत्यनेन निषेधे तकारस्य हल्ङ्यादि लोपः सकारस्य रुत्वं यत्वं यलोपश्च तदुक्तं संहितायां तु इति। पद पाठे रुत्वविसर्गौ आ इदम्। अक्षाः। सञ्चालनार्थकात् क्षरधातोर्लुङ् तिप् सिच् अडागमः अनुबन्धलोपः अक्षर् स् त् इति स्थिते तिपोऽपृक्तस्य प्राप्तेऽडागमस्य छन्दसि अभावे तकारस्य हल्ङ्यादि लोपः सिचः सकारस्य "रात्सस्य" (८-२-२४) इत्यनेन लोपः अतोल्रान्तस्य इत्यनेन धातोरकारवृद्धिः रेफस्य विसर्गः।

---

**तीर्था**– आ इदम्। अस् धातोर्लङ् लकारः "तिप्तस्झिसिप्थस्थ" इत्यादिना तिबादेशः अनुबन्धलोपः तिपः "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायां मध्ये "कर्तरि शप्" इत्यनेन शप् तस्य "अदिप्रभृतिभ्यः शपः" इत्यनेन लुक् धातोः "आडजादीनाम्" इत्यनेन आडागमः अनुबन्धलोपः तेरिकारस्य "इतश्च" इत्यनेन लोपः आ अस् त् इति स्थिते तकारस्य "हल्ङ्याब्भ्यो०" इत्यादिना लोपः अकारयोः सवर्णदीर्घः पदपाठे सकारस्य रुत्वे विसर्गे च आः इदम्। संहितायां सस्य "ससजुषो रुः" इत्यनेन रुत्वं तस्य "भोभगो अघोऽपूर्वस्य" इत्यनेन यत्वं तस्य "लोपः शाकल्यस्य" इत्यनेन लोपः आ इदम् इति।

---

**विमर्श**– तम॑ आसी॒त्तम॑सा गू॒ह्ळमग्रे॑ऽप्रके॒तं स॑लि॒लं सर्व॑ मा इ॒दम्।
तु॒च्छ्येना॒भ्वपि॑हितं॒ यदासी॒त् तप॑स॒स्तन्म॑हि॒ना जा॑यतै॒ कम्॥ (ऋग्वेद १०-१२९-३)

अर्थ – सृष्टि से पूर्व अन्धकार (अथवा मायारूपी) अज्ञान से समस्त जगत् ढका हुआ था। सभी अज्ञात और और सब जलमय (अविभक्त था) अविद्यमान सदसद् विलक्षण भावरूप अज्ञान से सर्वव्यापी आच्छन्न था। तपस्या के प्रभाव से वही सर्वज्ञ अद्वितीय एक तत्व उत्पन्न था आविर्भूत हुआ।

ह्रस्वस्य गुणः। (७-३-१०८)

जसि च। (७-३-१०९)

जसादिषु छन्दसि वा वचनं प्राङ्णौ चङ्युपधायाः। अधा शतक्रत्वो यूयम्। शतक्रतवः। पश्वे नृभ्यो यथा गवे। पशवे। (ऋग्वेद १०-९७-२) शतक्रवः।(ऋग्वेद १-४३-२)

नाभ्यस्तस्याचि पिति सार्वधातुके। (७-३-८७) इति निषेधे "बहुलं छन्दसीति वक्तव्यम्" (वा)। अनुषग्जुजोषत्।

---

**शाङ्करी**- ह्रस्वस्य गुण इति। लोके "ह्रस्वस्य गुण" इत्यस्योदाहरणम् हे हरे। तत्र सम्बुद्धौ च इत्यस्यानुवृत्तेः। "जसि च" इत्यस्योदाहरणं हरयः। वेदे तु "जसादिषु छन्दसि ..............." वार्तिक निर्देशात् विकल्पेन गुणो भवति। यथा सति गुणे शतक्रतवः, तदभावे शतक्रत्व इति। एवमेव ङे परे पश्वे पशवे। नाभ्यस्तस्याचि। सूत्रेणानेन अजादौ पिति सार्वधातुके परेऽभ्यस्तस्य लघुपधगुणो निषिध्यते। यथा नेनिजानि इत्यत्र। किन्त्वयं निषेधश्छन्दसि विकल्पेन भवति। यथा जुजोषत्। अत्र

---

**तीर्था**- **अक्षाः** - भ्वादिगणपठित संरचरणार्थकक्षर् धातोर्लुङ् लकारे तस्य "तिप्तस्झि०" इत्यादिना तिबादेशः मध्ये "च्लि लुङि" इत्यनेन च्लि प्रत्यये तस्य "च्लेः सिच्" इत्यनेन सिच् आदेशे इचावितौ धातोः "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे तिपः इकारस्य "इतश्च" इत्यनेन लोपः अक्षर् स्त् इति स्थितेऽपृक्तत्कारस्य "अस्तिसिचाऽपृक्ते" इत्यनेनडागमे प्राप्ते "बहुलं छन्दसि" इत्यनेन बाहुलकात् निषेधे तकारस्य "हल्ङ्याब्भ्योदीर्घात् सुतिस्यपृक्तं हल्" इत्यनेन लोपे सकारस्य "रात्सस्य" इत्यनेन लोपः "अतो ल्रान्तस्य" इत्यनेनाकारस्य वृद्धिः रेफस्य "खरवसानयोर्विसर्जनीयः" इत्यनेन विसर्गः अक्षाः इति।

---

**विमर्श**- गोभिरक्षाः (ऋग्वेद ९-१०७-९)

अनूपे गोमान् गोभिरक्षाः सोमो दुग्धामिरक्षाः।

समुद्रं न संवरणान्यग्मन्द मदां तोशते।

अर्थ- गोग्ध के साथ सोम निम्मस्थ कलश में सरित होते हैं। गो दुग्ध के साथ अपने मिश्रण के लिये सोम दुग्ध के साथ प्रवाहित होते हैं। जैसे जल समुद्र में जाता है वैसे ही समजनीय और रसरूप अन्न द्रोण कलश में जाता है। मदकारक सोम मद के लिये अभिबुत किये जाते हैं।

नित्यं छन्दसि। (७-४-८)।

छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋन्नित्यम्। अवीवृधत्। (ऋग्वेद ८-८-८)

**शाङ्करी**- लेट् लकारस्य प्रथमपुरुषस्यैकवचने लेटोऽडाटौ इत्यनेनाडागमे अजादिपित् सार्वधातुके परेऽपि "बहुलं छन्दसीति वक्तव्यम्" इति वार्तिक निर्देशात् निषेधाभावात् गुणे जुजोषत इति।

वेदे तु नित्यं ऋवर्णस्य ऋत् भवति। अत एव मूले उक्तम् - छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋन्नित्यम्। अवीवृधत्। अवीवृधत् वृद्ध्यर्थकात् वृधु धातोर्हेतुमत्यर्थे हेतुमति चेत्यनेन णिच् प्रत्यये सनाद्यन्ता धातवः इत्यनेन धातुसंज्ञायां लुङ् तस्य नित्यत्वात् परत्वात् अन्तरङ्गत्वाच्च तिबादेशः मध्ये च्लिप्रत्ययः तस्य "णिश्रिद्रुस्रुभ्यः" इत्यादिना चङादेशः लुङ्लङ् इत्यादिना अडागम अवृध् इ अत्

**तीर्था**- **शतक्रत्वः** - शतक्रतु शब्दात् जस् विभक्तौ "चुटू" इत्यनेनेत्संज्ञायां "जसि च" इत्यनेन उकारस्य गुणे प्राप्ते "जसादिषु छन्दसि वावचनं प्राङ्णौ चङ्युपधायाः" इति वार्तिक निर्देशात् गुणाभावे यणि शतक्रत्वः गुणेऽवादेशे शतक्रतवः इति।

**जुजोषत्** - तुदादिगणपठितात्मनेपदीय प्रीतिसेवनार्थकात् जुषीधातोर्लेट्लकारः व्यत्ययेन परस्मैपदे प्रथमपुरुषैकवने तिबादेशः इतश्च लोपः परस्मैपदेषु इत्यनेनेकारलोपः लेटोऽडाटौ इत्यनेनाडागमः मध्ये "तुदादिभ्यः शः" इत्यनेन शविकरणः तस्य व्यत्ययेन श्लु "श्लौ" इत्यनेन धातोर्द्वित्वं "हलादिः शेषः" इत्यनेनादिहलशेषः "उभेऽभ्यस्तम्" इत्यनेनोभयोः अभ्यस्तसंज्ञायाम् "नाभ्यस्याचि पिति सार्वधातुके" इत्यनेन गुण निषेधे प्राप्ते "बहुलं छन्दसि इति वक्तव्यम्" इति वार्तिक निर्देशात् "पुगन्तलघुपधस्य च" इत्यनेन गुणे जुजोषत् इति।

**विमर्श**- श॒तं वो अम्ब॒ धामा॑नि स॒हस्र॑मु॒त वो॒ रुहः॑।

अधा॑ शतक्रत्वो यूयमि॒मं मे॑ अग॒दं कृ॑तः। (ऋग्वेद १०-९७-२)

अर्थ - हे मातृरूप औषधियों तुम्हारे जन्म (तुम्हारी संख्या) असीम है। तुम सैकड़ों कर्मों वाली हो। तुम मुझे रोग रहित आरोग्य प्रदान करो।

यथा॑ नो॒ अदि॑तिः॒ कर॒त्पश्वे॒ नृभ्यो॒ यथा॒ गवे॑। यथा॑ तो॒का॑य रु॒द्रिय॑म्। (ऋग्वेद १-४३-२)

अर्थ - जिस प्रकार भूमि देवता हमारे लिये पशुवों के लिये मनुष्य के लिये गायों के लिए हमारे अपत्य के लिये रुद्र सम्बन्धी औषधि प्रदान करें।

न छन्दस्यपुत्रस्य (७-४-३५)।

पुत्रभिन्नस्यादन्तस्य क्यचि ईत्व दीर्घौ न। मित्रयुः। मैत्रायणी संहिता २-६-१२-३४ पृ० १४८ "क्याच्छन्दसि" (३-२-१७०) इति उः। अपुत्रस्य किम् - पुत्रीयन्तः सुदानवः। अपुत्रादीनामिति वाच्यम्। जनीयन्तोन्वग्रवः। जनमिच्छन्त इत्यर्थः।

---

**शाङ्करी**- इति स्थिते "णेरनिटि" इति णिलोपः धातोरुपधाया ऋकारस्य लघुपधगुणे रपरत्वे च प्राप्ते तं प्रबाध्य "उर्ऋत्" (७-४-७)इत्यनेन विकल्पेन ऋकारस्य ऋकारादेशे प्राप्ते तं प्रबाध्य "नित्यं छन्दसि"(७-४-८) इत्यनेन नित्यं ऋकारे धातोर्द्वित्वे "हलादिः शेषः" इत्यनेन आदि हल् शेषे "सन्वल्लघुनि चङ्परेऽनग्लोपे" इत्यनेन सन्वद्भावे "सन्यतः" इत्यनेनाकारस्येत्वे "दीर्घो लघोः" इत्यनेनाभ्यासेकारस्य दीर्घे अवीवृधत् इति॥ लोके अववर्धत् इत्यपि।

न च्छन्दसि। अत्र क्यचि च (७-४-३३) इत्यतः क्यचीति, "अस्यच्वौ" (७-४-३२) इत्यतः अस्येति "अङ्गस्य" (६-४-१) इति चानुवर्तते। अतः छन्दसि विषये पुत्रवर्जितस्य अवर्णान्तस्याङ्गस्य क्यचि ईत्वदीर्घौ न। क्यचि यदुक्तं तन्नेति व्याख्यानादिति भावः। क्यचि क्व उक्तम् ईत्वं क्व च दीर्घत्वम्? आत्मनः पुत्रमिच्छतीत्यत्र पुत्रशब्दात् 'सुपः आत्मनः क्यच्' ३-१-८ इत्यनेन क्यचि 'क्यचि च' ७-४-३३ इत्यनेनाकारस्य ईत्वे पुत्रीयति इति। सुखायते, दुःखायते, चीयते इत्यादौ च अकृत्सार्वधातुकयोर्दीर्घः (७-४-२५) कृद्भिन्ने सार्वधातुक भिन्ने च यकारे परे अजन्तस्याङ्गस्य दीर्घो भवति। एतदुभयं छन्दसि पुत्रभिन्नस्य न भवतीति भावः।

---

**तीर्था**- तीर्था तु शाङ्करी व्याख्ययैव गतार्था।

मित्रयुः। आत्मनो मित्रमिच्छतीति विग्रहे मित्रशब्दात् "सुप आत्मनः क्यच्" इत्यनेन क्यचि अनुबन्धलोपः मित्रय् इत्यत्राकारस्य "क्यचि च" इत्यनेनाकारस्य

---

**विमर्श**- किमन्ये पर्यासतेऽस्मत्स्तोमेभिरश्विना।

पुत्रः कण्वस्य वामृषिर्गीर्भिर्वत्सो अवीवृधत्॥ ऋ०वे० ८-८-८

अर्थ - कण्व ऋषि के पुत्र मन्त्र द्रष्टा वत्स ऋषि दोनों अश्विनीकुमारों को कह रहे हैं हे दोनों अश्विनी कुमारों मुझ से अतिरिक्त दूसरा कौन स्तोत्र द्वारा आश्विनी द्वय की उपासना कर सकता है। हम कण्व के पत्र वत्स ऋषि स्तुति द्वारा तुम्हारी वृद्धि महानता का गुणगान करते हैं।

**शाङ्करी**- मित्रयुः। आत्मनो मित्रमिच्छतीति विग्रहे "सुप आत्मनः क्यच्" इत्यनेन क्यचि "क्याच्छन्दसि" (३-२-१७०) इत्यनेन उ प्रत्ययः अत्र मित्रशब्दाकारस्य "क्यचि च" इत्यनेन प्राप्त ईकारः प्रकृत सूत्रेण निषिध्यते। अपुत्रादीनामिति। अत्र आदिपदेन जनमिच्छन्त इति विग्रहे जनशब्दात् क्यचि जनय इत्यस्यापि क्यचि च इत्यनेनेत्वमुपपद्यते।

---

**तीर्था**- ईत्वे प्राप्ते "न च्छन्दस्य पुत्रस्य" इत्यनेन निषेधे मित्रय इत्यस्य "सनाद्यन्ताधातवः" इत्यनेन धातुसंज्ञायां "क्याच्छन्दसि" इत्यनेन उप्रत्ययः मित्रयु इत्यस्य "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञायां सुप्रत्यये सस्य "ससजुषो रुः" इत्यनेन रुत्वे रेफस्य "खरवसानयोर्विसर्जनीयः" इत्यनेन विसर्गे मित्रयुः इति।

जनीयन्तः - आत्मनो जनमिच्छन्त इत्यर्थे जनशब्दात् "सुपः आत्मनः क्यच्" इत्यनेन क्यचि, अनुबन्धलोपे जन अम् य इत्यस्य 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यनेन धात्ववयवत्वात् अमो लुक् जन य इत्यत्र "क्यचि च" इत्यनेन क्यचि परेऽकारस्य ईत्वे जनीय इत्यस्मात् लट् तस्य "लटः शतृशानचावप्रथमासमानाधिकरणे" इत्यनेन शतृ आदेशः शकारस्य "लशक्वतद्धिते" इत्यनेन, ऋकारस्य "उपदेशेऽजनुनासिक इत्" इत्यनेन च निवृत्तौ जनीय अत् इत्यत्र "अतो गुणे" इत्यनेन पररूपे जनीयत् इत्यस्य "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञायाम् "उगिदचां सर्वनामस्थानेऽधातोः" इत्यनेन नुमागमः अनुबन्धलोपः जनीयन्त इत्यस्मात् प्रथमाया बहुवचने जसि अनुबन्धलोपे सस्य रुत्वे विसर्गे च जनीयन्तः इति।

---

**विमर्श**- मित्रयुः।

सर्वे व्राताः वरुणस्याभूम नि मित्रयुररतीनतारीत्।

अंशूशुभन्त यज्ञिया ऋतेन नि त्रितो जरिमाणं न आनट्॥ मै०सं० २-६-१२-३४ पृष्ठ १४८

जनीयन्तः

जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः। सरस्वन्तं हवामहे॥ ऋग्वेद ७-९७-४ हिन्दी पृष्ठ ४१६

अर्थ - हम स्त्री तथा पुत्र के अभिलाषी और सुन्दर दान देने वाले स्तोता हैं। हम सरस्वती देवता की स्तुति करते हैं।

अपुत्रादीमिति वाच्यम्। (वार्तिक) आदिपदेन जनशब्दोऽपि क्यचि ईत्वम्।

दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति। (७-४-३६)

एते क्यचि निपात्यन्ते। भाषायां तु उप्रत्ययाभावात्। दुष्टीयति। द्रविणीयति। वृषीयति। रिष्टीयति।

---

**शाङ्करी**- दुरस्युः। अत्र "क्यचि च" (७-४-३३) इति सूत्रात् क्यचि इत्यनुवर्तते। अतो क्यचि परे दुरस्युः, द्रविणस्युः, वृषण्यति, रिषण्यति एतानि छन्दसि निपात्यन्ते। तत्र दुष्टशब्दस्य क्यचि दुरस् भावो "क्याच्छन्दसि" इत्यनेन क्यजन्तात् उप्रत्ययः। तत्र दुष्टीयति इति प्राप्ते। द्रविणशब्दस्य द्रविणस् भावः। द्रविणस्युः "क्याच्छन्दसि" इत्यनेन उप्रत्ययः। वृषण्यति। वृषस्य वृषण् क्यचि लट् तिप् शप्। रिषण्यति। रिष्टस्य रिषण्। क्यचि लट् तिप् शप्।

---

**तीर्था**- (क) दुरस्युः। आत्मनो दुष्टमिच्छति इत्यर्थे "सुप आत्मनः क्यच्" इत्यनेन क्यच् अनुबन्धलोपः क्यचि परे दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति" इति सूत्रेण निपातनात् दुष्ट शब्दस्य दुरस् आदेशः "क्याच्छन्दसि" इत्यनेन उ प्रत्यये दुरस् य उ इति स्थिते "अतो लोपः" इत्यनेन अकार लोपः कृदन्तत्वात् प्रातिपदिकसंज्ञायां प्रथमाया एकवचने सु प्रत्ययः रुत्वे विसर्गे दुरस्युः इति।

(ख) द्रविणस्युः। आत्मनो द्रविणमिच्छति इत्यर्थे सुप आत्मनः क्यच् इत्यनेन क्यच्प्रत्ययेऽनुबन्धलोपः "दुरस्युर्द्रविस्युर्वृषणयति रिषण्यति" इति सूत्रेण निपातनात् द्रविण शब्दस्य द्रविणस् आदेशः "क्याच्छन्दसि" इत्यनेन क्यजन्तात् उ प्रत्यय

---

**विमर्श**-(क) दुरस्युः-किंमत्र भद्रं तन्नौ सह निरस्तो वलगोऽवबाढो दुरस्युं रक्षोघ्नोवलगघ्नं प्रोक्षामि वैष्णवान् रक्षोघ्नोंवलगघ्नोऽवसिञ्चामि वैष्णवान्। काठक संहिता २-११। पृष्ठ ११।

---

**भावार्थ**-जिस प्रकार लोक में 'आत्मनः पुत्रमिच्छति' इस अर्थ में पुत्र शब्द से "सुप आत्मनः क्यच्" सूत्र से क्यच् प्रत्यय होने के बाद अनुबन्धों की निवृत्ति के पश्चात् पुत्रय् में अकार को 'क्यचि च' सूत्र से ईत्व होकर पुत्रीयति प्रयोग निष्पन्न होता है, उसी प्रकार 'आत्मनो मित्रमिच्छति' इस अर्थ में उक्त सूत्र से क्यच् प्रत्यय के पश्चात् मित्रय् शब्द में भी अकार को 'क्यचि च' सूत्र से ईत्व प्राप्त हुआ, 'नच्छन्दस्य पुत्रस्य' सूत्र से निषेध हो गया। तथा 'क्याच्छन्दसि' सूत्र से उप्रत्यय करके मित्रयुः प्रयोग निष्पन्न हुआ। वार्तिककार अपुत्र शब्द के साथ आदिपद भी जोडना चाहते हैं ताकि ऋग्वेद के मण्डल ७ (सात) की ९६ सूक्त की ऋचा चार (४) में प्रयुक्त जनीयन्त पद में भी अकार की 'क्यचि च' से ईत्व की संगति हो सके।

तीर्था- कृदन्तत्वात् प्रातिपदिकसंज्ञायां प्रथमाया सौ "ससजुषो रुः" इत्यनेन सकारस्य रुत्वे "खरवसानयोर्विसर्जनीयः" इत्यनेन विसर्गे द्रविणस्युः इति।

(ग) वृषण्यति – आत्मनो वृषमिच्छतीत्यर्थे "सुप आत्मनः क्यच्" इत्यनेन क्यच् प्रत्ययेऽनुबन्धलोपः क्यचि परे "दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति" इति सूत्रेण वृष शब्दस्य निपातनात् वृषण् आदेशः वृषण् य इत्यस्य "सनाद्यन्ताः धातवः" इत्यनेन धातुसंज्ञायां "वर्तमाने लट्" इत्यनेन लट् लकारः अटावितौ लकारस्य "तिप्तस्झि०" इत्यादिना तिबादेशः वृषण्यति इति स्थिते तिपः "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायाम् "कर्तरि शप्" इत्यनेन शप् अनुबन्धलोपः "अतो गुणे" इत्यनेन पररूपे वृषण्यति इति। लोके वृषीयति इति।

(घ) रिषण्यति – आत्मनो रिष्टमिच्छति इत्यर्थे "सुप आत्मनः क्यच्" इत्यनेन क्यचप्रत्ययेऽनुबन्धलोपः "दुरस्युर्द्रविण्स्युर्वृषणयतिरिषण्यति" इति सूत्रेण निपातनात् रिष्ट शब्दस्य रिषण् आदेशः रिषण्य इत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां "वर्तमाने लट्" इति सूत्रेण लट् लकारः अटावितौ तकारस्य "तिप्तस्झि०" इत्यादिना तिबादेशः। रिषण्यति इति स्थिते तिपः "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायां "कर्तरि शप्" इत्यनेन शप् अनुबन्धलोपः "अतो गुणे" इत्यनेन पररूपे रिषण्यति इति। लोके रिष्टीयति इति।

---

विमर्श- (ख) द्रविणस्युः- अग्निर्वृत्राणि जङ्घन द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः। ऋग्वेद ६-१६-३४

अर्थ – भली भांति से दीप्त इसलिये शुक्ल वर्ण और हवि द्वारा आहूत अग्नि स्तुति से स्तूयमान होकर हवि की इच्छा करते हैं। अग्नि शत्रुओं और अन्धकार का विनाश करें।

(ग) वृषण्यति। सुशिल्पे वृहती मही पवमानो वृषण्यति। नक्तोषासा न दर्शते॥ ऋग्वेद ९-५-६।

अर्थ – इस समय पवमान सोम सुन्दररूपा वृहती महती और दर्शनीया दिवारात्री की कामना करते हैं।

(घ) रिषण्यति- अदेवेन मनसा यो रिषण्यति शासामुग्रो मन्यमानो जिघांसति।
वृहस्पते मा प्राणक्तस्य नो वधे निकर्म मन्यु दुरेवस्य शर्धतः॥
ऋग्वेद २-२३-१२

अर्थ – जो व्यक्ति देव भावना रहित मन से हमारी हिंसा करता है और जो उग्र आत्माभिमानी हमारा वध करने की इच्छा करता है। हे वृहस्पति उसका आयुध हमे न छू सके। हम वैसे बलवान् और दुष्ट शत्रु के क्रोध का नाश करने में समर्थ हों।

अश्वाघस्तात्। (७-४-३७)।

अश्व अघ एतयोः क्यचि आत् स्याच्छन्दसि। (क) अश्वायन्तो मघवन्। (ऋग्वेद ७-३२-२३)। (ख) मात्वा वृका आघायवः। (काठकसंहिता २-७-३९)। नच्छन्दस्य पुत्रस्य (७-४-३५) इति निषेधो नेत्व मात्रस्य किन्तु दीर्घस्यापीति। अत्रेदमेव सूत्रं ज्ञापकम्।

**शाङ्करी-** अश्वाघस्यात्। अश्वश्च अघश्च इत्यत्र समाहारद्वन्द्वः। अत एवात्र अश्वाघस्य इत्यत्रैकवचनम्। अत्र ''न छन्दस्यपुत्रस्य'' इत्यतश्छन्दसि, ''क्यचि च'' (७-४-३३) इत्यतः क्यचि, ''अङ्गस्य'' (६-४-१) इति चानुवर्तते। अतो वेदे अश्व अघमोरङ्गयोः क्यचि परे अन्त्ययोः आकारादेशो भवति। अश्वायन्तः। अश्वं आत्मन इच्छति। अश्वशब्दात् क्यचि धातुत्वाल्लट् तस्य शत्रादेशे शपि पररूपम्। अघायवः। छन्दसि परेच्छायां ''क्यच् च'' इति क्यच् ततः क्याच्छन्दसि इत्युप्रत्ययः इदमेव सूत्रम् इति। अन्यस्था दीर्घेणैव सिद्धत्वादात्ववचनमनर्थकं स्यात् इति।

**तीर्था-** अश्वायन्तः। आत्मनः अश्वमिच्छन्त इत्यर्थे अश्वशब्दात् ''सुपः आत्मनः क्यच्'' इत्यनेन क्यच् प्रत्ययः अनुबन्धलोपः ''अश्वाघस्यात्'' इति सूत्रेणात्वे अश्वाय इत्यस्य ''सनाद्यन्ता धातवः'' इत्यनेन धातुसंज्ञायां ''वर्तमाने लट्'' इत्यनेन लट् तस्य ''लटः शतृशानचावप्रथमासामानाधिकरणे'' इत्यनेन शतृ आदेशे शपि च अनुबन्धलोपे पररूपे अश्वायत् इत्यस्य कृदन्तत्वात् प्रातिपदिकसंज्ञायां प्रथमायाः बहुवचने जस् विभक्तिः अनुबन्धलोपः अश्वायत् अस् इति स्थिते 'उगिदचां सर्वनामस्थानेऽधातोः नुम्' इत्यनेन नुमागमः अनुबन्धलोपः सस्य रुत्वे विसर्गे च अश्वायन्तः इति।

अघायवः- इत्यत्र क्यच् प्रत्यय दर्शनात् परस्याघमिच्छन्तीत्यर्थेऽपि छन्दसि परेच्छायां क्यच् इति कल्पितवचनात् क्यचि अनुबन्धलोपः ''क्याच्छन्दसि'' इत्युप्रत्यये अघयु इत्यवस्थायां अश्वाघस्यात् इति सूत्रेण क्यचि परे अघशब्दाकारस्य आत् आदेशे अघायु शब्दस्य कृदन्तत्वात् प्रातिपदिकसंज्ञायां प्रथमाया बहुवचने जस् विभक्ति अनुबन्धलोपः उकारगुणेऽवादेशे च सस्य रुत्व विसर्गे च अघायवः इति।

**विमर्श-** अश्वायन्तः-

न त्वावाँ अ॒न्यो दि॒व्यो न पार्थिवो॒ न जा॒तो न जनिष्यते।
अ॒श्वा॒यन्तो मघवन्निन्द्र वा॒जिनो ग॒व्यन्तस्त्वा हवामहे॥ (ऋग्वेद ७-३२-२३)

अर्थ - हे धनी इन्द्र तुम्हारे जैसा धनी एवं वैभवशाली राजा न स्वर्ग में और न तो पृथिवी पर न तो कोई जन्मा और न तो कोई जन्मेगा। हम अश्व अन्न और घोड़ा

कव्यध्वरपृतनस्यर्चि लोपः। (७-४-३९)

एषामन्त्यस्य लोपः स्यात् क्यचि ऋग्विषये। संपूर्वया निविदा कव्यतायोः। अध्वर्युं वा मधुपाणिम्। दमयन्तं पृतन्युम्। ऋग्वेद १०-७४-५

**शाङ्करी-** कविश्च अध्वरश्च पृतनाश्च कव्यध्वरपृतनम्। तस्य कव्यध्वरपृतनस्य इति समाहारद्वन्द्वः। अत्र "नच्छन्दस्यपुत्रस्य" इत्यतः छन्दसीति, "क्यचि च" इत्यतः क्यचि इत्यनुवर्तते। अतः कवि अध्वर पृतना एषामन्त्य लोपः स्यात् क्यचि ऋग्विषये। कव्यतायोः। कव्यता आयोः इतिच्छेदः। कुशब्दे धातोः अच इ इति उणादि सूत्रेण उ प्रत्ययः गुणेऽवादेशे कविः। कविमात्मनः इच्छति क्यचि परे प्रकृत सूत्रेणकारलोपः कव्य इत्यस्य धातुत्वाल्लोट् लकारस्य मध्यमपुरुषबहुवचने कवात अथवा कव्यं स्तुतिं करोतीत्यर्थे तत्करोतीति णिच् तदन्तात् क्विप् तुक् कव्यता इति तृतीयाया एकवचने इति सायणः। अध्वर्युम्। क्यजन्तात् "क्याच्छन्दसि" इत्युः। एवमेव पृतन्युम्।

अर्थ – कवि अध्वर और पृतना शब्द के अन्य अच् का क्यच् प्रत्यय पर में हो तो लोप होता है।

**तीर्था- (क) कव्यत** – कविमात्मनः इच्छतीति विग्रहे "सुप आत्मनः क्यच्" इत्यनेन क्यच् प्रत्ययः अनुबन्धलोपः कवि य इति स्थिते 'कव्यध्वरपृतनस्यर्चि लोपः' इत्यनेन इकारलोपः, कव्य इत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां "लोट् च" इत्यनेन लोट् लकारः ओटावितौ लकारस्य स्थाने मध्यमपुरुषबहुवचने थादेशः थकारस्य स्थाने "तस्थस्थमिपां तान्तन्तामः" इत्यनेन तादेशे कव्यत इति।

**विमर्श-** तथा गौ की इच्छा से तुम्हें बुलाते हैं।।

अघायवः –

मात्वा परिपरिणो विदन् मा परिपन्थिनो मात्वा वृका अघायवो विदन्। (काठकसंहिता २-७-३९) पृष्ठ ९

**भावार्थ-**अश्वाघस्यात् सूत्र से अश्व और अघ शब्दों के अकार को क्यच् प्रत्यय के पर में रहने पर आत्व विधान करने से यह ध्वनित होता है कि "नच्छन्दस्यपुत्रस्य" सूत्र केवल "क्यचि च" सूत्र से प्राप्त केवल ईत्व का निषेध नहीं करना अपितु "अकृत्सार्वधातुकयो दीर्घः" (७-४-२५) सूत्र से प्राप्त दीर्घ का भी, क्यों कि यदि दीर्घ का निषेध नहीं करता तो अश्वायन्तः अघायवः प्रयोगों में दीर्घ द्वारा ही आकार हो जाता तो इन प्रयोगों में आत्वविधान के द्वारा आकार करने के लिये अश्वाघस्यात् सूत्र की आवश्कयता नहीं होती।

**तीर्था- (ख) अध्वर्युम्** - अध्वरमात्मानमिच्छति विग्रहे "सुप आत्मनः क्यच्" इत्यनेन क्यच् प्रत्ययः अनुबन्धलोपः अध्वर य इति स्थिते 'कव्यध्वरपृतनस्यर्चि लोपः' इत्यनेन अन्त्य अकारलोपः, अध्वर् य इति स्थिते "क्याच्छन्दसि" इत्यनेन उप्रत्ययः "अतो लोपः" इत्यनेनाकारलोपः अध्वर्यु इत्यस्य क्रदन्तत्वात् प्रातिपदिकसंज्ञायां द्वितीयाया एकवचने अम् विभक्तिः "अमि पूर्वः" इत्यनेन पूर्वरूपे अध्वर्युम् इति।

**(ग) पृतन्युम्** - आत्मनः पृतनमिच्छति विग्रहे "सुप आत्मनः क्यच्" इत्यनेन क्यच् प्रत्ययः अनुबन्धलोपः पृताना य इति स्थिते 'कव्यध्वरपृतनस्यर्चि लोपः' इत्यनेन अन्त्याकारलोपः "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायाम् "क्याच्छन्दसि" इत्यनेन उप्रत्ययः "अतो लोपः" इत्यनेनयकाराकारलोपः पृतन्यु इत्यस्य कृदन्तत्वात् प्रातिपदिकसंज्ञायां द्वितीयाया एकवचने अम् विभक्तिः "अमि पूर्वः" इत्यनेन पूर्वरूपे पृतन्युम् इति।

---

**विमर्श-** कव्यतायः।

सपूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन् मनूनाम्।
विवस्वता चक्षसा द्यामपश्च देवा अग्निं धारयन्द्र विणोदाम्॥ ऋग्वेद १-९६-२

अर्थ - उस अग्नि ने मनु के प्राचीन स्तुति युक्त मन्त्र से प्रसन्न होकर मानवीपूजा की सृष्टि की थी। उन्होंने आच्छादक तेज द्वारा आकाश और अन्तरिक्ष को व्याप्त किया है। देवों ने उन धनदाता अग्नि को दूत रूप में नियुक्त किया था।

अध्वर्युम्।

अध्वर्युं वा मधुपाणिं सुहस्त्यमग्निधं वा धृतदक्षं दमूनसम्।
विप्रस्य वा यत्सवनानि गच्छतोऽत आ योतं मधुपेयमश्विना॥ ऋग्वेद १०-४१-३

अर्थ - हे अश्विनीकुमारों में हाथ में मधुलेकर अध्वर्यु का कार्य करता हूँ। मेरे पास पधारो अथवा अग्धि नामक जो बलि पुरोहित दान करने के लिये उद्यत हैं उनके पास पधारो। यद्यपि तुम लोग किसी बुद्धिमान व्यक्ति यज्ञ में जा रहे हो तो भी मधुपान करने के लिए मेरे गृह पर आओ।

पृतन्युम्।

सचीव इन्द्रमवसे गृणुध्वमनानतं दमयन्तं पृतन्यूम्।
ऋभुक्षणं मघवानं सवृक्तिं भर्ता यो वज्रं नर्यं पुरुक्षुः॥ ऋग्वेद १०-७५-५

अर्थ - हे कर्मनिष्ठ पुरोहितों! कभी अवनत न होने वाले शत्रुओं का दमन करने वाले महान धनी सुन्दर स्तुति वाले और मनुष्य हित के लिये वज्र धारण करने वाले इन्द्र की शरण में अपनी रक्षा के लिये जाओ।

दधातेर्हिः। (७-४-४२)। तादौ किति। अभिहितम्। निहितम्।

जहातेश्च क्त्वि। (७-४-४३)। हित्वा। हाङ्स्तु हात्वा।

विभाषा छन्दसि। ७-४-४४। हित्वा शरीरम्। हात्वा वा। हीत्वा वा।

सुधितवसुधित नेमधित धिष्व धिषीय च। ७-४-४५।

सु वसु नेम एतत्पूर्वस्य दधातेः क्तप्रत्यये इत्वं निपात्यते। गर्भं माता सुधितं वक्षणासु। वसुधितमग्नौ। नेमधिता न पौंस्या। क्तिन्यपि दृश्यते। उत श्वेतं वसुधितिं निरेके। धिष्व वज्रं दक्षिण इन्द्र हस्ते। धत्स्वेति प्राप्ते। सुरेता रेतो धिषीय। आशीर्लिङ् इट्। 'इटोऽत्' घासीय इति प्राप्ते।

---

**शाङ्करी**- दधातेर्हिः। "घुमास्थागापाजहातिसां हलि" इत्यनेन ईत्वे प्राप्ते "दधातेर्हिः" हि इत्ययमादेशो विधीयते तादौ किति प्रत्यये परे। जहातेश्च। जुहोत्यादिगणपठित ओहाक् त्यागे धातोर्हलादौ क्ङिति आकारस्य इत् भवति। अतो हित्वा भवति। विभाषा छन्दसि। छन्दसि तु विकल्पेन इत्वं भवति। तेन इत्व पक्षे हित्वा शरीरम् तदभावे "घुमास्थागापा" इत्यादिना ईत्वे हीत्वा वा।

सुधित वसुधितनेमधित धिष्व धिषीय इत्येतानि छन्दसि निपात्यन्ते। चकारेण "विभाषा छन्दसि" इत्यतश्छन्दसि इत्यनुवर्तते। तेन सुधित, वसुधित, नेमधित इत्येतानि सु वसु नेम पूर्वस्य क्तप्रत्यये दधातेः इत्वम्, प्रत्ययस्य इडागमो वा निपात्यते छन्दसि। प्रत्ययस्य इडागमपक्षे, धाञ् धातोः "आतो लोप इटि च" इत्यनेन आकारलोपः सुधित इत्यत्र कुगतिप्रादयः इत्यनेन समासः। वसुधित इत्यत्र विशेषण कर्मधारय समासः। नेम शब्दः अर्ध शब्द पर्यायः। सामि इत्यत्र अर्द्धशब्दपर्यायः सामिशब्दः। अतो नेम शब्दपर्यायः सामिशब्दः। नेमधित शब्दे कर्मधारयसमासः इति सुबोधिनीकारः। सामि इति द्वितीया समासः इति न्यासकारः। सामीति

---

**तीर्था**- हित्वा शरीरम्। जुहोत्यादि गणपठित ओहाक् त्यागे धातोः "समानकतृकयोः पूर्वकाले" इत्यनेन क्त्वा प्रत्यये अनुबन्धलोपे "विभाषा छन्दसि" इति सूत्रेण विकल्पेन हि इत्यादेशे हित्वा इति। हि आदेशाभावे हात्वा इति वा। छान्दसत्वात् ईवाभावः "घुमास्थागापजहातिसां हलि" इत्यनेन ईत्वे हीत्वा इति।

तीर्था तु शाङ्करी व्याख्ययैव गतार्था।

सुघित वसुघितनेमघित.......

**सुधितम्**- जुहोत्यादिगणपठित धारणपोषणार्थक सु उपसर्गपूर्वकात् धा

**शाङ्करी-** तत्रार्थग्रहणमित्युक्तम् नेमधितशब्दे कर्मधारय इति नागेश भट्टः। धिष्व इत्यत्र लोट् लकारः मध्यमपुरुषस्यैकवचने "श्लौ" इत्यनेन प्राप्तद्विर्वचनाभावेऽनेन निपात्यते दधातेरित्वं प्रत्ययस्य थासः से इत्यनेन से आदेशे सर्वाभ्यावामौ इत्यनेन एकारस्य व आदेशः धातोरित्वं च निपात्यते। श्नाभ्यस्तयोरातः इत्यनेनाकारलोपः दधस्तथोश्च इत्यनेन भष्भावेन अभ्यास दकारस्य भष्भावेन धकारः। धिषीय इत्यत्र आत्मनेपदे उत्तमपुरुषस्यैकवचने इटोऽत् इत्यनेन अत्वं दधातेरित्वं च निपात्यते।

---

**तीर्था-** धातोः क्तप्रत्ययेऽनुबन्धलोपे धातोराकरस्य "सुधितवसुधितनेमधितधिष्वधिषीय च" इत्यनेन निपातनात् इकारे सु इत्यस्य धित इत्यनेन "कुगतिप्रादयः" इत्यनेन समासे "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकत्वात् सौ "अतोऽम्" इत्यनेन अमादेशे सुधितम् इति। प्रत्ययस्य निपातनादिडागम पक्षे "आतो लोप इटि च" इत्यनेन आकारलोपे सुधितिम् इति। लोके "दधातोर्हिः" इति सूत्रेण हि आदेशे सुहित इति।

**वसुधितम्**। जुहोत्यादिगणपठित धारणपोषणार्थकात् वसुपूर्वक धाधातोर्निष्ठा इति सूत्रेण क्त प्रत्ययेऽनुबन्धलोपे "सुधितवसुधितनेमाध्तिधिष्वधिषीय च" इति सूत्रेण निपातनात् इत्वे वसु इत्यस्य धित इत्यनेन "सह विशेषणं विशेष्येण बहुलम्" इति सूत्रेण कर्मधारय समासे "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकत्वात् सौ "अतोऽम्" इत्यनेन अमादेशे "अमिपूर्वः" इत्यनेन पूर्वरूपे वसुधितम् इति।

प्रत्ययस्य निपातनात् इडागमपक्षे "आतो लोप इटि च" इत्यनेन आकारलोपे वसुधितिम् इति। लोके दधातेर्हि इत्यनेन हि आदेशे सुहितम्।

**नेमधितम्** - जुहोत्यादिगण पठित धारणपोषणार्थकात् धा धातो निष्ठा इति सूत्रेण क्तप्रतययेऽनुबन्धलोपे धातोराकारस्य "सुधितवसुधितनेमधित०" इत्यादिना निपातनात् इत्वे नेम इत्यस्य धित इत्यनेन सह सामि इत्यनेन समासे (साम इत्यस्य अर्द्धशब्दपर्यायत्वात्)। तकारस्य इडागमपक्षे आकारस्य "आतो लोप इटि च" इत्यनेन आकारलोपे समासत्वात् प्रातिपदिकसंज्ञायाम् सौ "अतोऽम्" इत्यनेन अम् आदेशे "अमिपूर्वः" इत्यनेन अम् आदेशे नेमधितिम् इति।

---

**भावार्थ-**सु वसु नेम पूर्वं में होतो जुहोत्यादिगणपठित धारण पोषणार्थक धा धातु से पर में यदि क्त प्रत्यय हो तो धातु के आकार को इत्व अथवा क्त प्रत्यय इडागम का निपातन होता है वेद में तथा धा धातु से आत्मनेपद में लोट् लकार के उत्तमपुरुष एकवचन में धातु के आकार को इत्व अथवा प्रत्यय को इडागम तथा धातु द्वित्व के अभाव का निपातन करते हैं।

**तीर्था- धिष्व।** जुहोत्यादिगणपठितधारणपोषणार्थक धा धातोरात्मनेपदे लोट् लकारस्य मध्यमपुरुषस्यैकवचने थास् प्रत्यये तस्य "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायाम् "कर्तरि शप्" इत्यनेन शप् प्रत्यये तस्य "जुहोत्यादिभ्यः श्लुः" इत्यनेन श्लौ "श्लौ" इत्यनेन धातोर्द्वित्वे प्राप्ते "सुधितवसुधितनमेधितधिष्वधिषीय च" इत्यनेन निपातना तदभावे आकारस्येत्वं प्रत्ययस्येडागमः "थास से" इत्यनेन थासः से आदेशे "सवाभ्यां वामौ" इत्यनेन एकारस्य वादेशे षत्वे च धिष्व इति। लोके धातोर्द्वित्वे श्याऽम्यतोरातः इत्यनेन आकारलोपे दधस्तथोश्च इत्यनेन भष्भावे धत्व इति।

**धिषीय** - जुहोत्यादिगणपठित धारणपोषणार्थकात् धा धातोराशीर्लिङ् आत्मनेपदे च उत्तमपुरुषस्यैकवचने इट् प्रत्यये तस्य "लिङः सीयुट्" इत्यनेन सीयुडागमः अनुबन्धलोपः "इटः इटोऽत्" इत्यनेन अदादेशे "सुधितवसुधित०" इत्यादिना धातोरित्वं प्रत्ययस्येडागमोवानिपात्यते वा इडागमपक्षे "आतो लोप इटि च" इत्यनेन आकारलोपे धिषीय इति।

---

**विमर्श-** (क) दृशानामेकं कपिलं समानं तं हिन्वन्ति क्रतवे पार्याय।
गर्भं माता सुधितं वक्षणास्व वेनंतं तुषयन्ती बिभर्ति॥ ऋग्वेद १०-२७-१६

अर्थ- इन पूर्वोक्त दश अङ्गित अङ्गिरा लोगों में प्रसिद्ध पिंडत्व वर्ण वाले कपिल ऋषि हैं जो सामर्थ्य से प्रजापति के समान हैं। उन्हें अन्य अङ्गिरा लोग यज्ञ की साधना के लिए प्रेरित किये। उन्होंने प्रकृतिरूप माता (स्थित सूक्ष्मजल में) गर्भ स्थापित किया। प्रकृतिरूप माता (यह सम्यग ज्ञान के उपदेश के योग्य है) ने प्रसन्न होकर गर्भ धारण किया।

(ख) राये नु यं जज्ञतू रोदसी मे राये देवी धिषणा धाति देवम्।
अध वायुं नियुतः सश्चत स्वा उत श्वेतं वसुधितिं निरेके॥ ऋग्वेद ७-९०-३

अर्थ - आकाश और पृथिवी ने जिस वायु को धन के लिये शीघ्र उत्पन्न किया है। उस दानादि गुण विशिष्ट वायु को धन के लिए प्रकाशमान स्तुति को अपना विषय बनाने के पर वायु के रथ को खींचने वाले अश्व (विशुद्ध दारिद्र्य की स्थिति में) धनदाता वायु को हमारे यज्ञ स्थल पर पहुँचा रहे हैं।

(ग) नेमधितम् - (ऋग्वेद १०-९३-१३)
वावर्त येषां राया युक्तैषां हिरण्ययीं। नेमधिता न पौंस्या वृथेव विष्टान्ता॥

अर्थ- जिनसे हम धन की इच्छा करते हैं उनके लिये अत्यन्त उत्तमस्तोत्र का बार-बार पारायण करते हैं। जैसे युद्ध के सैनिक बार-बार अग्रसर होते हैं अथवा जैसे घटी चक्र क्रमबद्ध होकर आगेपीछे चलता है वैसे ही हमारे स्तोत्र भी हैं।

'अपो भि'। (७-४-४८)। (अपस्तकारः स्याद् भादौ प्रत्यये परे अद्भिः)

(वा) भासश्छन्छसीति ववत्तव्यम्। माद्भिः शरद्भिः। स्ववः स्वतवसोरुषसश्चेष्यते। स्ववद्भिः। अवतेरसुन् शोभनमवो येषां ते स्ववसस्तैः। तु इति सौत्रोधातुस्तस्मादसुन्। स्वं तवो येषां तैः स्वतवद्भिः। सगुषद्भिरजायथाः। मिथुनेऽसिः। वसेः किच्चेत्यसिप्रत्यय इति हरदत्तः। पञ्चपादीरीत्या तु उषः किदिति प्राग्व्याख्यातम्।

---

**शाङ्करी**- अप इति षष्ठ्यन्तम् भीति सप्तम्यन्तम्। "अच उपसर्गात्तः" इति सूत्रात् त इति प्रथमान्तं पदमनुवर्तते। अत अप इत्यस्याङ्गस्य तकारादेशो भवति भकारादौ प्रत्यये परे। अद्भिः। अलोऽन्त्य इति निर्देशात् अपः पकारस्य तकारः भकारादौ प्रत्यये परे। मासश्छन्दसीति। पदन्नोमास् इति सूत्रात् मास इति अदन्तस्य हलन्त मास् आदेशः। माद्भिः। शरद्भिः। वार्तिकेन तकारः तस्य "झलां जश् झसि" इत्यनेन जश्त्वम्। "स्ववः स्वतवसोरुषश्चेष्यते" स्ववस् स्वतवस् उषस् शब्दानां सकारस्य तकारादेशो भवति भादौ प्रत्यये परे छन्दसि। स्ववद्भिः। सूपसर्गपूर्वकात् रक्षणाद्यर्थकात् अवधातोरसुन् प्रत्ययः अतः स्ववस् शब्द सकारस्य भिस् प्रत्यय परे तकारः जश्त्वेन दकारः। स्वतवद्भिः। स्वन्तवो येषां ते स्वतवसः तैः स्वतवद्भिः। सकारस्यतकारः जश्त्वञ्च। समुषद्भिरजायथाः। सम् उपसर्गपूर्वकात् उषस्शब्द सकारस्य तकारो जश्त्वं च भिस् प्रत्यये परे। उणादौ सूत्रमस्ति ६६२ मिथुनेऽसिः पूर्ववच्च सर्वम् इति। तत्र

---

**विमर्श-(घ)** धिष्व - अस्माकं मद्यान्तर्म स्तोमं धिष्व महामह।
अस्माकं ते सवना सन्तु शंतमा मदाय द्युक्ष सोमपाः॥

ऋग्वेद ८-३३-१५

अर्थ - हे महापूज्य इन्द्र आज तुम हमारे समीप के मेध्यातिथि के सोम को धारण करो। हे दीप्त सोम को पीने वाले इन्द्र तुम्हारी मत्तता के लिये हमारे यज्ञ कल्याणकारी होवें।

(ङ) धिषीय - तैत्तिरीय संहिता - १-६-४ पृष्ठ ३७

विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेय सोमस्याहं देवयज्यया सुरेता रेतो धिषीय त्वष्टुरहं देवयज्यया पशूनाᳪरूपं पुषेयं देवानां-पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूयासं।

**शाङ्करी**– मिथुन शब्दार्थमाह – उपसर्गविशिष्टे। धातुर्मिथुनं तत्रासुनोऽपवादोऽसिः स्वरार्थः। यस्य धातोर्यत् कार्यम् असुन्प्रत्ययेन उक्तं तदत्रापि असि प्रत्ययेऽपि भवति। वेदभाष्ये आचार्यः सायणः समुपसर्गपूर्वकात् उष् दाहे धातोः शतृ प्रत्ययं विधाय समुषद् शब्दं पञ्चपादी रीत्या उणादिरीत्या उषः कित् इति सूत्र रीत्या पूर्वं व्याख्यातवान्।

---

**तीर्था**– **माद्भिः** – मास् शब्दात् भिस् विभक्तिः "पद्दन्नोमास् हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु" इति सूत्रेण भास शब्दस्य मास् आदेशः सकारस्य "मासश्छन्दसीति वक्तव्यम्" इति वार्तिकेन भिस् प्रत्यये परे तकारः "झलां जश् झशि" इति सूत्रेण जश्त्वेन दकारः माद्भिः इति साधुः।

**स्ववद्भिः** – सूपसर्गपूर्वकात् अवधातोरसुन् प्रत्ययः उकारनकारयोरित्संज्ञायाम् उपसर्गस्योकारस्य यणि स्ववस्शब्दाद् भिस् विभक्तिः सकारस्य "स्ववः स्वतवसोरुषसश्चेष्यते" इति वार्तिकेन सकारस्य तकारः "झलां जश् झशि" इति सूत्रेण जश्त्वे स्ववद्भिः।

**स्वतवद्भिः** – स्वं तवो येषां तैः स्वतवद्भिः। तु सौत्रो धातुः तस्माद् असुन् प्रत्यये उकारनकारयोरित्संज्ञायां धातोरुकारस्य गुणेऽवादेशे स्वतवस् शब्दात् भिस् विभक्तिः सकारस्य "स्ववः स्वतवसोरुषसश्चेष्यते" इत्यनेन सकारस्य तकारे "झलां जश् झशि" इत्यनेन जश्त्वेन दकारे स्वतवद्भिः इति।

**समुषद्भिः** – सम् उपसर्गपूर्वका उषस् शब्दात् भिस् विभक्तिः तस्मिन् परे सकारस्य "स्ववः स्वतवसोरुषसश्चेष्यते" इति वार्तिकेन सकारस्य तकारे "झलां जश् झशि" इत्यनेन जश्त्वेन दकारे रुत्वे विसर्गे समुषद्भिः इति।

---

**भावार्थ**–भास् शब्द के सकार को तकार होता है, भकारादि प्रत्यय पर में हो तो वेद में स्ववस् सु उपसर्गपूर्वक अव धातु से असुन् प्रत्यय होकर भादि प्रत्यय के पर में रहने पर सकार को तकार होता है। इसी प्रकार स्वशब्द पूर्वक तु (सौत्र) धातु से असुन् प्रत्यय के सकार को तकार और जश्त्व होने पर स्वतवद्भिः। एवं सम् उपसर्ग पूर्वक उषस् शब्द के सकार को तकार होता है और तकार को "झलां जश् झशि" से जश्त्व होकर समुषद्भिः बनता है। हरदत्त ने पदमञ्जरी में सम् उपसर्गपूर्वक वस् धातु से असुन् प्रत्यय करके और उसको वसेः किच्च से कित् करके "वचिस्वपि यजादीनां किति" से वकार को सम्प्रसारण और पूर्वरूप करके बनाते हैं। किन्तु वर्तमान उणादि से वसे किच्च उपलब्ध नहीं है। अतः इसीलिये दीक्षित जी ने उसः कित् उणादि ३७३ सूत्र से पूर्व में सिद्ध किये हैं।

न कवतेर्यङि। ७-४-६३। कवतेरभ्यासस्य चुर्त्वं स्याद्यङि। कोकूयेत।

कृषेश्छन्दसि।७-४-६४।यङि अभ्यासस्य चुत्वं न। करीकृष्यते।

दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्तेऽलर्ष्याऽऽपनीफणत् संसनिष्यदत् करिक्रत् कनिक्रदत् भरिभ्रद्दविध्वतोदविद्युतत् तरित्रतः सरीसृपतं वरीवृजन् मर्मृज्याऽऽगनीगन्तीति च।(७-४-६५)।एतेऽष्टादश निपात्यन्ते।आद्यास्त्रयो धृङो धारयतेर्वा। भवतेर्यङ्लुगन्तस्य गुणाभवः। तेन भाषायां गुणो लभ्यते। तिजेर्यङ्लुगन्तात्तङ्।इयर्तेर्लेटि हलादिशेषापवादो रेफस्य लत्वमित्वाभावश्च निपात्यते।अलर्षि युध्मखजकृत्पुरन्दम्। सिपानिर्देशो न तन्त्रम्। अलर्ति दक्ष उत। फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीगागमो निपात्यते। अन्वा पनीफणत्। स्यन्देः संपूर्वस्य यङ्लुकि शतरि अभ्यासस्य निक्। धातु सकारस्य षत्वम्। करोतेर्यङ्लुगन्तस्याभ्यासस्य चुत्वाभावः। क्रन्देर्लुङिच्लेरङ्द्विवचनमभ्यासस्य चुत्वाभावो निगागमश्च। कनिक्रदज्जनुषम्। अक्रन्दीदित्यर्थः। विभर्तेभ्यासस्य जश्त्वाभावः। वि यो भरिभ्रदोषधीषु। ध्वरतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य विगागमो धातोर्ऋकारलोपश्च। दविध्वतो रश्मयः सूर्यस्य। द्युतेरभ्यासस्य संप्रसाणाऽभावोऽत्वं विगागमश्च। दविद्युतद्दीद्यच्छोशुचानः। तरतः शतरि श्लौ अभ्यासस्य रिगागमः। सहोर्जा तरित्रतः। सृपेः शतरि श्लौ द्वितीयैकवचने रीगागमोऽभ्यासस्य। वृजेः शतरि श्लावभ्यासस्य रीक्। मृजेर्लिटि णल् अभ्यासस्य रुक् धातोश्च युक्। गमेराङ्पूर्वस्य लटि श्लावभ्यासस्य चुत्वाभावो नीगागमश्च। वक्ष्यन्ती वेदागनीगन्ति कर्णम्।

---

शाङ्करी- एतेऽष्टादश - दाधर्ति इत्यादय आगनीगन्तीत्यन्ताश्छन्छसि निपात्यन्ते। तेषु आद्यास्त्रयो दाधर्तीत्यादयधृङ् अवध्वसनेभ्वादिः धृङ् अवस्थाने तुदादिर्वा गृह्यते। धातोर्व्यत्ययेन शपः श्लुः श्लौ णिच् तस्य लुक् अभ्यासस्य दीर्घत्वं परस्मैपदत्वञ्च निपात्यते। यङ्लुक्पक्षेऽभ्यासस्य रुगागमापवादो दीर्घत्वमपि निपात्यते।

२. दर्धर्ति - इत्यत्र लटः तिप् प्रत्यये "तुदादिभ्यः शः" इत्यनेन प्राप्त शप्रत्ययस्य शपो वा स्थाने "बहुलं छन्दसि" इत्यनेन श्लु विकरणे "श्लौ" इत्यनेन

शाङ्करी- द्वित्वे धृधृति इति स्थिते अभ्यासादिकार्ये निपातनात् अभ्यासस्य रुगागमे "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे रपरे दर्धर्ति इति।

३. दर्धर्षि – धृङ् धातोः मध्यमपुरुषस्य एकवचने सिप् प्रत्यये श्लुः "श्लौ" इत्यनेन द्वित्वेऽभ्यासादिकार्ये अभ्यासस्य रुगागमे "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे रपरे "आदेश प्रत्यययोः" इत्यनेन षत्वे दर्धर्षि इति।

४. बोभूतु – भूधातोर्यङ्लुगन्तस्य लोटि गुणाभावो निपात्यते। ननु भूसुवोतिङि इत्यननैव गुणनिषेधे सिद्धे गुणाभाव निपातनं व्यर्थमिति सत्यम् इदमेव निपातनं ज्ञापयति यङलुगन्तादन्यत्र गुणनिषधो न भवति इति तेन लोके बोभवीति इत्यत्र गुणः सिद्धः।

५. तेतिक्ते – अत्र तिज निशाने भ्वादिगणीयधातोः यङलुगान्त् द्वित्वं निपात्यते फलत आत्मनेपदं सिध्यति। यङ्लुगन्तादन्यत्र आत्मनेपदं न भवतीति ज्ञापनार्थम्।

६. अलर्षि – अत्र जुहोत्यादिगण पठित ऋ गतौ धातोर्लटः सिप् शपः श्लौ अभ्यासस्य हलादिःशेषापवादो रेफस्य लत्वम् अर्तिपिपर्त्योश्च इत्यनेनाभ्यासस्य प्रासेत्वस्याभावोऽपि निपात्यते। अत्र सिपा निर्देशो न विवक्षितः, अलर्ति दक्ष उत इत्यत्र तिपापि निर्देशस्य दृष्टत्वात्।

७. आपनीफणत् – आङ् पूर्वक भ्वादिगणपठित गत्यर्थकफण धातोर्यङ्लुगन्तस्य शतरि "प्रत्ययलोपे प्रत्ययलक्षणम्" इत्यनेन यङन्तं मत्वा "सन्यङो" इत्यनेन द्वित्वे "पूर्वोऽभ्यास" इत्यनेनाभ्याससंज्ञायां "हलादि शेषः" इत्यनेनादि हलशेषे अभ्यासे चर्चः इत्यनेन चर्त्वे आपफण् अत् इति स्थितौ शतृप्रत्ययपरे अभ्यासस्य निपातनात् नीगागमे आपनीफणत् इति।

८. सं सनिष्यदत् – भ्वादिगणपठित प्रसवार्थक संपूर्वक स्यन्द्धातोर्यङ्प्रत्ययः तदन्तात् "सन्यङो" इत्यनेन द्वित्वे शतृ प्रत्ययेऽभ्यासस्य निगागमो धातुसकारस्य "आदेशप्रत्यययोः" इत्यनेन षत्वे "अनिदितां हल उपधायाः क्ङिति" इत्यनेन नकारस्य लोपे "मोऽनुस्वारः" इत्यनेन अनुस्वारे सं सनिष्यदत् इति।

९. करिक्रत् – कृधातोयङ् लुगन्तात् शतृप्रत्ययः "सन्यङो" इत्यनेन द्वित्वे कृ कृ अत् इति स्थितौ गुणो यङ्लुकोः इत्यनेन अभ्यासस्य गुणे रपरे हलादिशेषः इत्यनेनादिहल शेषे निपातनात् अभ्यासस्य रिगागमे धातोः ऋकारस्य निपातनात् गुणाभावः "इको यणचि" इत्यनेन यण् करिक्रत् इति।

१०. कनिक्रदत् – चुरादिगणपठितसातत्यार्थकात् क्रन्दुधातोः लुङ् लकारे तस्य प्रथमपुरुषस्यैकवचने तिप् प्रत्ययः "इतश्च" इत्यनेन इकारलोपः "च्लि लुङि"

शाङ्करी- इत्यनेन च्लि प्रत्यये च्लेरङ् द्विवचनमभ्यासस्य चुत्वाभावो निगागमश्च निपात्यते। अक्रन्दीत् इति लोके।

११. भरिभ्रत् – जुहोत्यादिगणपठित धारणपोषणार्थक भृञ् धातोर्यङ्लुगन्तात् शतृ प्रत्यये सन्यङो इत्यनेन धातोर्द्वित्वे गुणो यङलुको: अभ्यासस्य गुणे अभ्यासादिकार्ये भभृअत् इति स्थिते "अभ्यासे चर्चः" इत्यनेन प्रास अभ्यासस्य जश्त्वस्याभावः अभ्यासस्य रिक् आगम धातोर्गुणाभावश्च निपात्यते "इको यणचि" इत्यनेन यणि कृते भरिभ्रत् इति।

१२. दविध्वतः – भ्वादिगणपठित ध्वृ हूर्च्छने (कुटिली भवनम्) धातोः पौनः पुन्येऽर्थे "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यनेन यङ्प्रत्यये यङोऽङि इत्यनेन यङो लुकि शतृ प्रत्यये अनुबन्धलोपे "प्रत्ययलोपे प्रत्ययलक्षणम्" इत्याश्रित्य "सन्यङो" इत्यनेन द्वित्वे ध्वृध्वृ अत् इति स्थितौ प्रथमस्याभ्यासंज्ञा गुणो यङलुको: इत्यनेन अभ्यासस्य गुणे रपरे ध्वर् ध्वृ अत् इति स्थितौ "हलादिशेषः" इत्यनेन आदि हल् शेषे "अभ्यासे चर्चः" अभ्यासस्य जश्त्वेन निपातनात् अभ्यासस्यविक् आगम ध्वृ इति ऋकारस्य लोपः प्रातिपदिकत्वात् जस् विभक्तिः शतृ प्रत्ययः उगित् अतः "उगिदचां सर्वनामस्थानेऽधातोः" इत्यनेन नुमागमप्रासे "नाभ्यस्ताच्छतुः" इत्यनेन निषेधे सस्य रुत्वे विसर्गे दविध्वतः इति।

१३. दविद्युतत् – भ्वादिगणपठित दीप्त्यर्थक द्युतधातो यङलुगन्तात् "यङोऽचि" इत्यनेन यङोलुक् ततः शतृ प्रत्ययेऽनुबन्धलोपे द्युत् अत् इति स्थितौ सन्यङो इत्यनेन द्वित्वे पूर्वस्याभ्यास संज्ञां द्युति स्वाप्योः सम्प्रसारणम् इत्यनेन अभ्यासस्यद्युत् इत्यस्य सम्प्रसारणे प्राप्ते किन्तु निपातनात् सम्प्रसारणाभावे हलादिशेषः इत्यनेन आदि हल शेषे दुद्युत् अत् इति स्थिते निपतनात् अभ्यासस्य अत्वे विक् आगमश्च दविद्युत् अत् दविद्यतत् इति।

१४. तरित्रतः – भ्वादिगणपठित तृ संत्तरणप्लवनधातोः शतृ प्रत्यये "कर्तरिशप्" इत्यनेन शप् प्रत्यये "व्यत्ययो बहुलम्" इत्यनेन श्लु "श्लौ" इत्यनेन द्वित्वे तृ तृ अत् इति स्थितौ पूर्वस्य अभ्याससंज्ञा "उरत्" इत्यनेनाभ्यासस्य अत्वे "उरण रपर" इत्यनेन रपरे "हलादिशेषः" इत्यनेन आदिहलशेषे निपातनात् अभ्यासस्य रिक् आगमे तरितृ अत् इति स्थिते "इको यणचि" इत्यनेन यणि तरित्रत् प्रथमाया बहुवचने जस् विभक्तौ "उगिदचां सर्वनामस्थानेऽधातोः" इत्यनेन नुमागम प्रासे "नाऽभ्यस्ताच्छतुः" इत्यनेन निषेधे सस्य रुत्वे विसर्गे तरित्रतः।

**शाङ्करी**– १५. सरीसृपतम् – भ्वादिगणीय सृ प्लृ गतौ धातोः शतृ प्रत्ययः शपः "व्यत्ययो बहुलम्" इत्यनेन श्लुः श्लौ इत्यनेन. द्वित्वे सृप् सृप् अत् इति स्थितौ अभ्यासंज्ञा उरत् इत्यनेन अत्वे रपरे हलादिशेषः इत्यनेन आदिहल शेषे स सृप् अत् इति स्थिते द्वितीयाया एकवचने अम् विभक्तिः "उगिदचां सर्वनामस्थानेऽधातो" इत्यनेन नुमागमे प्राप्ते "नाभ्यस्ताच्छतुः" इत्यनेन निषेधे अभ्यासस्य रीकागमे सरीसृपतम् इति।

१६. वरीवृजत् इति – रुधादिगणीय वर्जनार्थक वृज् धातो "रुधादिभ्यः श्नम्" इत्यनेन श्नम् स्थाने "व्यत्ययो बहुलम्" इत्यनेन श्लुः "श्लौ" इत्यनेन द्वित्वे वृज्वृज्अत् इति स्थिते उरत् इत्यनेन अभ्यासस्य अत्वे रपरे "हलादिः शेषः" इत्यनेन आदि हल शेषे निपातनात् अभ्यासस्य रीकागमे वरीवृजत् इति।

१७. मर्मृज्य– अदादिगणीय मृज् शुद्धौ धातोर्लिट्लकारः लिटः स्थाने प्रथमपुरुषस्य एकवचने तिप् प्रत्यये तस्य स्थाने णल् आदेशे अनुबन्धलोपे मृज् अ इति स्थिते "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वे पूर्वस्य अभ्याससंज्ञा "उरत्" इत्यनेन अत्वे रपरे "हलादिः शेषः" इत्यनेनादिहलशेषे निपातनात् अभ्यासस्य रुकागमे युकागमे च मर्मृज्य इति।

१८. आगनी गन्ति – आङ्पूर्वक भ्वादिगणीय गम्लृ गतौ धातौर्लट् लकारः प्रथमपुरुषस्यैकवचने लट् लकारस्य स्थाने तिप् प्रत्ययः शपः स्थाने श्लुः "श्लौ" इत्यनेन धातोर्द्वित्वे आ गम् अम् ति इति स्थिते "पूर्वोऽभ्यासः" इत्यनेन अभ्यासंज्ञा "हलादिः शेषः" इत्यनेन आदि हलशेषे "कुहोश्चुः" इत्यनेन प्राप्त अभ्यासचुत्वस्य निपातनात् अभावे निपातनादेव अभ्यासस्य नीकागमे अनुबन्धलोपे आगनी गम् ति इति स्थितौ "मोऽनुस्वारः" इत्यनेन अनुस्वारः "अनुस्वारस्य ययि परसवर्णः" इत्यनेन मकारस्य परसवर्णे आगनीगन्ति इति।

---

**विमर्श**–१. दाधर्ति, २. दधर्ति अन्वेष्टव्य –

३. दधर्षि – दृह्ला चिद्या वनस्पतीन्क्ष्मया दर्धर्ष्योजसा।
यत्ते अभ्रस्य विद्युतो दिवो वर्षन्ति वृष्टयः॥ ऋग्वेद ५-८४-३

अर्थ – हे पृथिवी जब भी विद्योतमान अन्तरिक्ष से तुम्हारे सम्बन्धी मेघ वृष्टि करते हैं तब तुम दृढ भूमि के साथ वनस्पतियों को धारण करती हो।

४. बोभोतु अन्वेष्टव्य –

५. तेतिक्ते– दुहं जिंघांसन्ध्वर संमनिन्द्रात्तेतिक्ते तिग्मातुजसे अनीका।
ऋणा चिद्यत्र ऋणयान उग्रो दूरे अज्ञाता उषसो बबाधे॥
ऋग्वेद ४-२३-७ हिन्दी पृ० ४९१

**विमर्श**- अर्थ - द्रोह करने वाली हिंसा करने वाली तथा इन्द्र को जानने वाली राक्षसी को मारने के लिए पहले से ही तीक्ष्ण आयुधों को अत्यन्त तीक्ष्ण करते हैं। ऋण भी हम लोगों को उषाकाल में बाधित करता है। ऋण विनाशक बलवान इन्द्र उन ऊषाओं को दूर से ही अज्ञातभाव से पीड़ित करते हैं।

६. अलर्षि -

क्वे॑यथ॒ क्वेद॑सि पुरु॒त्रा चि॒द्धि ते॒ मनः॑

अल॑र्षि युध्म खजकृत्पुरन्दर प्र गाय॒त्रा अ॑गासिषु॥ ऋग्वेद ८-१-७

अर्थ - हे इन्द्र! तुम कहाँ गये हो, कहाँ हो, तुम्हारा मन नाना दिशाओं में बहुत से यजमानों के यहां रहता है। युद्धकुशल और युद्धकारी पुरन्दर आओ। स्तुति करने वाले तुम्हारी स्तुति कर रहें हैं।

७. आपनीफणत् -

उ॒त स्य वा॒जी क्षिपणिं तु॒रण्यति ग्र॒वीयां ब॒द्धो अ॑पिक॒क्ष आ॒सनि।

क्रतुं दधि॒क्रा अनु॒ स॒न्तवीत्वत्पथामङ्क्स्यन्वा॒पनीफणत्॥ ऋग्वेद ४-४०-५

अर्थ - वह अश्वरूप देव कण्ठ प्रदेश में कक्षप्रदेश में और मुखप्रदेश में बद्ध होते हैं। एवं बद्ध होकर पैदल शीघ्र गमन करते हैं। दधिकादेव अधिक बलवान होकर यज्ञाभिमुख कुटिल मार्गों का अनुसरण करके सर्वत्र गमन करते हैं।

७.(ख) आपनीफणत् - मैत्रायणी संहिता

ए॒ष स्य व्रा॒जी क्षि॒पणिं तु॒रण्यति ग्री॒वायां॒ ब॒द्धो अ॒पिप॒क्ष आ॒सन्।

क्रतुं॒ दधि॒क्रा मनु स॒ꣳसनि॒ष्यदत् ष॒थामङ्काꣳस्यन्वा॒पनी॒फणत्॥ मै०सं०१-११-२-१३

८. ससनीष्यदत् (मै०संहि० १-११-२) पृ० ९६

ए॒ष स्य वा॒जी क्षि॒पणिं तु॒रण्यति ग्री॒वायां॒ ब॒द्धो अ॒पिप॒क्ष आ॒सन्।

क्रतुं॒ दधि॒क्रामनु॒ स॒ꣳ सनि॒ष्यदत् ष॒थामङ्काꣳ स्यन्वा॒पनी॒फणत्॥

९. करिक्रत् ऋग्वेद १-१३१-३ हिन्दी पृष्ठ ८०

वि त्वा ततस्रे मिथुना अवस्यवो व्रजस्य साता गव्यस्य नि॒ः सृज॒ः सक्षन्त इन्द्र नि॒ःसृजः।

य॒द्गव्यन्ता॒ द्वा जना॒ः स्वर्यन्ता समूहसि।

आ॒विष्करिक्रद्वृषणं सचा॒भुवं॒ वज्रमिन्द्र सचा॒भुवम्॥

अर्थ - हे इन्द्र! तुम्हारे सेवक निष्पाप यजमान सस्त्रीक तुम्हारी तृप्ति की इच्छा से बहुसंख्यक गोधन की प्राप्ति के लिये बहुत हव्यदान करते हुए तुम्हारे

**विमर्श-** उद्देश्य से यज्ञ का विस्तार करते हैं। वे गोधन चाहते हैं और स्वर्गप्राप्ति के लिये उत्सुक हैं। तुम उनको अभीष्टफल प्रदान करो। इन्द्र तुम समर्थ हो तुम शत्रुवधादिकार्य में समर्थ अपने साथ ही उत्पन्नवज्र का आविष्कार किया है।

१०. कनिक्रदत् – एवेन सद्यः पयेति पार्थिवं मुहर्गी रेतो वृषभः कनिक्रद्दधदेतः कनिक्रदत्। एवेंन सद्यः पर्येति पार्थिवं मुहुर्गी रेतो वृषभः कनिक्रदत् दधद्रेतः कानिक्रदत्।

शतं चक्षाणो अक्षभिर्देवो वनेषु तुर्वणिः।

सदो दधान उपरेषु सानुष्वग्निः परेषु सानुषु॥ ऋग्वेद १-१२८-३॥ हिन्दी ५४ भाग २

अर्थ – सदा गायें या स्तुति किये जाने वाले, हविः सम्पन्न अभीष्ट फलदाता और सामर्थ्यशाली अग्निशब्द करके जाते हुए तुरन्त पार्थिव वेदी के चारों ओर शब्द करके आते हैं। अग्निदेव स्तोत्र ग्रहण करके अग्रस्थानीय शिखा द्वारा चारों ओर प्रकाशित हो रहे हैं। उच्चस्थानीय अग्नि उत्तम यज्ञ में तुरन्त आते हैं।

११. भरिभ्रत् – ऋग्वेद २-४-४ हिन्दी पृ० ४५९

अस्य रण्वा स्वस्येव पुष्टिः संदृष्टिरस्य हियानस्य दक्षोः।

वि यो भरिभ्रदोषधीषु जिह्वामत्यो न रथ्यौ दोधवीति वारान्॥

अर्थ – अपने शरीर की पुष्टि करने के सदृश इस अग्नि के शरीर की पुष्टि करना भी रमणीय है। जिस समय अग्नि चारों ओर फैलते और काष्ठ को भष्म करते हैं उस समय उनका शरीर अत्यन्त सुन्दर हो जाता है। जैसे रथ का अश्व वार वार पूँछ कंपाता है वैसे ही अग्नि भी काटों पर शिखा कँपाते हैं।

१२. दविध्वत् – ऋग्वेद ४-१३-४ हिन्दी पृष्ठ ४३१

वहिष्ठेभिर्विहरन्यासि तन्तुमवव्ययन्नसितं देव वस्म!

दविध्वतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो अप्स्वन्तः॥ (४.१३-४)

अर्थ – हे द्युतिमान सूर्य तुम जगन्निवार्हक रस को ग्रहण करने के लिए तन्तुस्वरूप रश्मिसमूह को विस्तारित करते हो, कृष्णावर्णा रात्रि तिरोहित करते हो और अत्यन्त भारवहन समर्थ अश्वों द्वारा गमन करते हो। कम्पन युक्त सूर्य की रश्मियाँ अन्तरिक्ष के मध्य में स्थित चर्मसदृश अन्धकार को दूर करें।

१३. दविद्युतत् – ऋग्वेद ६-१६-४५ हिन्दी पृष्ठ ३८६

उदग्ने भारत द्युमदजस्रेण दविद्युतत्। शोचाविभाह्यजर।

अर्थ – हे हव्यवाहक अग्नि! तुम अत्यन्त उर्ध्वतेज होकर दीप्तिमान होओ। हे जरारहित अग्नि तुम निरन्तर तेज से प्रकाशित होओ। तुम पहले उदीप्त होओ उसके पश्चात् अपने तेज से सम्पूर्ण जगत् को प्रकाशित करो।

ससूवेति निगमे। ७-४-७४।

सूतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चात्वं निपात्यते। गृष्टिः ससूव स्थविरम्। सुषुवे इति भाषायाम्।

बहुलं छन्दसि। (७-४-७८)।

अभ्यासस्य इकारः स्याच्छन्दसि। पूर्णा विवष्टि। वशेरेतद्रूपम्।

---

शाङ्करी- ससूवेति निगमे। ७-४-७४। अस्मिन् सूत्रे "भवतेरः" इति सूत्रात् अः इति "व्यथो लिटि" इत्यतः लिटि इति, अत्र "लोपोऽभ्यासस्य" इत्यतः अभ्यासस्य

---

**विमर्श-** १४. तरित्रतः -

उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः।

श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः॥ ऋग्वेद ४-४०-३ हिन्दी पृष्ठ ५६५

अर्थ - पक्षीगण जिस तरह से पक्षियों की गति का अनुसरण करते हैं, उसी तरह से सब वेगवान् लोग त्वरायुक्त और आकांक्षावान् दधिक्रा देव की गति का अनुसरण करते हैं। श्येन पक्षी की तरह द्रुतगामी और त्राणकारी दधिक्रा के उस प्रदेश के चारों तरफ एकत्र होकर अन्न के लिए सब गमन करते हैं।

१५. सरीसृपतम् अन्वेष्टव्य

१६. वरीवृजत्- ऋग्वेद ७-२४-४। हिन्दी पृष्ठ १५८ भाग ५

आनो विश्वाभिरूतिभिः सजोषा ब्रह्म जुषाणो हर्यश्व याहि।

वरीवृजत्स्थविरेभिः सुशिप्रास्मे दधद्वृषणं शुष्ममिन्द्रः॥

अर्थ - हे हरि नामक अश्ववाले और शोभन हनुवाले इन्द्र तुम सब प्रकार की रक्षाओं के साथ वृद्ध मरुतों के संग शत्रुओं को मारते हुए हमें अभीष्टवर्षी तथा बलवान् पुत्र देते हुए एवं स्तोत्र सेवा करते हुए हमारी ओर आओ।

१७. मर्मृज्य - अन्वेष्टव्य

१८. आगनीगन्ति - ऋग्वेद ६-७५-३ हिन्दी पृष्ठ ५१ भाग ५

वक्ष्यन्ती वेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना।

योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती॥

अर्थ - धनुष की यह ज्या युद्ध की वेला में युद्ध से पार ले जाने की इच्छा करके मानो प्रिय वचन बोलने के लिए ही धनुर्धारी के कान पास आती है। जैसे स्त्री प्रिय पति का आलिङ्गन करके वात करती है वैसे ही ज्या भी बाण का आलिङ्गन करके ही शब्द करती है।

**शाङ्करी-** इति चानुवर्तते। अत आह मूले सूत्रवृत्तौ सूतेर्लिटि इत्यादि वृत्तौ। ससूव इति। षूङ् प्राणि प्रसवे दिवादिगणीय धातोरादि षकारस्य "धात्वादे षः सः" इत्यनेन सत्वे उकारस्येत्संज्ञालोपाभ्यां निवृत्तौ ङित्वादात्मनेपदस्य स्थाने परस्मैपदे लिट् लकारस्य स्थाने तिप् प्रत्यये तिपः स्थाने "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन णलादेशेऽनुबन्धलोपे निपातनात् वुगागमे "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वे पूर्वस्य अभ्यास संज्ञा "हलादि शेषः" इत्यनेन आदि हल् शेषे ह्रस्वः इत्यनेन अभ्यासस्य ह्रस्वे निपातनात् अत्वे ससूव इति। नागेशस्य मते ससुव इति दाधर्ति इत्यादि सूत्रे एव पाठ उचितः।

बहुलं छन्दसि। ७-४-७८।

अत्र सूत्रे "भृञामित्" (७-४-७६) इति सूत्रात् इत् इति, निजां त्रयाणां गुणः श्लौ इति सूत्रात् श्लौ इति, अत्र "लोपोऽभ्यासस्य" ७-४-५८। इति सूत्रात् अभ्यासस्य इति चानुवर्तते। अतोऽर्थो भवति वेदे अभ्यासस्य बहुलम् इकारादेशो भवति श्लौ। विवष्टि अदादिगणीय वशकान्तौ धातोर्लटि तिपि शपः बहुलम् श्लुः "श्लौ" इत्यनेन धातोर्द्वित्वे वश् वश् ति इति स्थिते "पूर्वोऽभ्यासः" इत्यनेनाभ्याससंज्ञा "हलादिः शेषः" इत्यनेन आदि हल शेषः व वश् ति इति स्थिते "बहुलं छन्दसि" इत्यनेन अभ्यासस्य इकारे "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यनेन शकारस्य षत्वे ष्टुत्वे च विवष्टि इति।

---

**विमर्श-** (क) गृष्टिः ससूव स्थविरं तवागामनाधृष्य वृषभं तुम्रमिन्द्रम्।
अरील्हं वत्सं चरथाय माता स्वयं गातुं तन्वं इच्छमानम्॥

अर्थ - एक वार व्यायी हुई गौ जैसे वत्स प्रसव करती है इन्द्र की माता अदिति अपनी इच्छा संचरण करने के लिये इन्द्र का प्रसव किया इन्द्र किस प्रकार के हैं? अवस्था में वृद्ध प्रभूत बलशाली अनभिभवनीय अभीष्ट दाता प्रेरक अपराजित स्वयं गमनक्षम शरीराभिलाषी हैं।

(ख) देवो वो द्रविणोदाः पूर्णां विवष्ट्यासिचम्।
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते॥ ऋग्वेद ७-१६-११

अर्थ - हे धनदाता अग्निदेव! तुम्हारे उद्देश्य से दी जाने वाली हवि से पूर्ण सुक सोम की कामना करते हैं। अतः तुम सोम द्वारा चमस को पूर्ण करो सोम से पात्र को भरकर अग्नि को (पुराहिताग्नि को) दो तभी वे स्वीकार करेंगे।

॥ इति सप्तमोऽध्यायः॥

# ॥ अष्टमोऽध्यायः ॥

**प्रसमुपोदः पादपूरणे। ८-१-६।**

**एषां द्वे स्तः पादपूरणे। प्र प्रायमग्निः। ऋ०वे० ७-८-४ संसमिद्युवसे। (ऋ०वे० १०-१९-१-१)। उपोप मे परामृश। (ऋ० १-१२६-७) किं नोदुदु हर्षसे। (ऋ०वे० ४-२१-९)**

---

**शाङ्करी**-प्रसमुपोदः - अत्र 'सर्वस्य द्वे'(८-१-१) इत्यतो 'द्वे' इति पदमनुवर्तते। प्र सम् उप उद् इत्येतेषां समाहारद्वन्द्वः। उदः इति षष्ठ्येकवचनान्तः प्रयोगः। 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति सूत्रेण समासान्तटच् प्रत्ययस्तु न भवति समासान्तविधेरनित्यत्वात्। अत्रैतेषां द्विवचनस्य पादपूरणमेव प्रयोजनम्, द्विर्वचने सत्येवात्र वेदे पादः पूर्यते चेत्। लोके पादपूर्त्यर्थं द्विर्वचनस्यादर्शनात् छन्दस्येवैतद् विधीयते। नह्यत्र द्वित्वस्य द्योत्यमस्ति। अत आह मूले एषां द्वे स्तः पाद पूरण इति।

---

**तीर्था-(क) प्रप्रायमग्नि**- प्र अयम् इत्यवस्थायां प्र इत्यस्य "प्रसमुपोदः पादपूरणे" इति सूत्रेण द्वित्वे प्र प्र अयम् इति स्थितौ सवर्णदीर्घे प्रप्रायमग्निः इति साधु।

**(ख) संसमिद्युवसे** - सम् इत् युवसे इति स्थितौ सम् इत्यस्य "प्रसमुपोदः पादपूरणे" इति सूत्रेण द्वित्वे संसमिद्युवसे इति सिद्धम्।

**(ग) उपोप मे परामृश** - उप मे परामृश इति स्थितौ उप इत्यस्य "प्रसमुपोदः पादपूरणे" इति सूत्रेण उप इत्यस्य द्वित्वे उप उप मे परामृश इत्वस्थायां "आद्गुणः" इत्यनेन गुणे उपोप मे इति साधुः।

**(घ) किं नोदुदु हर्षसे** - किं न उत् उ हर्षसे इत्यवस्थायां "प्रसमुपोदः पादपूरणे" इति सूत्रेण उत् इत्यस्य द्वित्वे प्रथमस्योत् घटकोकारस्य न घटकाकारेण सह "आद्गुणः" इति सूत्रेण गुणे नो दु दु हर्षसे इति सिद्धम्।

अत्रेदं चिन्त्यम् - यन्तु हरदत्तमिश्रेण पदमञ्जर्याम् "उदित्यं जातवेदसमिति" क्वचिदुदाहृतम्, तदयुक्तम्, नह्यत्र द्वितीय उच्छब्दः, किंतर्हि? उशब्दः इत्युक्तम्, तदसमीचीनम्, न हि तत्र उदाहरणे इकार घटितपाठोऽस्ति किं तर्हि उकारघटित एव तथाहि - उदुत्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्। ऋ०वे० १-५०-१

**विमर्श-** (क) प्रप्रायमग्निः-

प्रप्रायमग्निर्भरतस्यं शृण्वे वि यत्सूर्यो न रोचंते बृहद्भाः।
अभि यः पूरुं पृतनासु तस्थौ द्युतानो दैव्यो अतिथिः शुशोच॥

ऋग्वेद ७-८-४

मन्त्रार्थ - जिस समय में अग्नि सूर्य के समान विशालरूप से प्रकाशित होते हैं, उस समय भरत के समान (यजमान) द्वारा प्रशंसित होते हैं। जिन्होंने युद्धों में पुरु नामक असुर को अभिभूत किया। वही देदीप्यमान अग्नि देवों के अथिति के रूप में पूज्य होकर प्रज्वलित हुए। हिन्दी पृ० ९८।

(ख) संसमिद्युवसे -

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ।
इलस्पदे समिध्यसे सनो वसून्याभर॥ (ऋग्वेद १०-१९१-१)

मन्त्रार्थ - हे अग्नि तुम कामनाओं के पूरक और प्रभु हो। तुम विशेषरूप से विश्व के समस्त प्राणियों में मिश्रित हो। तुम यज्ञ वेदी पर जलते हो। हमें धन दो।

(ग) उपोप मे परामृश (ऋग्वेद १-१२६-७) हिन्दी पृष्ठ ४०

उपोप मे परामृश मा में दभ्राणि मन्यथाः।
सर्वाहमस्मि रोमशा गन्धारीणामिवाविका॥

मन्त्रार्थ - पत्नी पति से कहती है - मेरे पास आकर मेरा अच्छी तरह से स्पर्श (आलिङ्गन) करो। यह मत समझो कि मैं कम रोमवाली (अल्पव्यस्क) हूँ। अतः भोगयोग्य नहीं हूँ। मैं गन्धारप्रदेश की मेषी (भेड़ी) की तरह लोमपूर्णा और पूर्णावयवा हूँ।

(घ) किं नो दुदु हर्षसे (ऋग्वेद ४-२१-९) हिन्दी पृष्ठ ४८१-८२)

भद्रा ते हस्ता सुकृतोत पाणी प्रयन्तारा स्तुवते राध इन्द्र।
का ते निषत्तिः किमु नो ममत्सि किं नो दुदु हर्षसे दातवा उ॥

मन्त्रार्थ - हे इन्द्र! तुम्हारे कल्याणकारक हस्तद्वय सत्कर्म का अनुष्ठान करते हैं। और स्तुति करने वाले यजमान को धन देते हैं। हे इन्द्र हम लोगों के प्रति तुम्हारी स्थिति क्या है। तुम हम लोगों को धन देने के लिए क्यों नहीं अनुकूल होते हों।

छन्दसीरः। ८-२-१५।

इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वः स्यात्। (क) हरिवते हर्यश्वाय। (ऋग्वेद ३-५२-७) (ख) गीर्वान्।

अनो नुट् ८-२-१६।

अन्नन्तान्मतोर्नुट् स्यात्। अक्षण्वन्तः। कर्णवन्तः। ऋग्वेद १०-७१-७।

अस्थन्वतं यदनस्था।

---

**शाङ्करी-छन्दसीरः** - अत्र सूत्रे "मादुपधायाश्च....८-२-९" इति सूत्रान्मतोर्वो इत्यनुवर्तते। अतः इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वः स्याच्छन्दसि। हरिवते इति। हरयो विद्यन्ते यस्यासौ हरिवान् तस्मै। हरिशब्दान् मतुपो मकारस्यानेनवकारः।

**अनो नुट्**- अत्र पूर्वसूत्राच्छन्दसि इति "मादुपधायाश्च मतोर्वो.." इत्यत मतो र्वा इति चानुवर्तते। अन इत्यन्नन्तस्य वाचकः अत अन्नन्तात्परस्य मतोर्नुट स्याच्छन्दसि। अक्षण्वन्त इति। अस्थिदधिसथ्यक्ष्णामनङुदात्तः। (७-१-७५)

छन्दस्यपिदृश्यते। ७-१-७६। इत्यतोऽनङ् इत्यनुवर्तते। अनङ् दृष्ट्या "अनो लुट्" ८-३-१६ इति नुटोऽसिद्धत्वात् "न लोपः प्रातिपदिकान्तस्य" ८-२-७ इत्यनेन न लोपः। भूतपूर्वगत्यानुटः णत्वम् ननु यदि परादिर्नुट् क्रियते तर्हि तस्य मतुबग्रहणेन ग्रहणात् मादुपधायाश्च मतोर्वोऽयवादिभ्यः। ८-२-९। इत्यनेन वत्वं न स्यात् नुटा व्यवधानात्, यदि पूर्वान्तः नुट् क्रियेत तर्हि णत्वं न स्यात् पदान्तस्य इत्यनेन निषेधात् इति चेत् सत्यम्। नुटोऽसिद्धत्वान्नोक्त दोषः। नन्वेवमवग्रहे दोषः स्यात्। अक्षण् इति णान्तं ह्यवगृहणन्ति अक्षेत्यकारान्तभवग्रहीतुमुचितमिति चेत्सत्यम्। न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नामलक्षणमनुवर्तनीयं तस्माद्यथालक्षणं पदं कर्तव्यम् इति महाभाष्ये स्थितम्। किं च ईयिवां समित्यादौ पदत्वं विनापि अवग्रहः क्रियते। पूर्वेभिदग्निनेत्यादौ सत्यपि पदत्वे न क्रियते इति।

---

**तीर्था- हरिवते** - हरयो विद्यन्ते यस्य असौ हरिवान् तस्मै हरिवते। हरिशब्दान्मतुपि अनुबन्धलोपस्तत इवर्णान्तात्परस्य मतोर्मस्य "छन्दसीरः" इति सूत्रात वकारः चतुर्थ्यैकवचने हरिवते।

**गीर्वान्** - गीर्यस्यास्तीति गीर्वान - गिर् शब्दात् मतुप् प्रत्ययेऽनुबन्धलोपे "छन्दसीरः" इति सूत्रात रेफान्तात्परस्य मतुपो मकारस्य वकारे "र्वोरुपधाया: दीर्घ इकः" इति सूत्रेणोपधा इकारस्य दीर्घः गीर्वान् इति साधु।

**अक्षण्वन्तः** - अक्षि अस्य अस्तीति विग्रहे अक्षिशब्दान्मतुपि अनुबन्धलोपः

**तीर्था-** "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इति सूत्रस्य "छन्दस्यपि दृश्यते" इत्यनुवर्तनात् अक्षिन् शब्दस्येनः अनङ् अनुबन्धलोपः "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति सूत्रेण मतुपो मकारस्य वकारस्तत "अनो नुट्" इत्यनेन मतुपो नुडागमःस च टित्वात् आगमिनो मतुपः पूर्वं अक्षन्वत् इति स्थितौ पूर्वत्रिपादी अनङ् दृष्ट्या नुटोऽसिद्धत्वात् "न लोपः प्रातिपदिकान्तस्य" इत्यनेन नकारलोपे "रषाभ्यां नोणः समानपदे" इत्यनेन णत्वे अक्षण्वत् इत्यवस्थायां प्रथमाया बहुवचने जस् विभक्तौ अनुबन्धलोपः "उगिदचां सर्वनामस्थानेऽधातोः" इत्यनेन मतुपो नुमागमः सस्य रुत्वे रेफस्य विसर्गे च अक्षण्वन्तः इति साधुः।

**अस्थन्वन्तम्** - अस्थि अस्यास्तीति विग्रहे अस्थिशब्दात् मतुप् "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" ७-१-७५। सूत्रोपरि "छन्दस्यपि दृश्यते" ७-१-७६। इति सूत्रेण अस्थिशब्दस्य अनङादेशो मतुपो मकारस्य मादुपधाया इत्यादि सूत्रेण वकारः तस्य "अनो नुट्" इत्यनेन नुडागमः पूर्वनकारस्य "नलोपः प्रातिपदिकान्तस्य" इत्यनेन लोपः "उगिदचां सर्वनामस्थानेऽधातोः" इत्यनेन मतुपो नुमागमः द्वितीयैकवचने विभक्ति कार्ये अस्थन्वन्तम् इति सिद्धम्।

---

**विमर्श-** हरिवते हर्यश्वाय (ऋग्वेद ३-५२-७)।

पूषण्वते ते चकृमा करम्भं हरिवते हर्यश्वाय धानाः।
अपूपमद्धि सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्॥

मन्त्रार्थ - हे इन्द्र तुम पूषा (सूर्य) नामक देव वाले हो। तुम्हारे लिए हम दही मिश्रित सत्तू बनाते है। तुम हरि नामक घोड़े वाले हो। तुम्हारे खाने के लिए हम भुना हुआ यव तैयार करते हैं। तुम मरुतों के साथ पुरोडाश का भक्षण करो। हे शूर तुम वृत्र हन्ता हो विद्वान् हो सोम पियो।

अक्षणवन्तः कर्णवन्तः। ऋग्वेद १०-७१-७

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः।
आदघ्नास उपकक्षास उत्वे ह्रदा इव स्नात्वा उत्वे ददृश्रे॥

मन्त्रार्थ - आखों वाले कानवाले समानज्ञान ग्रहण करने वाले मित्र भी मन से जानने योग्य ज्ञान में एक समान नहीं होते। जैसे भूमि पर कोई जलाशय मुख तक गहराई के जलवाले और कोई कटि तक जलवाले तडाग के समान होते हैं, और कोई स्नान करने के योग्य भी होते हैं। इसी प्रकार मनुष्यों में भी ज्ञान की दृष्टि से असमानता रहती है।

नाद्घस्य। ८-२-१७।

नान्तात्परस्य घस्य नुट्। (क) सुपथिन्तरः। (वा) भूरिदाव्नस्तुड् वाच्यः। (ख) भूरिदावत्तरो जनः। (ऋग्वेद ८-५-३९) (वा) ईद्रथिनः। (ग) रथीतरः। ऋग्वेद १-८४-६। (ख) रथीतमं रथीनाम्।

---

**शाङ्करी**- नाद्घस्येति। सूत्रेऽस्मिन् "अनो नुट्" इति सूत्रान्नुट् इति पदम्, "छन्दसीरः" इति सूत्राच्छन्दसि इति पदञ्चानुवर्तते। अतो नान्तात्परस्य घस्य नुडागमः स्याच्छन्दसि। अत्र घपदेन "तरसमपौ घः" इत्यनेन घसंज्ञकौ तरसमपौ गृह्येते। भूरिदाव्न इति पञ्चम्यन्तं पदम्, अतो भूरिदाव्नः परस्य घस्य नुट् स्यादित्यर्थः। ईद्रथिन इति। रथीतर इति। अत्र पक्षद्वयम्। "अत इनिठनौ" इत्यनेन मत्वर्थीयेन्प्रत्ययान्ता द्रथिन् शब्दात्तरप् प्रत्ययः। नकारलोपः ह्रस्वेकारस्य दीर्घेकारादेशः। अथवा नकारस्यैवेकारे सवर्णदीर्घः। रथीतममिति। इह पदकारा ह्रस्वान्तं पठन्ति। संहितायान्तु "अन्येषामपि दृश्यते" इत्यनेन दीर्घः। इति भावः।

---

**तीर्था**- (क) सुपथिन्तरः -(सुन्दरतम मार्ग) -

सुपथिन् शब्दाद् "द्विवचनविभज्योपपदे तरबीयसुनौ" इति सूत्रात् तरप् (तर) प्रत्ययः सुपथिन् तर इति स्थितौ तरप् प्रत्ययस्य घसंज्ञकत्वात् "नादे घस्ये"ति सूत्रेण तरपोनुडागमः सुपथिन्न्तर इत्यत्र प्रथमनकारस्य "नलोपः प्रातिपदिकान्तस्ये"-त्यनेन लोपे द्वितीयनकारस्य "नश्चापदान्तस्य झल्यनुस्वारः" इत्यनेन अनुस्वारेः परसवर्णे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां प्रथमाया एकवचने सुविभक्तौ रुत्वे विसर्गे च सुपथिन्तरः इति साधु।

**(ख) मूरिदावत्तरो जनः** - (अत्यधिक दान देने वाला) भूरिदावन् शब्दाद् "द्विवचनविभज्योपपदे तरबीयसुनौ" इति सूत्रेण तरप् प्रत्यये तस्य "भूरिदाव्नस्तुड् वाच्यः" इति वार्तिकेन तुडागमेऽनुबन्धलोपे प्रथमाया एकवचने सुविभक्तौ रुत्वे विसर्गे च भूरिदावत्तर इति सिद्धम्।

**(ग) रथीरतः** - रथिन् शब्दाद् "द्विवचनविभज्योपपदे तरबीयसुनौ" इति सूत्रेण तरप् प्रत्ययः "नलोपः प्रातिपदिकान्तस्य" इत्यनेन नकारलोपः "ईद्रथिनः" इति वार्तिकेनेकारस्य ईकारादेशः तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे च रथीतरः इति सिद्धम्।

**तीर्था- ( घ ) रथीतम्** - रथिन् शब्दात् अतिशयेन रथी इति विग्रहे ''अतिशायने तमबिष्ठनौ'' इति सूत्रेण तमप् प्रत्यये ''नलोपः प्रातिपदिकान्तस्य'' इत्यनेन नकारलोपः ''ईद्रथिनः'' इति वार्तिकेनेकारस्य ईकारादेशः द्वितीयाया एकवचने अम् विभक्तौ ''अमि पूर्वः'' इत्यनेन पूर्वरूपे रथीतमम् इति साधुः।

---

**विमर्श-** अस्थन्वतं यदनस्था। ऋग्वेद १-१६४-४।

को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था विभर्ति।

भूम्या असुरसृगात्मा क्व स्वित्को विद्वांसमुपगात् प्रष्टुमेतत॥

मन्त्रार्थ - सृष्टि के प्रारम्भ में प्रथम उत्पन्न को किसने देखा था। जिस अस्थि रहिता प्रकृति (सांख्य दर्शनाभिमत जड़प्रकृति, वेदान्त दर्शनाभित ईश्वरायत्त माया) अव्यक्त गर्भावस्था में अस्थिरहित गर्भ के अस्थियुक्त अवस्था में अशरीरी परमेश्वर धारण और पालन करता है। पृथ्वी से प्राण और रक्त उत्पन्न हुए किन्तु आत्मा कहाँ से उत्पन्न हुआ इस विषय की जिज्ञासा कौन किस विद्वान् के पास करने जाएगा।

(ख) भूरिदावत्तरो जनः -(ऋग्वेद ८-५-३९) हिन्दी पृष्ठ ५३४-३५

माकिरेना पथा गाद्येनेमे यान्ति चेदयः।

अन्यो नेत्सूरि रोहते भूरिदावत्तरो जनः॥

मन्त्रार्थ - जिस मार्ग से यह चेदिवंशीय राजा कशु तथा इसके पितापितामहादि जाते हैं उस मार्ग से दूसरा कोई नहीं जा सकता, और कशु की अपेक्षा कोई अन्य अधिक दान परायण और विद्वान् व्यक्ति स्तोताओं के लिये दान नहीं देता है।

(ग) रथीतरः - (ऋग्वेद १-८४-६) हिन्दी पृष्ठ ६३३

नकिष्ट्वद्रथीतरो हरी यदिन्द्र यच्छसे।

न किष्ट्वानु मज्मना न किः स्वश्व आनशे॥

अर्थ - हे इन्द्र ! जिस समय तुम रथ में अपने घोड़े जोत देते हो, उस समय तुम से बढ़कर अन्य कोई रथी नहीं रहता। तुम्हारे बराबर न कोई अन्य बली है, और न कोई दूसरा सुशोभन अश्वों वाला है।

नसत्तनिषत्तानुत्तप्रतूर्तसूर्त्तगूर्तानि छन्दसि। (८-२-६१)

सदेर्नञ्पूर्वान्निपूर्वाच्च निष्ठायां नत्वा भावो निपात्यते।

(क) नसत्तमञ्जसा। (ख) निषत्तमस्य चरतः। ऋग्वेद १-५८-३। असन्नं निषण्णमिति प्राप्ते। (ग) उन्देर्नञ्पूर्वस्यानुत्तम्। (ऋग्वेद) १-१६५-९। (घ) प्रतूर्तमिति त्वरतेः तुर्वीत्यस्य वा। (तैत्तिरीय संहिता ४-१-२-२। पृष्ठ १४४।) (ङ)

---

**शाङ्करी**- नसत्तेत्याद्यनुकरणपदानामितरेतरयोगद्वन्द्वः। नसत्तेत्यादीनि षड्रूपाणि छन्दसि निपात्यन्ते। सदेरिति। षद्लृ विशरणगत्यवसादनेषु इत्येतस्मादितिभावः। नसत्तमिति। अत्र "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इत्यनेन प्राप्त नत्वस्य भावो "नलोपो नञः" इत्यनेन प्राप्त नलोपास्याप्यभावो निपात्यते। निषत्तम्। अत्रानेन नत्वाभावः, सदिरप्रतेः इत्यनेन षत्वम्। असन्नं निषण्णमिति लोके। असन्नम् इत्यत्र 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इत्यनेननिष्ठातकारस्य धातोः दकारस्य नत्वं, नञो लोपश्च। निषण्णमित्यत्र सदिरप्रतेः इत्यनेन षत्वे रदाभ्याम् इत्यादिना नत्वे च "रषाभ्यां नो ण समानपदे" इत्यनेन णत्वम्। उन्देरिति। उन्दी क्लेदने इत्यस्य नञ्पर्वूस्यानुत्तम् इति अनिदितां हलः उपधायाः क्ङिति इत्यनेन नलोपः। प्रकृतसूत्रेण नत्वाभावश्च। लोके तु नत्वे अनुन्नमिति। प्रतूर्त्तमिति। यदा ञित्वरासम्भ्रमे इत्यनेन क्तप्रत्ययो निपात्यते तदा "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" इत्यनेन वकारस्योपधायाश्चोठ्। यदा तुर्वी हिंसायां गृह्यते तदा 'राल्लोपः' इत्यनेन वकारलोपः 'हलि च' इत्यनेन उकारस्य दीर्घः। सूर्तमिति सृ गतौ इत्यस्य उत्वं निपातनात्, उरणरपरः इत्यनेनैव रपरत्वं कार्यकालपक्षे परिभाषाणां त्रिपाद्यामपि प्रवृत्तेः। गूर्तमिति गुरी उद्यमने इत्यस्य। उपदेशऽजनुनासिक इत् इत्यनेनेकारस्येत्संज्ञा तस्य लोप इत्यनेन लोपे "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इत्यनेन प्राप्त नत्वस्य निपातनादभावः। लोके गूर्णम् इति।

---

**तीर्था**- **नसत्तम्**- नञ् पूर्वकात् विशरणगत्यवसादनार्थकात् (षदलृ) षद् धातोः "धात्वादेः षः सः" इत्यनेन मूर्धन्य षकारस्य सत्वे क्तप्रत्यये न सद् त इति स्थिते "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इत्यनेन निष्ठा तकारस्य तत्पूर्ववर्ती दकारस्य च नत्वे, नञो नकारस्य 'नलोपो नञः' इत्यनेन लोपे च प्राप्ते "नसत्तनिषत्तानुत्तप्रतूर्त-सूर्तगूर्तानि छन्दसि" इत्यनेन निपातनात् अभावे 'खरि च' इति सूत्रेण धातोः दकारस्य चर्त्वे कृदन्तत्वात् प्रातिपदिकसंज्ञायां नपुंसकत्वविवक्षायां सौ तस्य 'अतो अम्' इत्यनेन अमादेशे "अमि पूर्वः" इत्यनेन पूर्वरूपे नसत्तमिति सिद्धम्। लोके असन्नम् इति।

**तीर्था- निषत्तम्** - निपूर्वकात् (षद्लृ) सद् धातोः क्तप्रत्ययेऽनुबन्धलोपे निसद् त इति स्थिते "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इत्यनेन निष्ठातकारस्य धातोः दकारस्य च नत्वे प्राप्ते "नसत्तनिषत्तनुत्ताप्रतूर्तसूर्तगूर्तानि छन्दसि" इत्यनेन निपातनात् तदभावे "सदिरप्रतेः" इत्यनेन धातोः सकारस्य षत्वे धातोर्दकारस्य "खरि च" इत्यनेन चर्त्वे कृदन्तत्वात् प्रातिपदिकसंज्ञायां नपुंसकत्वविवक्षायां प्रथमाया एकवचने सौ तस्य "अतोऽम्" इत्यनेन अमादेशे "अमिपूर्वः" इत्यनेन पूर्वरूपे निषत्तमिति सिद्धम्। लोके निषण्णम् इति।

**अनुत्तमम्** - नञ्पूर्वकात् रुधादिगणपठितात् उन्दी (क्लेदने) धातोः क्तप्रत्ययेऽनुबन्धलोपे धातोर्नकारस्य "अनिदितां हल उपधाया क्ङिति" इत्यनेन लोपे नञो नकारस्थ 'नलोपो नञः' इत्यनेन लोपे निष्ठा तकारस्य धतोर्दकारस्य च "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इत्यनेन प्राप्तं नत्वस्य "नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि" इति सूत्रेण निपातनात् अभावे धातोर्दकारस्य 'खरि च' इत्यनेन चर्त्वे नपुंसकत्वविवक्षायां प्रथमाया एकवचने सौ तस्य 'अतोऽम्' इत्यनेन अमादेशे 'अमिपूर्वः' इत्यनेन पूर्वरूपे अनुत्तमम् इति सिद्धम्। लोके अनुन्नम्।

**प्रतूर्तम्** - प्रपूर्वकात् भ्वादिगणपठित संभ्रमार्थकात् (ञि) त्वराधातोः हिंसार्थक तुर्वी धातोर्वा क्तप्रत्यये अनुबन्धलोपे झलादि कित् प्रत्यये परे धातोर्वकारस्य उपधा अकारस्य च स्थाने "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" इत्यनेन ऊठ् आदेशे प्रत् ऊ र् त प्रतूर्त इति स्थितौ नपुंसकत्वविवक्षायां प्रथमाया एकवचने सौ तस्य अतोऽम् इत्यनेन अमादेशः 'अमि पूर्वः' इत्यनेन पूर्वरूपे प्रतूर्तम् इति सिद्धम्। लोके प्रतूर्णम् इति।

**सूर्तम्** - भ्वादिगणपठितगत्यर्थकात् सृ धातोः क्तप्रत्ययेऽनुबन्धलोपे "नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगुर्तानि छन्दसि" इति सूत्रेण निपातनात् ऋकारस्योत्वे तस्य "उरण रपरः" इत्यनेन रपरत्वे सुर्त इति स्थितौ 'हलि च' इत्यनेन धातोरुपधा उकारस्य दीर्घे 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इत्यनेन प्राप्तनत्वस्य 'न सन्तनिषन्तानुत्तप्रतूर्तसूर्तगुर्तानि छन्दसि' इति सूत्रेण निपातनात् अभावे नुपंसकत्वविवक्षायां प्रथमाया एकवचने सौ तस्य 'अतोऽम्' इत्यनेन अमादेशः 'अमि पूर्वः' इत्यनेन पूर्वरूपे सूर्तम् इति सिद्धम्। लोके सृतम् इति।

**गूर्तम्** - तुदादिगणपठित उद्यमनार्थकाद् गुरी धातोः क्त प्रत्ययः धातोरीकारस्य "उपदेशेऽजनुनासिक इत्" इत्यनेनेत्संज्ञा 'तस्य लोपः' इत्यनेन लोपे गुर्त इति स्थितौ 'हलि च' इत्यनेनोकारस्य दीर्घे, "रदाभ्यां निष्ठातो नः पूर्वस्य च दः"

तीर्था-इत्यनेन प्राप्त नत्वस्य "नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगुर्तानि छन्दसि" इत्यनेन निपातनात् निषेधे नपुंसकत्व विवक्षायां प्रथमाया एकवचने सौ तस्य "अतोऽम्" इत्यनेन अमादेशः तस्य "अमि पूर्वः" इत्यनेन पूर्वरूपे गूर्तम् इति सिद्धम्।

**विमर्श**-(ख) निषत्तमस्य चरतः (ऋग्वेद १-१४६-१) हिन्दी पृष्ठ १६७-६८

त्रिमूर्धानं सप्तरंश्मिं गृणीषेऽनूनमग्निं पित्रोरुपस्थैं।

निषत्तमस्य चरतो ध्रुवस्य विश्वादिवो रोचना पप्रिवांसम्॥

अर्थ – आकाश और पृथ्वीरूप पिता माता की गोद में अवस्थित सवनत्रयरूप मस्तकत्रय से युक्त सप्तछन्दोरुप सप्तरश्मियों से युक्त और विकलता रहित समस्त कामनाओं का सम्पूर्ण फल देने वाले लोकत्रयव्याप्त अग्नि की स्तुति करो। अपनी ज्वाला और प्रकाश के द्वारा सर्वत्र जाने वाले अविचल प्रकाशमान अग्नि का तेज चारों ओर व्याप्त हो रहा है।

(ख) निषत्तोरयिषाल (ऋग्वेद १-५८-३) हिन्दी पृष्ठ ४८१

क्राणा रुद्रेभि र्वसुभिः पुरोहितो होता निषत्तो रयिषाल मर्त्यः।

रथो न विक्ष्वृञ्जसा न आयुषु व्यानुषग्वार्या देव ऋण्वति॥

अर्थ – अग्नि हव्य का वहन करते हैं, और रुद्रों तथा वसुओं के सम्मुख स्थान पाये हुए हैं। अग्नि देवों के आह्वानकर्ता और यज्ञस्थलों में उपस्थित रहते हैं। वह धन और जयप्रदायक अमर हैं। दीप्तिमान अग्नि यजमानों की स्तुति प्राप्त करके रथ की तरह चलकर प्रजाओं के घर में बार-बार धन प्रदान करते हैं।

(ग) अनुत्तमम् - (ऋग्वेद १-१६५-९) हिन्दी पृष्ठ ३०६

अनुत्तमा तें मघवन् कि नु नत्वावाँ अस्ति देवता विदानः।

न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्धः॥

अर्थ – मरुद्गण कह रहे हैं हे इन्द्र! तुम्हारा सब कुछ उत्तम हैं। तुम्हारे समान कोई देवता विद्वान् नहीं है। अत्यन्त बलशाली इन्द्र, तुमने जो कर्त्तव्य कर्मों को किया है, उन्हें न तो पहले कोई कर सका, न आगे कोई कर सकेगा।

(घ) प्रतूर्तम् - शुक्ल यजुर्वेद माध्यन्दिन संहिता (११-१२)

प्रतूर्तं वाजिन्नाद्रव वरिष्ठामनुसंवतम् दिवि ते जन्म परममन्तरिक्षे

तव नाभिः पृथिव्यामधि योनिरित्। अयमेव मन्त्रः तैत्तिरीय संहितायामप्यस्ति केवलं तत्र तव शब्दो नास्ति। तै०सं० ४-१-२-२।

अर्थ – हे शीघ्रगामी अश्व! तुम इस श्रेष्ठ यज्ञ भूमि को लक्ष्य करके शीघ्र आओ। तुम्हारा द्युलोक में आदित्यरूप से उत्कृष्ट जन्म हुआ है, अन्तरिक्ष में तुम्हारी

अम्नरूधरवरित्युमयथा छन्दसि। ८-२-७०।

रूर्वा रेफो वा।

(क) अम्न एव १.६.१०) अम्नरेव। मै० सं। (ख)ऊध एव। का०सं ७-५-२०। ऊधरेव। (ग) ऋग्वेद (१०-१००-११) (घ) अव एव। अवरेव।

**शाङ्करी**- प्रकृतसूत्रे अम्नश्च ऊधश्च अवश्चेति विग्रहे समाहारद्वन्द्वः। अपि चात्र "ससजुषो रुः(८-२-६६)" इत्यतो रु पदस्य ८-२-६६) इत्यतः पदस्येति चानुवर्तते इति, "रोऽसुपि" (८-२-६९) इत्यतो र इति चानुवर्तते। अत अम्नस् ऊधस् अवस् इत्येतेषां पदानां सस्य विकल्पेन रुर्वा रेफादेशो वा भवति छन्दसि। एषु "ससजुषो रुः" इत्यनेन नित्यं रुत्वे प्राप्ते पक्षे रेफादेशार्थं सूत्रारम्भः। तदुक्तं रुर्वा रेफो वेति। अम्नस् शब्दः ईषदर्थे, अवो रक्षणम्। अम्न एवेति रुत्व पक्षे "भो भगो अघोऽपूर्वस्य योऽशि" इत्यनेन यत्वं तस्य "लोपः शाकल्यस्ये"त्यनेन लोपः रेफ पक्षे अम्नरेव। एवमेव ऊध एव, ऊधरेव अव एव अव रेव।

**तीर्था**- **अम्न एव** - अम्नस् एव इति स्थितौ सकारस्य 'ससजुषो रुः' इत्यनेन नित्यं रुत्वे प्राप्ते "अम्नरूधरवरित्युभयथा छन्दसि" इत्यनेन विकल्पेन रुत्व पक्षे "भो भगो अघोऽपूर्वस्य योऽशि" इत्यनेन यत्वे तस्य "लोपः शाक्ल्यस्ये"त्यनेन लोपे अम्न एव। रेफ पक्षे अम्न रेव। एवमेव - ऊध एव - ऊधरेव। अव एव-अवरेव।

**विमर्श**- नाभी है, पृथिवी के ऊपर तुम्हारा स्थान है, अर्थात् भूमि पर तुम्हारा निवास स्थान प्रत्यक्ष दिखाई पड़ता है। इस प्रकार विष्णु के विराट् रूप से अश्व की तुलना कर उसकी यहाँ स्तुति की जाती है।

(च) गूर्तम् - शु०यजु०माध्य०संहिता ६-३४। पृष्ठ ७५

श्वात्रा स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीः।

ता देवी देवत्रेमं यज्ञं नयतोपहूताः सोमस्य पिबत॥

अर्थ - हे जल देवता! तुम शीघ्र कार्यकारी शत्रु हृदय के मर्दनकारी और इष्ट कामना को देने वाले हो, सोम के पालक हो। हे सम्पूर्ण निग्राम्य देवताओं तुम इस यज्ञ के देवताओं के साथ यहाँ आओ, अनुज्ञा प्राप्त कर सोमरस का पान करो।

(क) अम्न एव

तदाहु रम्ण एवानुद्रुत्याथाग्निहोत्रंहोतव्यमिति। (मैत्रा० सं० १-६-१८ पृष्ठ ५९

भुवश्च महाव्याहृतेः। ८-२-७१।

(क) भुव॒ इति॑। भुवरिति॑। (ऋग्वेद १०-५०-४) पृष्ठ १५१ हिन्दी पृ० २५।

---

**शाङ्करी**- भुव इत्येतदव्ययमन्तरिक्ष वाची महाव्याहृतिः।

प्रस्तुत सूत्रे अम्नरूधर (८-२-७०) इत्यादि सूत्राद् उभयथा छन्दसि इति, "रोऽसुपि" (८-२-६९) इति सूत्रात् रः इति, "ससजुषो रुः" (८-२-६६) इत्यतः रु इति अपिच "पदस्य" ८-१-१६ इति चानुवर्तते। तथा च भुवस् इति सकारस्य रु तथा रेफः उभयथा भवति। रु पक्षे "भो भगो अघो अपूर्वस्य योऽशि" इत्यनेन यकारो भवति तथा "लोपः शाकल्यस्य" इत्यनेन यकारस्य लोपे, भुव इति रेफ पक्षे भुवरिति।

---

**तीर्था**- भुव इति भुवरिति। भुवस् इति स्थितौ "भुवश्च महाव्याहृतेः" इति सूत्रेण रुत्वे "भो भगो अघोऽपूर्वस्य योऽशि" इति सूत्रेण रोर्यत्वे यकारस्य "लोपः शाकल्यस्य" इत्यनेन लोपे भुव इति। सकारस्य रेफपक्षे भुवरिति। ऋग्वेद १०-५०-४

---

**विमर्श**- (ख) ऊध एव

गर्भमेवैतया दधात्यस्य प्रत्नामनु द्युतमित्यूध एवैतया करोत्ययंते.... काठक संहिता स्थानक ७ अनुक्रम ५ पृष्ठ ४८

ऊधर् - अव

(घ) क्र॒तु॒प्रावा॑ जरि॒ता शश्व॑ता॒मव॒ इन्द्र॒ इद्भ॒द्रा प्रम॑तिः सु॒ताव॑ताम्।

(ग) पू॒र्णमूध॑र्दि॒व्यं यस्य॑ सि॒क्तय॒ आ स॒र्वता॑ति॒मदि॑तिं वृणीमहे॥ ऋग्वेद १०, १००, ११ हिन्दी पृ० ३६४-६५

ऊधर्दिव्यम् - अव इन्द्र।

अर्थ - यज्ञ को पूर्ण करने वाले इन्द्र सब को जरायुक्त करते हैं। वे सोम यज्ञ करने वाले यजमान की रक्षा करते है अच्छी स्तुति से प्रसन्न होते हैं उस इन्द्र के पीने के लिए सोम रस से परिपूर्ण कलश है। हम सर्वग्राहिणी अदिति देवी की प्रार्थना करते हैं।

**विशेष** - इस ऋक् में अवस् के स् का रुत्व यत्व और यलोप हुआ है - जैसे अवइन्द्र। ऊधर्दिव्यम् ऊधस् के स् रेफ का उदाहरण है।

ओमभ्यादाने। ८-२-८७

ओंशब्दस्य प्लुतः स्यादारम्भे। ओ३म अग्निमीले पुरोहितम्। अभ्यादाने किम्- ओमित्येकाक्षरम्।

ये यज्ञकर्मणि। ८-२-८८।

(क) ये ३ यजामहे यजेति किम्? ये यजामहे इति।

(ख) तै०सं० १-६-११

प्रणवष्टेः। ८-२-८९।

यज्ञकर्मणि टेरोमित्यादेशः स्यात्।

(ग) अपां रेतांसि जिन्वतो३म्। (ऋग्वेद ८.४४.१६) (तै०सं० ४-४-४-१) पृष्ठ १७१

टेः किम्? हलन्तेऽन्त्यस्य मा भूत्।

---

**शाङ्करी**- अत्र "वाक्यस्य टेः प्लुत उदात्तः" (८-२-८२) इत्यतः प्लुत उदात्तः इति पदद्वयमनुवर्तते। अभ्यादानमारम्भः। अतो वैदिक मन्त्राणामारम्भे ओम् शब्दः प्लुत उदात्तश्च भवति। ओ३म् अग्निमीले पुरोहितम् ऋग्वेद १-१-१। अभ्यादाने किम् - ओमित्येकाक्षरम् - अयं श्लोकावयवः। अत्र प्लुत शब्दश्रुत्या अचश्च इति परिभाषया अचः इति षष्ठ्यन्तपदोपस्थित्या ओकारे प्लुते सति त्रिमात्रः मकारश्चार्ध मात्रिकः, अतः समुदायः सार्द्धत्रिमात्रः।

ये यज्ञेति - अत्र "वाक्यस्य टेः प्लुतः उदात्तः" इत्यतः प्लुत उदात्तः इति, पदस्येति चानुवर्तते। अतो यज्ञकर्मणि ये इत्यस्य एकारः प्लुतः, उदात्तश्च भवति

---

**विमर्श**- (क) भुवस्त्वमिंद्र ब्रह्मणा महान्भुवो विश्वेषु सवनेषु यज्ञियः।

भुवो नॄँ श्च्यौत्नो विश्वस्मिन्भरे ज्येष्ठश्च मंत्रो विश्वचर्षणे॥ ऋग्वेद १०-५०-४ पृष्ठ १५१ हिन्दी पृष्ठ २५

अर्थ - हे इन्द्र! तुम हम ब्राह्मणों द्वारा किये गये यज्ञ और स्तुतियों से महान् हुए हो। सारे यज्ञों में तुम यज्ञ भाग पाने के अधिकारी हो। तुम सारे युद्धों में प्रधान प्रधान शत्रुओं के विध्वंसक हुए हो। अखिल ब्रह्माण्डदर्शक इन्द्र तुम सर्वश्रेष्ठ मन्त्रों से स्तुति प्राप्त करने के योग्य हो।

ओ३म् अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम्।

याज्यान्ताः ८-२-९०

ये याज्या मन्त्रास्तेषामन्त्यस्य टेः प्लुतो यज्ञकर्मणि। जि॒ह्वाम॑ग्ने चकृषे हव्य॒वा॒हा३म्। (तै०सं० ४.४.४.४ पृष्ठ १७१)

---

शाङ्करी-यज्ञेति विशेषणात् अध्ययनकाले न भवति। प्रणवेति। अत्र ये यज्ञ कर्मणि इत्यतो यज्ञकर्मणि इति "वाक्यस्य टेः प्लुत उदात्तः" इति सूत्रात् प्लुत उदात्तः इति पदस्य चेति अनुवर्तते। अत यज्ञकर्मणि वाक्यस्य टेः प्रणवः ओम् आदेशः। यथा - अपां रेतांसि जिन्वति इत्यत्र तिघटकेकारस्य ओम् आदेशे जिन्वतो३म् इति सम्पद्यते।

---

तीर्था- **ओ३म्** - अग्निमीले - अत्र मन्त्रस्य आरम्भे ओम् शब्दावयव ओकारस्य "ओमभ्यादाने" इति सूत्रेण प्लुते उदात्ते च ओ३म् इति साधुः।

**ये३यजा॑मह॒े।** यज्ञकर्मणि प्रयुज्यमानस्य ये यजामहे इति मन्त्रावयवस्य ये इत्यस्य एकारो "ये यज्ञकर्मणि" इति सूत्रेण प्लुतः संवृत्तः ये३यजामहे इति साधुः। तै०सं० १-६-११।

**जिन्वतो३म्** - अत्र "अ॒पां रेतां॑सि जिन्वतो३म्" इति मन्त्रो यदि यज्ञकर्मणि प्रयुज्यते तदा जिन्वति इति पदावयवस्य इकाररूपास्य टेः स्थाने "प्रणवष्टेः" इति सूत्रेण प्रणवादेशे जिन्वतो३म् इति साधु। ऋग्वेद ८-४४-१६।

---

**विमर्श-** होता॑रं रत्न॒धात॑मम्॥ ऋग्वेद १-१-१

अर्थ - यज्ञ के पुरोहित दीप्तिमान देवों को बुलाने वाले ऋत्विक् और रत्नधारी अग्नि देव की मैं स्तुति करता हूँ।

ये यजामह इति पञ्चाक्षरम् (तै०सं० १-६-११) पृष्ठ ४०

यो वै स॑प्तद॒शं प्र॒जाप॑तिं य॒ज्ञम॒न्वाय॑न्त॒ं वेद॒ प्रति॑ य॒ज्ञेन॑ तिष्ठति॒ नः य॒ज्ञाद् भ्रꣳशत॒ आश्रयेवति चतुरक्ष॒रमस्तु॒ श्रोष॒ड् इति॒ च॒तु॑रक्षर॒ं यजेति॒ द्व॒य॒क्षर॒ं ये यजा॑महे॒ति॒ पञ्चा॑क्षरं द्वयक्ष॒रो व॑षट्कार तै०सहिता १-६-११।

अ॒ग्निर्मू॒र्धा दि॒वः क॒कुत्पति॑ः पृथि॒व्या अ॒यम्। अ॒पां रेतां॑सि जिन्वति। (तैति० सं० ४-४-४) पृष्ठ १७१) ऋ० ८-४४-१६ पृष्ठ ४२७ हिन्दी २५७

अर्थ - देवों के मस्तक, द्युलोक के ककुद् (वृषस्कन्ध की खूँटी - डील) और पृथिवी के पति यह अग्नि, जल के वीर्यस्वरूप स्थावर जंगमात्मक समस्त प्राणियों को प्रसन्न करते हैं। हिन्दी पृष्ठ २५७।

अन्तः किम्? याज्यानामृचां वाक्यसमुदायरूपाणां प्रतिवाक्यं टेः स्यात्। सर्वान्तस्य चेष्यते।

---

**शाङ्करी**- याज्यान्ताः- अत्र, "ये यज्ञकर्मणि" (८-२-८८) इत्यतो यज्ञकर्मणि इति, "प्रणवष्टेः" (८-२-८९) इत्यतस्टेः इति "वाक्यस्य टेः प्लुत उदात्तः" इत्यतो वाक्यस्य प्लुत उदात्तः इति पदस्येति चानुवर्तते। अतो ये याज्यान्ता मन्त्रास्तेषामन्त्यस्य टेः प्लुतोदात्तश्च भवति यज्ञकर्मणि, इत्यर्थः सम्पद्यते। जिह्वामग्र इति। हव्यवाहा३म् इत्यत्र आ३म् इति टेः घटकीभूत आरूपाच् स याज्यरूपमन्त्रस्य अन्ते विद्यते अतः स प्रकृत् सूत्रेण प्लुतः सम्पद्यते। ये मन्त्रा याज्यास्ते याज्याकाण्डे पठ्यन्ते। ये मन्त्रा याज्यानुवाक्यकाण्डमिति समाख्याने प्रकरणे ये मन्त्रा इत्यर्थः। तेषाम् मन्त्राणामित्यर्थः। तासामिति पाठे तासां याज्यानाम् - (ऋचाम्) इत्यर्थः। अत्रेदं ध्येयम् ये मन्त्राः विभिन्नदेवतोद्देश्येन अग्नौ आहुतिप्रदानप्रसङ्गे पठ्यन्ते ते याज्याः - यज्ञार्हा इत्यर्थः। सूत्रे अन्तः किम् - सूत्रेऽन्तः ग्रहणाभावे टेः ग्रहणसामर्थ्यात् वाक्यसमुदायरूपाणाम् ऋचां प्रतिवाक्यं टेः स्यात्, सर्ववाक्यसमुदायान्तस्य चेष्यते। अत्रेदमपि बोध्यम् - यद्यन्तग्रहणसामर्थ्यात् टेः इत्यस्य निवृत्तिः स्यातदा येऽजन्ता एव याज्यास्त एव उदाहार्याः स्युः न तु हव्यवाहा३म् इत्यादयो हलन्ताः। यद्यन्तग्रहणं टेः इत्यस्य विशेषणं तदा तस्य आनर्थक्यमेव यो हि टि भवति स अन्त एव भवति इत्यर्थः।

---

**तीर्था**- हव्यवाहा३म् - इति पदस्य याज्यानां ऋचामन्ते विद्यमानत्वात् अन्तस्य टेः आकारस्य "याज्यान्ताः" इति सूत्रेण प्लुते हव्यवाहा३म् इति साधु।

---

**विमर्श**- भुवो॑ य॒ज्ञस्य॒ रज॑सश्च ने॒ता यत्रा॑ नि॒युद्भि॒ः सच॑से शि॒वाभि॑ः।
दि॒वि मू॒र्धानं॑ दधिषे सुव॒र्षां जि॒ह्वाम॑ग्ने चकृषे हव्य॒वाह॑म्॥ (तै०सं० ४-४-४-४) पृष्ठ १७१

ऋक्संहितायान्तु -

भुवो॑ य॒ज्ञस्य॒ रज॑सश्च ने॒ता यत्रा॑ नि॒युद्भि॒ः सच॑से शि॒वाभि॑ः।
दि॒वि मू॒र्धानं॑ दधिषे स्व॒र्षां जि॒ह्वाम॑ग्ने चकृषे हव्य॒वाह॑म्॥ ऋग्वेद १०-८-६

अर्थ - हे अग्नि तुम जिस अन्तरिक्ष में कल्याण करने वाले अश्वों वाले वायु के साथ मिलते हो, उसमें तुम यज्ञ और जल के नेता होते हो। तुम द्युलोक में प्रधान और सभी देवताओं को अच्छी तरह भरण करने वाले सूर्य को धारण करते हो, और अपनी जिह्वा को हव्यवाहिका बनाते हो। हिन्दी पृ ष्ठ ७७३-७४।

ब्रूहिप्रेष्यश्रौषड् वौषडावहानामादेः। ८-२-९१

एषामादेः प्लुतो यज्ञकर्मणि।

(क) अग्नयेऽनुब्रू३हि। (श०ब्रा०२.५.३.१२)

(ख) अग्नये गोमयानि प्रे३ष्य।

(ग) अस्तु श्रौ३ षट् (तै०सं०१.६.११.१)

(घ) सोमस्याग्ने व्रीहि वौ३षट्। (ऐ०ब्रा० ४.५.४.६)

(ङ) अग्निमा३वह (तै०ब्रा० ३.५.१.२)

अग्नित्प्रेषणे परस्य च। ८.२.९२

अग्नीधः प्रेषणे आदेः प्लुतस्तस्मात्परस्य च।

(क) ओ३ श्रा३वय। (तै० १.६.११.२)

---

शाङ्करी-ब्रूहि प्रेष्येति - अत्र सूत्रे "वाक्यस्य टेः प्लुत उदात्तः" (८-२-८२) इत्यतः प्लुत उदात्तः इति, "ये यज्ञकर्मणि" इत्यतो यज्ञकर्मणि इति, "पदस्य" (८-१-१६) इति चानुवर्तते। अतो ब्रूहिप्रेष्य - इत्यादीनामादेः प्लुत उदात्तश्च भवति यज्ञकर्मणि। ब्रूहि - प्रेष्य-श्रोषड्-वौषडा - आवह, एषामादि स्वराणां प्लुतो भवति। पदमञ्जरी कर्तुर्हरदत्तमिश्रमते तु - ब्रूहि स्थानापन्नत्वात् प्रित्र्यायामनुस्वधेति सम्प्रेष्येत्यत्रापि अनुस्व३ध इत्यत्र प्लुतो भवति। अपि च अस्तु स्वधेति प्रत्याश्रवणमित्यत्र भवति, अस्तु श्रौषट् इत्यस्य स्थानापन्नत्वात्। अत्र केचित् सूत्रस्थ वषट्कारः षड्विधवषट्कारस्योपलक्षणम्। अतः वषड् - वौषड्-वाषड्, वौक्षड्-वाक्षड् एषु सर्वेष्वादि स्वरस्य प्लुतो भवति।

---

तीर्था- अनुब्रू३हि - ब्रूहि प्रे३ष्य-श्रौ३षट्-वौ३षट्- आ३वह शब्दानाम् आदेरचः प्लुतो भवति। (यज्ञकर्मणि)।

---

विमर्श-(क) अग्नये॒ऽनुब्रू॒ही॑ति। आग्नेयमाज्यभाग॑ स॒ स्त्थाल्यै॒ चुतुराज्यस्याऽवदा-या॒ऽतिक्राम्यत्त्यतिक्र॒म्म्याऽऽश्रा॒व्याऽऽहाग्नि॒ं यजे॒ति व॒षट् कृते जुहोति। (श०ब्रा० २.५.३.१२) भाग १ पृष्ठ २२९)

(ग) यो वै स॒प्तद॒शं प्र॒जाप॑तिं य॒ज्ञमन्वाय॑त्तं वेद॒ प्रति॒ य॒ज्ञेन॑ तिष्ठति॒ न य॒ज्ञाद् भ्रंशत आ श्राव॒येति॒ चतु॑रक्षरमस्तु॒ श्रौ३ष॒डिति॒ चतु॑रक्षरं॒ यजे॒ति॒ द्व्य॑क्षरं॒ (तै०सं० १.६.११.१ पृष्ठ ४०)

विभाषा पृष्टप्रतिवचने हेः। ८-२-९३ । प्लुतः।

अकार्षीः कटम्। अकार्षं हि३। अकार्षं हि। पृष्टेति किम्? कटं करिष्यति हि। हेः किम्-कटं करोति ननु।

निगृह्यानुयोगे च। ८-२-९४

अत्र यद्वाक्यं तस्य टेः प्लुतो वा।

अद्यामावास्येत्यात्थ३। अमावास्येत्येवं वादिनं युक्त्या स्वमतात्प्रच्याव्य एवमनुप्रयुज्यते।

आम्रेडितं भर्त्सने। ८-२-९५

दस्यो३ दस्यो३ घातयिष्यामि त्वाम्। आम्रेडितग्रहणं द्विरुक्तोपलक्षणम्। चौर३ चौर३।

---

शाङ्करी- अग्नीत्प्रेषणेति - अग्नीधः प्रेषणम् - अग्नीत्प्रेषणम् तदुक्तम् अग्नीधः प्रेषणेति। तस्मादेवादिः प्लुतो भवति परस्य चेति। अग्निमिन्द्धेः कर्तरि क्विप् अग्नीत् ऋत्विक विशेषः। अत्र सूत्रे 'वाक्यस्य टेः प्लुत उदात्तः' इत्यतः प्लुत उदात्त इति, "ये यज्ञकर्मणि" इति पदस्येति अनुवर्तते। "ब्रूहिप्रेष्यश्रौषड्" इत्यादि सूत्राद् आदेः इति तदुक्तं सूत्रवृत्तौ अग्नीधः प्रषणेत्यादिः। ओ३ श्रा३वय। अत्र आदेरच ओकारस्य। ततः परस्य श्रावयघटकाकारस्य च प्लुतः। विभाषा पृष्टप्रतिवचने हेः। पृष्टस्य प्रतिवचनम् - आख्यानम् - प्रत्युत्तरम् - पृष्टप्रतिवचनम्। प्रतिवचनशब्दोऽयं विरुद्धेऽपि वचने प्रवर्तते। अत्र प्रतिशब्दो विरोधं द्योतयति। पृष्ट प्रतिवचने हेः प्लुतो भवति। अकार्षं हि३। अकार्ष हि।

निगृह्यानुयोगेति - अत्र "वाक्यस्य टेः प्लुत उदात्तः" (८-२-८२) इति सूत्रं "विभाषा पृष्टप्रतिवचने हेः" (८-२-९३) इति सूत्राद् विभाषेति पदमेप्यनुवर्तते। अतो निगृह्यानुयोगे यद्वाक्यं तस्य टेः प्लुतः स्याद् विभाषा। निगृह्येति ल्यबन्तम्। निगृह्यस्य प्रत्याख्यानस्य अनुयोगो निगृह्यानुयोगः, तस्मिन्। अर्थात् वादिना प्रतिपादिता सत्पक्षं प्रतिवादी युक्त्या खण्डयित्वा पुनस्तस्यैवासत्पक्षस्य प्रकाशनमनुयोगः। यथा कश्चित्पूर्वमाह अद्य अमावस्येति, तमपरो युक्त्या खण्डयित्वा तं पुनश्नुप्रयुङ्ते अद्यामावस्येत्यात्थ३त्वं निर्युक्तिकम्।

---

विमर्श-(क) यो वै सूनृतायै दोहं वेद दुह एवैनां यज्ञो वै सूनृताऽऽश्रावयेत्यैवैनामह्वदस्तु। (तै०सं० १.६.११.२) पृष्ठ ४०) काशिकोक्त उदाहरण। ओ३श्रावय (सि०को) ओ३श्रा३वय।

अङ्गयुक्तं तिङाकाक्षम्। ८-२-९६।

अङ्गेत्यनेन युक्तं तिङन्तं प्लवते। अङ्ग कूज३ इदानीं ज्ञास्यसि जाल्म। तिङ् किम्? अङ्ग देवदत्त मिथ्या वदसि। आकाङ्क्षं किम्? अङ्ग पच। नैतदपरमाकांङ्क्षति। भर्त्सन इत्येव। अङ्गाधीष्व भक्तं तव दास्यामि।

विचार्यमाणानाम्। ८-२-९७।

वाक्यानां टेः प्लुतः। (तै०सं० ६-१-४-५) पृष्ट २५३ होतव्यं दीक्षितस्य गृहा३इ। न होतव्य ३मिति। होतव्यं न होतव्यमिति विचार्यते। प्रमाणैर्वस्तुतत्त्व परीक्षणं विचारः।

---

**शाङ्करी**- आम्रेडितमिति- अत्र "वाक्यस्य टेः प्लुत उदात्तः" इत्यतः 'प्लुत उदात्तः' अनुवर्तते। अत्र आम्रेडितशब्दो नहि 'तस्य परमाम्रेडितम्' इत्यनेनाम्रेडितसंज्ञकः गृह्यते, अपि तु द्वित्वविशिष्टानुभावपि गृह्येते। अतो मूले दस्यो३ दस्यो३ घातयिष्यामि त्वाम्, इति वाक्ये द्वावप्यौकारौ प्लुतौ। तदुक्तं मूले - आम्रेडितग्रहणं द्विरुक्तोपलक्षणम् इति।

अङ्गयुक्तेति - अत्र 'वाक्यस्य टेः प्लुत उदात्तः' इति सूत्रात् प्लुतोदात्तौ आम्रेडितं भर्त्सने इत्यतो भर्त्सनेतिपदञ्चानुवर्तते। आकाङ्क्षतीत्याकाङ्क्षम् कर्तरि पचाद्यच्। तिङन्तमिति। आकाङ्क्षं तिङन्तं प्लुतो भवति। अर्थाद् यत्तिङ्न्तं पदमपरं तिङन्तमपेक्षते तत्राकाङ्क्षाकर्तृतिङन्त पदं प्लवते। यथा अङ्ग कूज३ इति वाक्ये कूज इति तिङन्तं ज्ञास्यसि इति तिङन्तमपेक्षत अतस्तत्प्लुतः संवृत्तः। तिङ् किम्? अङ्ग देवदत्त इति तु सुबन्तमेकं वाक्यमिदञ्च वदस्येतदपेक्षते।

विचार्येति - अत्र "वाक्यस्य टेः प्लुत उदात्तः" (८-५-८२) इति सूत्रमनुवर्तते। अतो विचार्यमाणानां वाक्यानां टेः प्लुतो भवति। विचार्येति कोटिद्वयस्पृग्विज्ञानं विचार इति कथ्यते। विचार्यमाणस्तज्ज्ञानविषयीभूत उच्यते। इह तु विचार्यमाणज्ञानविषयकत्वात् वाक्यान्यपि विचार्यमाणमुच्यते वस्तुतस्त्वत्र विचार्यमाज्ञान विषयकत्वाद् वाक्यान्यपि विचार्यमाणान्युच्यते। गृहा३ इ इति। अत्र सप्तम्येकवचनान्तस्य गृहे इति घटकैकारावयवस्यपूर्वाधस्य एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ (८-२-१०७) इति सूत्रेण आकारादेशः सन् प्रकृतसूत्रेण प्लुतो भवति, उत्तरार्धस्येकारौकारौ भवतः।

---

**विमर्श**- ब्रह्मवादिनो वदन्ति होतव्यं दीक्षितस्य गृहा३ इन होतव्या३मिति........... हविर्वै दीक्षितो यज्जुहुयाद्यजमानस्यावदाय.................(तै०सं०६.१.४.५ पृष्ठ २५३)

पूर्वं तु भाषायाम्। ८-२-९८।

विचार्यमाणानां पूर्वमेव प्लवते।

अहिर्नु३ रज्जुर्नु। प्रयोगापेक्ष पूर्वत्वम्। भाषाग्रहणात्पूर्वयोगश्छन्दसीति ज्ञायते।

प्रतिश्रवणे च। ८-२-९९।

वाक्यस्य टेः प्लुतोऽभ्युपगमे प्रतिज्ञाने श्रवणाभिमुख्ये च। गां मे देहि भोः। हन्त ते ददामि३। नित्यः शब्दो भवितुमर्हति३। दत्त किमात्थ३।

अनुदात्तं प्रश्नान्ताभिपूजितयोः। ८-२-१००।

(क) अनुदात्तः प्लुतः स्यात्। यदि दूराद्धतादि च (८-२-८४) इति सूत्रेण सिद्धस्य प्लुतस्यानुदातत्वमात्तमनेन विधीयते तदा सूत्रस्य वृत्तिः प्लुत अनुदात्तः स्यादिति कर्त्तवया, प्लुतमुद्दिश्यानुदात्तस्य विधेयत्वात्। दूराद्धूतादिषु सिद्धस्य प्लुतस्यानुदात्तत्व मात्रमनेन विधीयते। अग्निभूत ३इ। पट३ उ। अग्निभूते पटो – एतयोः प्रश्नान्ते टेरनुदात्तः प्लुतः। शोभनः खल्वसि माणवक ३।

---

शाङ्करी–पूर्वं तु – अत्र 'विचार्यमाणानाम् (८-२-९७) इति सूत्रं "वाक्यस्य टेः प्लुत उदात्तः" (८-२-८२) इति सूत्रञ्चानुवर्तते। अतो भाषायाम् लोके विचार्यमाणानां वाक्यानां पूर्वावयवस्यैव टेः प्लुतो भवति। विचार्यमाणानामित्यनेनैव प्लुतेसिद्धेनियमार्थमिदं पूर्वमेव प्लवते इति। न तु पूर्वं भाषायामेवेति विपरीत नियमः।

अत्र "वाक्यस्य टेः प्लुत उदात्तः" (८-२-८२) इति सूत्रमनुवर्तते पूर्वं प्रतिश्रवणशब्दार्थान्त्रीन् वृत्तावाहअभ्युपगमे – अङ्गीकारे। यथा – गां मे देहि भोः। हन्त ते ददामि ३। अत्र ददामि३ इत्यत्रेकारः स्वीकृति वाक्यस्य टिः। द्वितीयोऽर्थः प्रतिज्ञानम् – प्रतिज्ञावाक्यम्। यथा शाब्दिकैः मीमांसकैश्च प्रतिज्ञायते – नित्यः शब्दो भवितुमर्हति३। अत्र प्रतिज्ञावाक्यस्य टिः घटकेकारः प्लुतः संवृत्तः। तृतीयः – वक्तुरुक्ति श्रवणार्थमाभिमुखी भवनम्। यथा – दत्तः कमपि जनमुद्दिश्य किञ्चिदुक्तवान् स श्रोता वक्ति – दत्त किमात्थ ३। अत्र वाक्यस्य टिः यघटकाकारः प्लुतः।

अत्र सूत्रे 'वाक्यस्य टेः प्लुत उदात्तः' (८-२-८२) इति सूत्रं 'क्वचिदेकदेशोप्यनुवर्तत' इति नियमात्, अथ चेहानुदात्तपदग्रहणसामर्थ्यात् उदात्तरहितमनुवर्तते। प्रश्नस्यान्तः प्रश्नान्तः, प्रश्नान्तश्चाभिपूजितश्चेति प्रश्नान्ताभिः पूजितौ,

चिदिति चोपमार्थे प्रयुज्यमाने। ८-२-१०१

(ख) वाक्यस्य टेरनुदात्तः प्लुतः। अग्निचिद्भाया३त्। अग्निरिव भायात्। उपमार्थे किम् - कथंचिदाहुः। प्रयुज्यमाने किम् - अग्निर्माणवको भायात्।

---

शाङ्करी- तयोः प्रश्नान्ताभिपूजितयोर्यद्वाक्यं तस्य टेः प्लुतोऽनुदात्तो भवति। तत्र प्रश्नान्ताभिपूजितयोर्मध्येऽभिपूजिते 'शोभनः खल्वसि माणवक३' इत्यत्र "दूराद्धूते च" इत्यनेन प्लुतो भवन् प्रकृतसूत्रेणानुदात्तो भवति। प्रश्नान्तेः अग्निभूत३ इ, इत्यत्र, पट३ उ इत्यत्र च अनन्त्यस्यापि प्रश्नाख्यानयोः इत्यनेनानन्त्यावप्यकारौ प्लुतौ स्तः। अत्रोदाहरणेषु दूराद्धूतेश्चेति विहितप्लुतस्य प्रकृतसूत्रेणानुदातत्वमात्रं विधीयते। प्रश्नान्तेऽभिपूजिते च यः प्लुतः सोऽनुदात्तो भवतीति।

वस्तुतस्तु - प्रश्नान्ताभिपूजितयोर्यद्वाक्यं तस्य टिः प्लुतोऽनुदात्तो भवतीत्येवार्थः समीचीनः नत्वनुदात्तः प्लुतः इति दूराद्धूतादिषु सिद्धस्य प्लुतस्य अनुदात्तत्वमात्रमनेन विधीयत इत्युत्तरग्रन्थ विरोधात् अत एव प्रकृतसूत्रपदमञ्जर्यां वैयाकरणसिद्धान्तकौमुद्याः सुबोधिन्याञ्चाह तत्रैषावचनव्यक्तिः - प्रश्नान्तेऽभिपूजिते च यः प्लुतः सोऽनुदात्तो भवतीति।

चिदिति चोपमार्थे - चिदिति पदे प्रयुज्यमान इति शब्दः सूत्रस्थ प्रयुज्यमान इति शब्दः चिच्छब्दस्य विशेषणमित्यर्थस्य द्योतकः। अन्यथा उपमार्थे कस्मिंश्चिदपि शब्दे प्रयुज्यमाने चित् शब्दः प्लुतो भवतीत्यर्थः स्यात्। तेन अग्निचिद् भायात् इत्यत्र चितः इकारस्य प्लुतः अनुदात्तः स्यात् इष्यते तु भायात् इत्यत्र वाक्य टेः। उपमाया अर्थः उपमार्थः तस्मिन्नुपमार्थे। अत्र "अनुदात्तं प्रश्नान्ताभिपूजितयोः" (८-२-१००) इति सूत्रात्, अनुदात्तं पदम्, "वाक्यस्य टेः प्लुतः उदात्तः" (८-२-८२) इत्यतो वाक्यस्य टेः प्लुतः इत्यंशश्चानुवर्तते। अत उपमार्थेयदि चिच्छब्दः प्रयुज्यते तदा वाक्यस्य टिः प्लुतः सन् अनुदात्तः स्यात्। यथा अग्निचिद् भाया३त्। अस्यार्थः अग्निरिव भायात् प्रकाशते इति। उपमार्थे किम् कथंचिदाहुः। अत्र चिच्छब्दः कष्टार्थे। प्रयुज्यमाने किम्, अग्नि र्माणवको भायात्। अग्निरिव माणवकः प्रकाशते इत्यर्थः। अत्र सिंहो माणवकः इव उपमार्थक चिच्छब्दस्याप्रयुज्यमानत्वेऽपि तदर्थस्य गम्यमानत्वात् वाक्यस्य टिः अनुदात्तः प्लुतश्च स्यात्। इष्यते तु चिच्छब्दे प्रयुज्यमाने एव।

उपरिस्विदासीदिति च। ८-२-१०२।

टेः प्लुतोऽनुदात्तः स्यात्।

(क) उपरिस्विदासी३त्। अधः स्विदासी३दित्यत्र तु 'विचार्यमाणानाम्' ८-२-९७ इत्युदात्तः प्लुतः।

स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु। ८-२-१०३

स्वरितः प्लुतः स्यादाम्रेडिते परेऽसूयादौ गम्ये। असूयायाम् - अभिरूपक३ अभिरूपक, रिक्तं ते आभिरूप्यम्। संमतौ - अभिरूपक३ अभिरूपक शोभनोऽसि। कोपे - अविनीतक३ अविनीतक इदानीं ज्ञास्यसि जाल्म। कुत्सने - शाक्तीक३ शाक्तीक रिक्ता ते शक्तिः।

---

शाङ्करी- उपरिस्विदिति। अत्र 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' (८-२-१००) इति सूत्राद् अनुदात्तमिति, वाक्यस्य टेः प्लुतः उदात्तः इत्यतः वाक्यस्य टेः ततः इति पदञ्चानुवर्तते इति। अत उपरिस्विदासीत् इति वाक्यस्य टिः प्लुतोऽनुदात्तो भवति। उपरिस्विदासी३त् इति। अत्र उपरिस्विदासी३त् इति पदम् अधः स्विदासी३त् इत्यस्याप्युपलक्षणम्।

अत्र "वाक्यस्य टेः प्लुत उदात्तः" (८-२-८२) इत्यतः 'टेः प्लुत' इत्यंशोऽनुवर्तते। अत आम्रेडिते परे वाक्यादेरादिपदस्य टिः स्वरितः प्लुतो भवत्यसूयाद्यर्थेषु गम्येषु।

असूयायाम् - अभिरूपक३ अभिरूपक रिक्तं ते आभिरूप्यम्। अत्र अभिरूपक इति वाक्यास्यादिर्यदामन्त्रितं पदं तस्य 'वाक्यादेरामन्त्रितस्याऽसूयासम्मतिकोपकुत्सनभर्त्सनेषु' (८-१-८) इत्यनेन द्वित्वे परभागस्य 'तस्य परमाम्रेडितम्' (८-१-२) इत्यनेनाम्रेडितसंज्ञा पर पूर्वपदस्य टिः स्वरितः प्लुतो भवति। एवमेव असम्मति-कोप-कुत्सिनष्वपि बोध्यम्।

---

विमर्श- (क) उपरि स्विदासी३त्। (तैत०ब्रा० २-८-९५)

तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३ दुपरि स्विदासी३त्।

रतोधा आसन्महिमान आसन्स्वधा अवस्तात्प्रयतिः परस्तात्॥ ऋग्वेद १०-१२९-५ पृष्ठ ४२५

क्षियाशीः प्रैषेषु तिङाकाङ्क्षम्। ८-२-१०४।

आकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यादाचारभेदे। स्वयं ह रथेन याति३ उपाध्यायं पदातिं गमयति। प्रार्थनायाम् - पुत्रांश्च लप्सीष्ट३ धनं च तात्। व्यापारणे - कटं कुरु३ ग्रामं गच्छ। आकाक्षं किम् - दीर्घायुरसि अग्नीदग्नीन्विहर।

अनन्त्यस्यापि प्रश्नाख्यानयोः। ८-२-१०५।

अनन्त्यस्यान्त्यस्यापि पदस्य टेः स्वरितः प्लुत एतयोः।

अगम३ः पूर्वा३न् ग्रामा३न्। सर्वपदानामयम्। आख्याने - अगम३म्, पूर्वा३न् ग्रामा३न्।

---

शाङ्करी- क्षिया - आचारोल्लंघनम्। आशीः - इष्टाशंसनम् - प्रार्थनाविशेषो वा। प्रैषः - प्रेषणम् व्यापारणम्। आकांक्षतीति - आकांक्षम्, तिङ् चाकांक्षं तिङाकांक्षम्। अत्र तिङ् पदं तिङन्तपरम्। यत्तिङन्तपदमपरतिङन्तमाकांक्षति तत्तिङाकांक्षम्। एषु त्रिष्वपि पूर्वतिङन्तमपरं तिङन्तमवश्यमंपेक्षते। सुबन्तपदानि तु साधनपराणि तान्यवश्यमेव साध्यपरक तिङन्तपदान्यपेक्षन्ते। अत्र "स्वरितमाम्रेडितेत्यादि" (८-२-१०३) सूत्रात् स्वरितमित्यस्य "वाक्यस्य टेः प्लुत उदात्तः" (८-२-८२) इत्यत 'टेः प्लुत' इति चानुवर्तते। अतः क्षियादिष्वर्थेषु गम्येषु आकांक्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यात्। क्षियायां - स्वयं रथेन याति३ उपाध्यायं पदातिं गमयति। अत्र स्वयं रथेन यातीत्यनेन आचारोल्लङ्घनं न गम्यते किन्तु 'उपाध्यायं पदातिं गमयति' इत्यनेन वाक्येन गम्यते। आकांक्षं किम्, दीर्घायुरसि विहर। अत्र पूर्वक्रियया आशीः, द्वितीय क्रियया च प्रेषणञ्च प्रतीयते, किन्तु पूर्वक्रियोत्तरक्रियां नापेक्षते।

अत्र "वाक्यस्य टेः प्लुत उदात्तः" (८-२-८२) इत्यतो 'वाक्यस्य टेः प्लुत' इति, स्वरितमाम्रेडिते"त्यादितः स्वरितमिति, पदस्य (८-१-१६) इति सूत्रञ्चानुवर्तते। अनन्त्यस्यापीत्यत्रत्यापिशब्देनान्त्योऽपि गृह्यते। अतो मूले 'अनन्त्यस्यान्त्यस्यापीत्युक्तम्। तेन अगम३म् पूर्वा३न् ग्रामा३न् इत्यादौ सर्वपदानामयं स्वरितः प्लुतः। एवमेव आख्याने - अगम३म् पूर्वा३न् ग्रामा३न् इत्यत्रापि ज्ञेयम्।

प्लुतावैच इदुतौ। (८-२-१०६)

तार्था - दूराद्धूतादिषु प्लुतो विहितस्यैव ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते। ऐ३तिकायन। औ३पगव। चतुर्मात्रावत्र ऐचौ संपद्येते।

---

शाङ्करी- अत्र "वाक्यस्य टेः प्लुतः उदात्तः" (८-२-८२) इति सूत्रात् प्लुतः इति पदमनुवर्तते। "दूराद् धूते च" (८-२-८४) इति सूत्रेण वाक्यस्य टेः प्लुतो विहितः। तत्र ऐचः प्लुतप्रसङ्गे तदवयवौ इकार उकारोवेव प्लवेते। तत्रावर्ण इवर्ण संयुक्तौ एकार ऐकारौ, अवर्णउवर्ण संयुक्तौ ओकार औकारौ संपद्येते।

अत्रायं निष्कर्षः- "ऊकालोऽज्झस्वदीर्घप्लुतः"। (१-२-२७) इति सूत्रेण त्रिमात्रिकस्यैवाचः प्लुतसंज्ञाविधानात् ऐ३ तिकायनः, औ३पगव इत्यादौ "गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्" (८-२-८६) इति सूत्रेण ऐकार, औकारयोरेव त्रिमात्रिकप्लुतविधाने प्राप्ते, पूर्वत्र अकारं विहायेकारस्यैव, उत्तरत्र च अकारं विहायोकारस्यैव त्रिमात्रिक प्लुतविधानार्थं प्रकृत सूत्रमारब्धम्। तेनोभयत्राकारयोरेकैकां मात्रां सम्मील्य चतुर्मात्रता सम्पनेति ज्ञेयम्। तदुक्तं प्रकृतसूत्रभाष्ये - इष्यत एव चतुर्मात्रः प्लुतः, इति। मतेऽस्मिन् वार्तिककारस्य ऐचश्चोत्तर भूयस्त्वात् इति वचनेनापि सामञ्जस्यं संघटते। अत्र महाभाष्येऽपरमपि मतं चर्चितम्। अथ ह्यर्धमात्राऽवर्णस्यऽध्यर्द्धमात्रे वर्णोवर्णयोरर्द्धतृतीयमात्रः प्राप्नोति। अत्रायमभिप्रायः- अवर्णापेक्षया इवर्णोवर्णयोरर्द्धमात्राऽधिकेति पक्षे समुदायः अर्द्धतृतीयमात्रः (सार्द्धत्रिमात्रः) प्राप्नोति।

अथ मतान्तरे ह्यर्द्धमात्राऽवर्णस्य अर्द्धमात्रेवर्णोवर्णयोरिति पक्षेऽर्द्धचतुर्मात्रः (सार्द्धचतुर्मात्र) समुदायः प्राप्नोति। परमिदं मतद्वयमपि सूत्रं च भिद्यते इत्युक्त्या उपेक्षितम्।

---

तीर्था- ऐ३तिकायनः इत्यत्र "गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्" इति सूत्रेण ऐकाररूपसमुदायस्य प्लुतता प्राप्ता अत्रैव "प्लुतावैच इदुतौ" इति सूत्र निर्देशात् तदवयवस्यैव प्लुतत्वे तस्य त्रिमात्रता अकारस्य चैका मात्रेति समुदायस्य चतुर्मात्रत्वं सम्पद्यते।

औ३पगवः- इत्यत्र गुरोरनृतोऽनन्त्यस्याप्येकैस्य प्राचाम् इति सूत्रेण औकार रूपसमुद्रायस्य प्लुतातता प्राप्ता प्लुतावैच इदुतौ इति सूत्रनिर्देशात् तदवयवोकारस्यैव प्लुतत्वे तस्य त्रिमात्रता अकारस्य चैका मात्रेति समुदायस्य चतुर्मात्रता संपद्यते।

एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्याऽऽदुत्तरस्येदुतौ। ८-२-१०७

अप्रगृह्यस्य एचोऽदूराद्धूते प्लुतविषये पूर्वस्यार्धस्याकारः प्लुतः स्यादुत्तरस्य त्वर्धस्य इदुतौ स्तः। प्रश्नान्ताभिपूजितविचार्यमाण प्रत्यभिवादयाज्यान्तेष्वेव। प्रश्नान्ते – अगमः३ पूर्वा३न् ग्रमा३न् अग्निभूत३ इ। अभिपूजिते–करोषि पट३उ। विचार्यमाणे – होतव्यं दीक्षितस्य गृह३ इ न होतव्य३मिति। प्रत्यभिवादे – आयुष्मानेधि अग्निभूत३इ। याज्यान्ते – स्तोमैर्विधेमाग्नय३इ। पिरगणनं किम्- विष्णुभूते घातयिष्यामि त्वाम्। अदूराद्धूते इति न वक्तव्यम्। पदान्तग्रहणं तु कर्तव्यम्। इह मा भूत्। भद्रं करोषि गौरिति। अप्रगृह्यस्य किम् – शोभने माल। आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः। अग्नय३इ पत्नी वः।

---

**शाङ्करी**- एचोऽप्रगृह्यस्येति – अत्र सूत्रे "वाक्यस्य टेः प्लुत उदात्तः" (८-२-८२) इत्यतः प्लुत इति पदमनुवर्तते, अत एव मूले वृतौ लिखितम् – पूर्वस्यार्धस्याकारः प्लुतः स्यादित्यादि। सूत्रे एच् पदेन एच् प्रत्याहारः परामृश्यते। तत्र ए ओ ऐ औ इतीमे चत्वारोऽपि वर्णाः संयुक्ताक्षरशब्देनोच्यन्ते। एषु अकारेकारयोः सम्मेलनेन ए ऐ इति। अकारोकारयोः सम्मेलनेन ओ औ च सम्पद्येते। सूत्रस्यास्योपरि वार्तिककारो विषय परिगणनमपि करोति – प्रश्नान्ताभिपूजितेति – प्रश्नान्ते – अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूत३इ। अत्र अग्निभूत इत्यत्र पूर्वार्धस्य एचोऽप्रगृह्यस्येत्या- दिनाऽऽकारादेशो भवति। स चाऽऽकारः "गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्" (८-२-८६) इति सूत्रेण प्लुतः, अनुपात्त प्रश्नान्ताभिपूजितार्थयोः परेत्यनेनुदात्तोऽपि भवति। असि चात्र वाक्यघटक सर्वपदानां टेः प्लुतः अनन्त्यस्यापि प्रश्नाख्यानयोः इत्यनेन। एकारस्योत्तरार्ध इद्रूपतां अभिपूजिते करोषि पट३उ अत्र पटो इत्यत्र पूर्वभागस्यात् दूराद्धूताय दूराद्धूते च इत्यनेन प्लुतः, अन्यथा "गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्" इत्यनेनैव प्लुतः। स च अनुदात्तं प्रश्नान्ताभिपूजितयोः, इत्यनेन अनुदात्तो भवति। विचार्यमाणेति –होतव्यं दीक्षितस्य गृह३इ न होतव्य३मिति अत्रैचः पूर्वभागस्याकारादेशे तस्य विचार्यमाणानामित्यनेन प्लुतः। प्रत्यभिवादे आयुष्मानेधि।

अग्निभूत३इ – अत्रैचः पूर्वभागस्य एचोऽप्रगृह्यस्य इत्यनेनाकारः प्लुतस्तु प्रत्यभिवादेऽशूद्रे इत्यनेन। याज्यान्ते – स्तोमैर्विधेमाग्नय३इ। अत्र यकारघटकाकारस्य

**शाङ्करी-** याज्यान्ताः इति सूत्रेण प्लुतः। परिगणनं किम्? प्रश्नान्तादि वार्तिकं किमर्थमिति भावः। विष्णुभूते इति। वार्तिकोक्त परिगणनाभावे विष्णुभूते घातयिष्यामि त्वाम् इत्यत्राप्येचः पूर्वभागस्याकारादेशे प्लुतता स्यात्।

अदूराद्धूते इति न वक्तव्यम् – अत्रायमभिप्रायः – वार्तिकोक्तपरिगणितातिरिक्त दूराद्धूतादि स्थलेषु सूत्रस्य स्वयमप्रवृत्त्या सूत्रेऽदूराद्धूते इति कथनं निष्प्रयोजनमित्यर्थः। पदान्तग्रहणं तु कर्तव्यम् – तदभावे भद्रं करोषि गौः इत्यत्र "स्वादिष्वसर्वनामस्थाने" इति सूत्रेण सर्वनामस्थाने सु प्रत्यय परे गौः इत्यस्य पदत्वाभावेऽपि तदन्तौकाररूपैचः पूर्वभागस्याकारादेशे प्लुतत्वापत्तिः स्यात्। कृते तु पदान्तग्रहणे विसर्गस्य पदान्तत्वान्नेयमापत्तिः। अप्रगृह्यस्येति किम्? एतदभावे 'शोभने माले' इत्यत्र "ईदूदेद्द्विवचनं प्रगृह्यम्" इत्यनेन एदन्तर्द्विवचनस्य प्रगृह्यसंज्ञा स्थलेऽपि एतत्सूत्रप्रवृत्तौ प्लुतत्वापत्तिः स्यात्।

(वा) आमन्त्रिते छन्दसीति दूरादाह्वाने सत्वात् प्रश्नान्तादि वार्तिकोक्त परिगणनेन च आमन्त्रिते प्ल ुतस्याप्रवृत्त्या वार्तिकमिदमारब्धम्। अग्न३इ पत्नी वः। अत्र अग्निशब्दस्य सम्बुद्धौ रूपम् अग्ने इति अतः सामन्त्रितम्" इति सूत्रेण तदन्तस्य आमन्त्रितसंज्ञायां प्रकृतवार्तिकनिर्देशात् एकाररूपैचः पूर्वभागस्याकारादेशे प्लुतत्वं प्रवर्तते इति।

---

**विमर्श-** अत्रायं विशेषः – अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३इ इत्यत्र भूता३इ इत्यत्र आकारः प्लुतः अनुदात्तं प्रश्नान्ताभिपूजितयोः इत्यनेन भवतीति डॉ उमाशङ्कर ऋषि तथा डॉ० दामोदर महतो महोदयस्य च लेखनं न समीचीनम् – वैयाकरणसिद्धान्तकौमुदी ग्रन्थविरोधात् – तथा हि दूराद्धूतादिषु सिद्धस्य प्लुतस्य अनुदातत्व मात्रमनेन विधीयते इति।

अपि च सुबोधिनी व्याख्यायं जयकृष्ण भट्टोऽपि लिखति नानेन प्लुतो विधीयते किन्तु दूराद्धूतादिषु विहितस्य प्लुतस्योदातत्वे प्राप्ते अनुदात्तं प्रश्नान्ताभिपूजितयोरनुदातात्व गुणमात्रं विधीयते इति। वस्तुतस्त्वत्र सर्वेऽपि व्याख्यातारो भ्रान्ताः – सुबोधिनी व्याख्याकृत् अनुदात्तं प्रश्नान्ताभिपूजितयोः इत्यत्रेदं लिखति – अन्यत्र एचोऽप्रगृह्यस्य इति सूत्रेण प्रश्नान्ताभिपूजित विचार्य इत्यादि वार्तिके च- अभिपूजिते इति प्रतीकोपरि लिखति 'अनुदात्तं प्रश्नान्ताभिपूजितयोः प्लुतः' इति प्लुत इति। मम मते तु आकारोऽस्ति गुरुः अतो गुरोरनृतोऽनन्त्यस्याप्येकस्य प्राचाम् इत्यनेनैव प्लुतः अनुदात्तं प्रश्नान्ताभिपूजितयोरित्यनेनानुदात्तत्व मात्रं विधीयत इति।

तयोर्य्वावचि संहितायाम्। ८-२-१०८।

इदुतोर्यकारवकारौ स्तोऽचि संहितायाम्। अग्न३याशा। पट३वाशा। अग्न३यिन्द्रम्। पट३वुदकम्। अचि किम् अग्ना३ इ वरुणौ। संहितायां किम् अग्न३ इ इन्द्रः। संहितायामित्यध्यायसमाप्तेरधिकारः। इदुतोरसिद्धत्वादयमारम्भः सवर्णदीर्घस्य शाकल्यस्य च निवृत्त्यर्थः। यवयोरसिद्धत्वाद्'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य'।८-२-४।इत्यस्य बाधनार्थो वा।

---

**शाङ्करी**- तयोर्य्वावचि - अत्र तयोरिति पदेन पूर्वसूत्रोपात्त इदुतौ परामृश्यते। य च व च य्वौ इतरेतयोगद्वन्द्वः अत इदुतोर्यकारौ स्तः अचि संहितायाम्। अग्ने इति अग्नि शब्दस्य संबुद्धौ रूपम्। अग्ने आशा इत्यवस्थायाम् "एचोऽप्रगृह्यस्या दूराद्धूते" ८-२-१०७) इत्यनेन एचः पूर्वभागस्य अकारादेशः स चाकारः प्लुतोऽपि भवति, उत्तरश्चेकारः, तेन अग्न३ इ आशा इति स्थिते इकारस्य प्रकृतसूत्रेण यादेशे, अग्न३ याशा इति। एवमेव पट ३ वाशा इत्यत्र पटो आशा इत्यवस्थायाम् "एचोऽप्रगृह्यस्यादूराद् धूते" इत्यनेन पूर्वभागस्य अकारादेशः प्लुतश्च भवति, उत्तरस्य तु प्रकृतसूत्रेण वादेशः पट३वाशा इति। एवमेव अग्न३यिन्द्र। पट३वुदकम् इति। यदीदं सूत्रं नोच्यते तदा अग्न३ इ इन्द्रम्, पट३ उ उदकमित्यत्र च "अकः सवर्णे दीर्घः" इत्यनेन सवर्ण दीर्घः स्यात्।

---

**विमर्श**- इदुतोसिद्धत्वादिति - अत्रेदमाशंक्यते अग्न३याशा इत्यत्र अग्ने आशा इत्यवस्थायाम् एचोऽप्रगृह्यस्यादूराद्धूते ८-२-१०७। इत्यनेनैचः पूर्वभागस्याकारादेशे उत्तरस्यार्धस्य इदुतादशे च अग्न३ इ आशा इत्यत्र आकारेऽपि पर इकारस्य "इको यणचि" (६-१-७७) इत्यनेन यण्येवोक्तरूपसिद्धौ 'तयोर्य्वा वचीति सूत्रं व्यर्थमिति चेन्न, सपादसप्ताध्यायीस्थ यण्कार्यं प्रति त्रिपादीस्थ इदुतोरसिद्धत्वात् प्रकृतसूत्रस्यावश्यकत्वात्। पुनरिदं विचार्यते "प्लुतप्रगृह्या अचि नित्यम्" (६-१-१२५) इत्यनेन एहि कृष्ण३अत्र गौश्चरति इत्यत्र प्लुतमुद्दिश्य अचि परे प्रकृतिभावविधानाज् ज्ञाप्यते 'सिद्धः प्लुतः स्वर सन्धिषु' इति। अत 'एचोऽप्रगृह्यस्या... इत्यनेन कृतस्य प्लुतप्रकरणस्योपरि इदुतोर्नासिद्धत्वम्। तेनेदुतोः सिद्धत्वात्तदुद्दिश्य "इको यणचि" इत्यनेनैव यणि यवयोः सिद्धत्वात् प्रकृतसूत्रं व्यर्थमेवेत्याह - सवर्णदीर्घत्वस्य शाकल्यस्य च निवृत्त्यर्थेति - अत्रायमभिप्रायः यदि 'तयोर्य्वेति सूत्रं

**विमर्श**- न स्यात्तदा अग्न३ इ इन्द्रम्, पट ३ उ उदकम्, इत्यत्र च षाष्ठिकम् ''इको यणचि'' (६-१-७७) इति यणादेशं बाधित्वाऽपवादत्वात् ''अकः सवर्णे दीर्घः'' (६-१-१०१) इत्यनेन सवर्णदीर्घः स्यात्।

अग्न३ याशा, पट३ वाशा इत्यत्र च इत्यवस्थायाञ्च 'इकोऽसवर्णे शाकल्यश्च ह्रस्वश्च' (८-१-१२८) इत्यनेन प्राप्त प्रकृतिभावस्य बाधनार्थं प्रकृतसूत्रारम्भः तदुक्तं सवर्णदीर्घत्वस्य शाकल्यस्य चेति। यवयोरसिद्धत्वादिति - अस्य वाक्यस्यावसाने बाधनार्थो वा इत्युक्तम्। तेन प्रतीयते सूत्रस्यास्य सार्थक्यं प्रयोजनान्तरेणाप्यस्ति। तथाहि - भो इ इ इन्द्रम्, भो ३ यिन्द्रम् अत्र भो शब्दस्य छान्दसत्वात् प्लुतः, सति तस्मिन् ततः परस्य प्लुतपूर्वकस्याप्लुतविकारस्येकारस्य निपातत्वात् ''निपात एकाजनाङ्'' १-१-१४ इत्यनेन प्रगृह्यसंज्ञायां प्रकृतिभावे प्राप्ते तद्वाधनार्थमपीदं सूत्रं कर्तवयम्। यणादेशः प्लुतपूर्वस्य चेति वक्तव्यम् (किमर्थ) दीर्घशाकलप्रतिषेधार्थम्। तेनैवंत्रापि यणसिद्धे दीर्घशाकलप्रतिषेधे च इदं न कर्त्तव्यम्, इत्युक्ते पुनः कौमुद्यामस्य सार्थक्यमुपपाद्यते ''उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य'' बाधनार्थो वेति। अत्रायं निष्कर्षः - यदि तेन वार्तिकेन यण् स्यात् तदा उक्तोदाहरणेषु यकारपरस्येकारस्य यणः परत्वात् उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (८-२-४) इत्यनेन स्वरित स्वरः स्यात्। अतस्तद्वाधनार्थमिदं ''तयोर्य्वावचि संहितायाम्'' (८-२-१०८) इति सूत्रं कर्तव्यमेव। कृते चास्मिन् पूर्वत्रिपादिदृष्ट्या पर त्रिपाद्या असिद्धत्वात् यण परत्वाभावानोक्त स्वरितस्वरः। इति।

---

**भावार्थ**-अग्नयाशा इस प्रयोग में अग्ने३आशा, पटो३ आशा इस अवस्था में 'एचोऽप्रगृह्यस्यादूराद्धूते (८-२-१०८) इस सूत्र से एच् पूर्वार्ध को आकार और प्लुत तथा उत्तरार्ध को इकार और उकार तथा दोनों को उदात्त होते हैं। अतः अग्ना ३ इ आशा तथा पटा ३ उ आशा इस स्थिति में ''इको यणचि'' (६-१-७७) एवं प्रकतसूत्र के भाष्य में कहा दीर्घ शाकलप्रतिषेधार्थं वा भाष्य से ही यण् हो जायेगा, पुनः इस सूत्र के वैयर्थ की शंका की गई है। इस आक्षेप का समाधान किया गया है कि - यदि ''इको यणचि'' से यण किया जायेगा तो सपाद सप्ताध्यायिस्थ यण की कर्तव्यता में त्रिपादिस्थ इदुत् के असिद्धस्थ होने के कारण यण् नहीं हो सकेगा। इसका समाधान किया गया है कि 'एहि कृष्ण ३ अत्र गौश्चरति' इस प्रयोग में अत्र के अच् को पर में मानकर कृष्ण के अकार प्लुत को उद्देश्य करके ''प्लुतप्रगृह्या अचिनित्यम्'' ६-१-१२५ सूत्र से प्लुत को प्रकृति

भाव हुआ है अतः इससे सिद्ध हुआ कि स्वरसन्धि की कर्तव्यता में प्लुतसिद्ध रहता है। ''इको यणचि'' ६-१-७७ इति भाष्ये उक्तम् यणादेशः प्लुत पूर्वस्यचेति वक्तव्यम् अग्ना३ इ इन्द्रम् - अग्ना३यन्द्रिम् यहाँ पहले अग्ने३इन्द्रम् रहा इसके पश्चात् एकार को ''एचोऽप्रगृह्यस्यादूराद्धूते'' ८-२-१०७ से आकार एवं इकार हुआ इसलिये सपादसप्ताध्यायिस्थ ''इको यणचि'' ६-१-७७ की दृष्टि त्रिपादिस्थ ''एचोऽप्रगृह्यस्यादूराद्धूते'' ८-२-१०७ के असिद्ध होने के कारण इकारोकार असिद्ध हो जायेंगे। अर्थात् अपने रूप में दिखाई नहीं देंगे। इसलिये इन इकार उकार को यण् करने के लिये ''तयोर्ध्वावचि संहितायाम्'' ८-२-१०८ सूत्र आवश्यक है। 'यणादेशः प्लुतपूर्वस्य चेति वक्तव्यम्' इस वार्तिक की आवश्यकता अग्ना३यिन्द्रम्, अग्नाइ इन्द्रम् इस स्थिति में सवर्णदीर्घ को बाधने के लिये एवं अग्ना याशा, एवं अग्ना इ आशा इस स्थिति में ''इकोऽसवर्णे शाकल्य ह्रस्वश्च'' ६-१-१२७ से प्राप्त प्रकृतिभाव को बांधने के लिये प्रकृतवार्तिक आवश्यक है। ये दोनों कार्य भी ''तयोर्य्वावचि संहितायाम्'' सूत्र से हो जायेंगे वार्तिक व्यर्थ है। सूत्र का कार्य प्रकृत वार्तिक से हो जायेगा सूत्र न रखा जाय। इस विवाद में यदि ''इको यणचि'' (६-१-७७) सूत्रस्थ वार्तिक से यण् होगा तो यह यण् त्रिपादिस्थ उदात्तस्वरितयोर्यण स्वरितोऽनुदात्तस्य (८-२-४) की दृष्टि से सिद्ध रहेगा। अतः उससे पर में आने वाले (भो३ इ इन्द्रम्, भो३ यिन्द्रम्) इस अवस्था में उदात्त इकार के स्थान में आये हुए यण् से पर इकार को स्वरित स्वर हो जायेगा जो अभिप्रेत नहीं है। यदि 'तयोर्य्वावचि संहितायाम् (८-२-१०८)' से यण् होगा तो वह पर त्रिपादी से निष्पन्न होने के कारण पूर्व त्रिपादी स्वर की कर्तव्यता में असिद्ध होने के कारण बाधित हो जायेगा।

---

**तीर्था-** अग्न३ याशा - अत्र अग्ने इति अग्नि शब्दस्य सम्बुद्धौ रूपम्। ततः आशा शब्दे परे ''एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्याऽऽदुत्तरस्येदुतौ''८-२-१०७ इति सूत्रेण एकारस्य पूर्वार्धस्य आत् उत्तरार्धश्चेत् कृते अग्ना३ इ आशा इति स्थितौ इकारस्य ''तयोर्य्वावचि संहितायाम्'' इत्यनेन यादेशे अग्ना३ याशा भाष्ये आकारान्त एव पाठः इति साधुः।

**तीर्था-** पट३ वाशा- पटु शब्दस्यासम्बुद्धौ पटो इति रूपम्, तत आशा शब्दे परे "एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्याऽऽदुत्तरस्येदुतौ" इति सूत्रेण ओकारस्य पूर्वार्द्धस्य आत् आदेशः प्लुतश्च जातः उत्तरार्धस्योकारादेशः पटा३उ आशा इति स्थितौ उकारस्य "तयोर्य्वावचि संहितायाम्" इति सूत्रेण वकारादेशे पट३ वाशा इति साधु।

अग्न३ यिन्द्रम्। अत्र अग्ने इति अग्नि शब्दस्य सम्बुद्धौ रूपम्, तत इन्द्रम् शब्द परे "एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्याऽऽदुत्तरस्येदुतौ" इति सूत्रेण एकारस्य पूर्वार्द्धस्य अदादेशे स प्लुतश्च जात उत्तरार्धस्येकारादेशे च जाते अग्न ३ इन्द्रम् इति स्थितौ इकारस्य "तयोर्य्वावचि संहितायाम्" इति सूत्रेण यादेशे अग्न यिन्द्रम् इति साधु।

पट३ वुदकम् - पटो३ उदकम् इति स्थितौ "एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्याऽऽदुत्तरस्येदुतौ" इति सूत्रेण ओकारस्य पूर्वार्द्धस्यकारादेशः प्लुतश्च जात उत्तरार्धस्योकारादेशे च जाते पट ३ उ उदकम् इति स्थितौ उकारस्य "तयोर्य्वावचि संहितायाम्" इति सूत्रेण वकारादेशे पट३ वुदक् इति साधु।

---

**भावार्थ-**"तयोर्य्वावचि संहितायाम्" इस सूत्र का कार्य "इको यणचि" इस सूत्र से ही चल जायेगा अतः यह सूत्र व्यर्थ है। "इको यणचि" इस सूत्र के भाष्य में लिखा है 'यणादेशः प्लुतपूर्वस्य चेति वक्तव्यम्' अग्ना३ इ इन्द्रम् - अग्ना३यिन्द्रम्, यहाँ पहले अग्ने३ इन्द्रम् रहा इसके पश्चात् एकार को "एचोऽप्रगृह्यस्यादूराद्धूते" (८-२-१०७) से आकार और इकार हुआ इसलिये सपाद सप्ताध्यायी "इको यणचि" (६-१-७७) की दृष्टि में त्रिपादी "एचोऽप्रगृह्यस्यादूराद्धूते" (८-२-१०७) असिद्ध होने के कारण इकारोकार असिद्ध हो जायेंगे अर्थात् अपने रूप में दिखाई नहीं देंगे। इस लिये इकार उकार को यण् करने के लिये "तयोर्य्वावचि संहितायाम्" (८-२-१०८) सूत्र आवश्यक है। इस वार्तिक की आवश्यकता अग्ना३ यिन्द्रम् अग्ना३ इन्द्रम् स्थिति में "इकोऽसवर्णे शाकल्य ह्रस्वश्च" (६-१-१२७)से प्राप्त प्रकृतिभाव को बाधने के लिये प्रकृत वार्तिक आवश्यक है। ये दोनों कार्य भी "तयोर्य्वावचि०" सूत्र से ही हो जायेंगे। वार्तिक व्यर्थ है। सूत्र का कार्य प्रकृत वार्तिक से हो जायेगा सूत्र को न रखा जाय। इस विवाद में यदि "इको यणचि" (६-१-७७) सूत्रस्थ वार्तिक से यण् होगा तो यह यण् त्रिपादीस्थ "उदात्तस्वरितोर्यण् स्वरितोऽनुदात्तस्य" ८-२-४ की दृष्टि में सिद्ध रहेगा।

मतुवसो रु सम्बुद्धौ छन्दसि। ८-३-१।

रु इत्यविभक्तिकौ निर्देशः। १-१-५२। मत्वन्तस्य वस्वन्तस्य च रुः स्यात्। अलोन्त्यस्येति पतिभाषया नकारस्य। (क) इन्द्र मरुत्व इ॒ह पा॑हि सोम॑म्। (तै०सं० १.४.१८.१) हरि वो मे॒दिं॑नं त्वा। (तै०सं० ४.७.१४.१०) पृष्ठ १९६

'छन्दसीरः' इति वत्वम्।

---

**शाङ्करी**-मतुवसो - इति। मतु इति मतुपोऽनुबन्ध विनिर्मुक्तस्य वसू इति क्वसु इत्यस्यानुबन्ध विनिर्मुक्तस्य ग्रहणम्। अतो मतुश्च वस् चेति मतुवसौ इतरेतरयोगद्वन्द्वः तयोः मतुवसोः। रु इति लुप्त प्रथमाविभक्तत्यन्तः। अत्र अल्पाच् तरम् इति सूत्र निर्देशात् वस् इत्यस्य पूर्वनिपातः प्राप्तः, निपातनात् अल्पाच् तरस्य वस् इत्यस्य परनिपातः। रु इति लुप्तप्रथमाविभक्तत्यन्तस्य पूर्वसूत्रात् संहितायामित्यनुवर्तत्ते। अतो मत्वन्तस्य वस्वन्तस्य च पदस्य रुः इत्यादेशः स्यात् सम्बुद्धौ छन्दसि। इन्द्रमरुत्व इहपाहि सोमम्। अत्र मरुत्व इति मरुतो यस्यसन्तीति विग्रहे मरुत्शब्दान्मतुप् अनुबन्धलोपः "झयः" इत्यनेन मकारस्य वत्वं "स्वादिष्वसर्वनामस्थाने" इत्यनेन प्राप्तपदसंज्ञायां जस्त्वे प्राप्ते तसौ मत्वर्थे इत्यनेन मत्वाज्जस्त्वबाधः। उगिदचां इत्यनेन नुमागमः तकारस्य संयोगान्तलोपः नकारस्य प्रकृतसूत्रेण रुत्वम्, तस्य "भोभगो०" इत्यादिना यत्वम्, तस्य "लोपः शाकल्यस्ये"त्यनेन लोपः। पाहि इति पाधातोर्लोटि मध्यमपुरुषैकवचने रूपम्, "बहुलं छन्दसि" इत्यनेन शपोऽभावात् पिबादेशो न। हरि वो मेदिनं त्वा। हरिशब्दान्मतुप्, अनुबन्धलोपः, "छन्दसीरः" इत्यनेन मकारस्य वकारः, तकारस्य प्रकृतसूत्रेण रुत्वं तस्य "हशि चे"त्यनेनोत्वम्।

---

**तीर्था**- मतुवसो रु सम्बुद्धौ छन्दसि (८-३-१) इन्द्र मरुत्व इ॒ह पा॑हि। मरुतो यस्य सन्तीति विग्रहे मरुत् शब्दा मरुच्छब्दात् मतुप् प्रत्ययः अनुबन्धलोपः, "झयः" इति सूत्रेण मकारस्य वकारः "स्वादिष्वसर्वनामस्थाने" इत्यनेन मरुच्छब्दस्य प्राप्त पद संज्ञायाः तसौ मत्वर्थे इत्यनेन मत्वाद् बाधे तकारस्य जश्त्वाभावः मरुत्वत् इति स्थितौ तस्य "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकत्वात् सुविभक्तौ मतुपः "उगिदचां सर्वनामस्थानेऽधातोः" इत्यनेन नुमागमे अनुबन्धलोपे मरुत्वन्त् स् इति स्थितौ सकारस्य "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन तकारस्य च "संयोगान्तस्य लोपः" इत्यनेन च लोपः, सकारस्य "मतुवसो रु संबुद्धौ छन्दसि"

दाश्वान्साह्वान्मीढ्वांश्च। (६-१-१२)।

एते क्वस्वन्ता निपात्यन्ते। मीढ्वस्तोकाय तनयाय।

---

**शाङ्करी**- मतुवसो रु सम्बुद्धौ छन्दसि (८-३-१) इति सूत्रेण वसु शब्देन क्वसुप्रत्ययो गृह्यते अतस्तत्प्रसङ्गात् क्वसुप्रत्ययान्ता इमेऽपि दाश्वान् इत्यादयः त्रयः प्रयोगा निपातनात् साध्यन्ते दाश्वान् इत्यादिना। इमे वेदे लोके चोभयत्रापि प्रयुज्यन्ते। दाश्वान् - दानार्थकाद् दाशृ धातोः "छन्दसि लिट्" इति सूत्रात् लिट् लकारेः तस्यस्थाने "क्वसुश्च" इति सूत्रात् क्वसु आदेशः अनुबन्धलोपः तस्य स्थानिवद्भावात् लिट् प्रयोज्य द्वित्वे इडागमे च प्राप्ते प्रकृत सूत्रेण निपातनाद् उभयोरभावः "उगिदचां सर्वनामस्थानेऽधातोः" इत्यनेन नुमागमः "अत्वसन्तस्य चाधातो"रित्यनेन उपधादीर्घे द्वितीयसकारस्य "हल्ङ्यादि" लोपे प्रथमस्य "संयोगान्तस्य लोपः" द्वाश्वान् इति।

साह्वान्- भ्वादिगणपठित मर्षणार्थकात् आत्मनेपदीय षह् धातोर्लिट्तस्य क्वसुरादेशः स्थानिवद्भावेन लिट् प्रयोज्यद्वित्वे इडागमे च प्राप्ते निपातनादुभयोरभावः

---

**तीर्था**- इत्यनेन रुत्वे तस्य "भो भगो अघोऽपूर्वस्ये"त्यनेन यत्वं यकारस्य च "लोपः शाकल्य" च इत्यनेन लोपे मरुत्व इति साधु।

पाहि इति पानार्थकात् पाधातो लेट्लकारस्य मध्यमपुरुषैकवचने सिप् विभक्तौ "बहुलं छन्दसि" इत्यनेन शपोऽभावे पिबादेशाभावे सि इत्यस्य "सेर्ह्यपिच्च" इत्यनने हि आदेशे पाहि इति साधु -लोके पिब इत्यर्थः।

हरिवो मेदिनं त्वा - अत्र हरि शब्दात् मतुप्प्रत्ययेऽनुबन्धलोपे मकारस्य छन्दसीरः इत्यनेन वत्वे सम्बुद्धौ सु प्रत्ययेऽनुबन्धलोपे "उगिदचां सर्वनामस्थाने चाधातोः" इत्यनेन नुमागमे हरिवन् त् स् इति स्थितौ "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन सकारलोपे तकारस्य संयोगान्तलोपे च नकारस्य "मतुवसो रु सम्बुद्धौ छन्दसि" इत्यनेन रुत्वं तस्य "हशि च" इत्यनेन उत्वे हरि वो मेदिनं त्वा इति साधु।

---

**विमर्श**- (क) इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य।

तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयः -सुयज्ञाः। (तै०सं० १.४.१८.१ पृष्ठ २१)

(ख) अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः।

इमं नो यज्ञं विहवे जुषस्वास्य कुर्मो हरिवो मेदिनं त्वा। (तै०सं० ४.७.१४.१० पृष्ठ १९६)

वन उपसंख्यानम्। क्वनिब्वनिपोः सामान्यग्रहणम्। अनुबन्धपरिभाषा तु नोपतिष्ठते। अनुबन्धस्येहानिर्देशात्। यस्त्वायन्तं वसुना प्रातरित्वः। इणः क्वनिप्।

---

**शाङ्करी**– धातोः परस्मैपदत्वमुपधादीर्घत्वमपि निपात्यते, प्रथमाया एकवचनेसुप्रत्ययः "उगिदचां सर्वनामस्थानेऽधातोः" इत्यनेन नुमागमे "अत्वसन्तस्य चाधातोः" इत्यनेन उपधादीर्घे साह्वान् स् सु इति स्थिते "हल्ङ्याभ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन द्वितीय सकारस्यलोपः प्रथमसकारस्य "संयोगान्तस्य लोपः" साह्वान् इति।

मीढ्वान् – भ्वादिगणपठितसेचनार्थकाद् मिह् धातोः "छन्दसि लिट्" इति सूत्रेण लिट् लकार तस्य स्थाने "क्वसुश्च" इति सूत्रेण क्वसुः आदेशेऽनुबन्धलोपे मिह्वस् इति स्थितौ वस इत्यत्र स्थानिवद्भावेन लित्वमिति उदिश्य "लिटि धातोरनभ्यासस्ये"त्यनेन द्वित्वे "वस्वेकाजाद्धसाम्" इत्यनेन इडागमे च प्राप्ते दाश्वान्, साह्वान्, मीढ्वाश्चेति सूत्रेण निपातनादेव अकारस्योपधा दीर्घे ढत्वे च कृते प्रथमाया एकवचने सुप्रत्यये पूर्वम् "अत्वसन्तस्य चाधातोः" इत्यनेनाकारस्योपधादीर्घे "उगिदचां सर्वनामस्थानेऽधातोः" इत्यनेन नुमागमेऽनुबन्धलोपे मीढ्वान् स् सु इति स्थितौ द्वितीय सकारस्य हल्ङ्यादिना लोपे प्रथमसकारस्य संयोगान्तलोपे मीढ्वान् इति साधुः।

क्वनिब्वनिपोरिति उभयत्राप्यनुबन्धनिवृत्तौ वन इत्यस्यैवावशेषात् अनुबन्धपरिभाषेति – वार्तिके वनेत्यत्र कस्याप्यनुबन्धस्यानिर्देशात् तदनुबन्धक ग्रहणे नातदनुबन्धकस्येति परिभाषा नोपतिष्ठते इत्यर्थः।

---

तीर्था तु शाङ्करीव्याख्ययैव गतार्था।

---

**विमर्श**– दाश्वान्–

ओमासश्चर्षणी धृतो विश्वे देवास आगत।
दाश्वांसो दाशुषः सुतम्। (ऋग्वेद १-३-७)

अर्थ– हे विश्वेदेवगण! तुम लोग रक्षक हो तथा मनुष्यों के पालक हो तुम हव्यदाता यजमान के प्रस्तुत सोमरस के लिए आओ। तुम यज्ञ फल दाता हो।

साह्वान् –यह लौकिक प्रयोग बलाहक का पर्यायवाची है।

मीढ़स्तोकाय। परिणो हेती रुद्रस्य वृज्या परित्वेषस्य दुमतिर्महीगात्।
अवस्थिरा मघवं दम्यस्तनुष्व मीढवस्तोकाय तनयाय मृल॥

रुद्र का हेति आयुध हमें छोड़ दे। दीप्त रुद्र की महती दुर्मति क्रोध हमें छोड़ दे। हे सेचन समर्थ रुद्रधनवान् यजमान् के प्रति अपने धनुष की ज्या-प्रत्यञ्चा शिथिल करो। हमारे पुत्रों और पोत्रों को सुखी करो।

उभयथर्क्षु। (८-३-८)

अम्परे छवि नकारस्य रुर्वा। पशूँस्तांश्चक्रे।

---

**शाङ्करी**- अत्र ''पुमः खय्यम्परे'' (८-३-६) इति सूत्रात् अम्परे इति सतुवसो रु (८-३-१) इति सूत्रात् रु इति ''नश्छव्यप्रशान्'' (८-३-७) इति सूत्रान्नश्छविचानुवर्तते। अत आह अम्परे छवि नकारस्य रुर्वा इति। अत्र पशून्तान् चक्रे इति स्थिते ''नश्छव्यप्रशान्'' (इत्यनेन नित्यं रुत्वे प्राप्ते उभयथर्क्षु) इत्यनेन विकल्पेन रुत्वे विधानार्थमिदं सूत्रम्। अत्र अत्रानुनासिकः पूर्वस्य तु वा इत्यनेन वैकल्पिकेन अनुनासिकः, अनुनासिकाभावपक्षे अनुनासिकात् परोऽनुस्वारः इत्यनेनानुस्वारागमे पशूं रुतांरुचक्रे इति स्थिते ''खरवसानयोर्विसर्जनीयः'' इत्यनेन विसर्गे ''विसर्जनीयस्य सः'' इत्यनेन सत्वे ''स्तोःश्चुना श्चुः'' इत्यनेन श्चुत्वे पशूँस्ताश्चक्रे रुत्वाभावपक्षे पशून्ताञ्चक्रे इति।

---

**तीर्था**- प्रातरित्वः- प्रातपूर्वकात् अदादिगणपठित गत्यर्थकात् इण्धातो' र्वन उपसंख्यानम्' इति वार्तिकात् क्वनिप् प्रत्ययः अनुबन्धलोपः प्रत्ययस्य कित्वात् धातोरिकारस्य सार्वधातुकार्धधातुकयोरित्यनेन प्राप्त गुणस्य ''क्ङिति चे''त्यनेन निषेधः प्रत्ययस्य पित्वात् ''ह्रस्वस्य पिति कृति तुक्'' इत्यनेन धातोः तुगागमः सम्बुद्धौ इत्वन् स् इति स्थितौ सकारस्य ''हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्'' इत्यनेन ''लोपे मतुवसो रु सम्बुद्धौ छन्दसि'' इत्यनेन नकारस्य रुत्वे अनुबन्धलोपे रेफस्य ''खरवसानयोर्विसर्जनीयः'' इत्यनेन विसर्गः प्रातरित्वः इति सिद्धम्।

पशूँस्तांश्चक्रे- इत्यत्र पशून् तान् चक्रे इत्यवस्थायां द्वयोर्नकारयोः अम्परक छवि परकत्वात् लोकवत् ''नश्छव्यप्रशान्'' इत्यनेन नित्यं रुत्वे प्राप्ते ''उभयथर्क्षु'' इत्यनेन विकल्पेन पशून् घटकनकारस्य रुत्वाभावे तान् घटकनकारस्य च रुत्वे तीर्था-

---

**विमर्श**- प्रातरित्वा - (ऋग्वेद १-१२५-१)

प्रातरत्नं प्रातरित्वा दधाति तं चिकित्वान्प्रतिगृह्यानिधत्ते।

तेन प्रजां वर्धयमान आयू रायस्पोषेणसचते सुवीरः॥ ऋग्वेद १-१२५-१

अर्थ - स्वनय राजा ने प्रातः काल आकर रत्नादि रख दिये। कक्षीवान् ने उठकर उन्हें ग्रहण किया। उन्होंने उस रत्नराजि द्वारा प्रजा और आयु की वृद्धि करके धन लाभ किया।

तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम्।

पशून्तांश्चक्रे वायव्यां नारण्यानारण्यान्ग्राम्याश्च ये। (ऋग्वेद १०-९०-८)

दीर्घादटि समानपदे। (८-३-९)

दीर्घान्नकारस्य रुर्वा स्यादटि तौ चेन्नाटौ एकपादस्थौ स्याताम्।

देवाँ अच्छा सुमती। महाँ इन्द्रो य ओजसा। उभयथेत्यनुवृत्तेर्नेह। आदित्यान्याचिषामहे।

---

**शाङ्करी**- दीर्घादटि इति। समानशब्दः एक पर्यायः। समानश्चासौ पादश्च समानपादः तस्मिन् समानपादे- एकपादेस्थे इत्यर्थः। अत्र "नश्छव्यप्रशान्" ८-३-७ इत्यतो नः इति षष्ठ्यन्तं पदम्, "मतुवसो रु सम्बुद्धौ छन्दसि" (८-३-१) इत्यतो रु इति पदम्, "उभयथर्क्षु" (८-३-८) इति सूत्रमप्यनुवर्तते। अतो दीर्घात्परस्य नकारस्य रुर्वा स्यात् अटि परे, तौ चेन्नकाराटौ (कार्यी निमित्तौ) ऋगेकपादस्थौ स्याताम्। देवान् अच्छा इत्यत्र महान् इन्द्रो इत्यत्र च नकारयोः दीर्घात् परत्वात् अट्परकत्वाच्चानेन सूत्रेण रुत्वं "भो भगो अघो अपूर्वस्ये"त्यनेन यत्वं यकारयोर्लोपः शाकल्यस्येत्यनेन लोपः, देवा इत्यत्र महा इत्यत्र च आकारयोः "आतोऽटि नित्यम्" इत्यनेन नित्यमनुनासिकः। उभयथेति विकल्पार्थकोभयथेत्यनुवृत्तिसामर्थ्यात् आदित्यान् याचिषामहे इत्यत्र प्रकृत सूत्रेण नकारस्य न रुत्वम्।

---

**तीर्था**- "खरवसानयोर्विसर्जनीयः" इत्यनेन विसर्गे "विसर्जनीयस्य सः" इत्यनेन सत्वे "स्तोः श्चुना श्चुः" इत्यनेन श्चुत्वे च आकारस्य अत्रानुनासिकः पूर्वस्य तु वा इत्यनेन विकल्पेन अनुनासिके पशूँस्ताँश्चक्रे इति अनुनासिकाभावपक्षे अनुनासिकात्परोऽनुस्वारः इत्यनेन अनुस्वारागमे पशूंस्तांश्चक्रे इति।

देवाँ अच्छा सुमती - इत्यत्र देवान् अच्छा इत्यवस्थायां "दीर्घादटि समानपदे" इत्यनेन नकारस्य रुत्वे तस्य रोः "भो भगो अघो अपूर्वस्य योऽशि" इत्यनेन यकारे तस्य "लोपः शाकलस्य" इत्यनेन लोपे देवाघटकाकारस्य च "आतोऽटि नित्यम्" इति सूत्रेण नित्यमनुनासिके देवाँ अच्छा इति साधु। एवमेव महाँ इन्द्रो इत्यपि साध्यते।

---

**विमर्श**- अर्थ- जिस यज्ञ में सर्वात्मक पुरुष का हवन होता है उस मानस यज्ञ से दधि मिश्रित घृत आदि उत्पन्न हुए। उससे वायु देवता वाले वन्य हरिण आदि और ग्राम्य (कुक्कुर आदि) पशु उत्पन्न हुए।

स भ्रातरं वरुणमग्न आ ववृत्स्व देवाँ अच्छा सुमती यज्ञवनसं ज्येष्ठं यज्ञवनसम्। ऋतावानमादित्यं चर्षणीधृतं राजानं चर्षणीधृतम्। (ऋग्वेद ४-१-२)

अर्थ - हे अग्नि तुम्हारे भ्राता वरुण है। वे हव्यभाजन् यज्ञभोक्ता अतिशय प्रशंसनीय उदकवान् अदिति पुत्र जलदान द्वारा मनुष्यों के धारक सुबुद्धि युक्त होने

आतोऽटि नित्यम्। (८-३-३)

अटि परतो रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः। महाँ इन्द्रः। तैत्तिरीयास्तु अनुस्वारमधीयते। तत्र छान्दसो व्यत्यय इति प्राञ्चः। एवं च सूत्रस्य फलं चिन्त्यम्।

---

शाङ्करी- आतोऽटीति - अत्र अत्रानुनासिक पूर्वस्य तु वा (८-३-२) इत्यत अनुनासिकः पूर्वस्येति पदद्वयम्, "मतुवसो रु सम्बुद्धौ छन्दसि" ८-३-१ इत्यतो रु इति चानुवर्तते। अत आह वृत्तौ मूले अटि परतो इत्यादिः। महाँ इन्द्रः। अत्र महान् इन्द्रः इत्यवस्थायां नकारस्य दीर्घादटि समानपदे इत्यनेन रुत्वे आकारस्य "अत्रानुनासिकः पूर्वस्य तु वा" (८-३-२) इत्यनेन विकल्पेन अनुनासिक प्राप्तौ नित्यार्थमिदं सूत्रम्। तैत्तिरीयास्त्विति-तैत्तिरीय संहितानुयायिन इत्यर्थः। अनुस्वारमधीयत इति- अनुनासिकस्य अवसर इत्यर्थः। छान्दसो व्यत्ययेति-"व्यत्ययो बहुलम्" इति सूत्रमाश्रयणीयमित्यर्थः। सूत्रस्य फलमिति - अयं भावः यदि क्वचिदनुनासिकः क्वचिदनुस्वारस्तदा कार्यमिदं द्वयम् "अत्रानुनासिकः पूर्वस्य तु वा" ८-३-२। अनुनासिकात्परोऽनुस्वारः ८-३-४। इति सूत्राभ्यामिदं सिद्धं निष्प्रयोजनमित्यर्थः।

---

तीर्था तु शाङ्करी व्याख्ययैवावगन्तव्या।

---

विमर्श- के कारण विद्वानों से सुप्रंशसित वरुण देवता को स्तोताओं के अभिमुख करो।

महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव। स्तोमैर्वत्सस्य वावृधे॥ (ऋग्वेद ८-६-१)

अर्थ- जो इन्द्र पर्जन्य के समान बल में महान् हैं वह पुत्र तुल्यवत्स नामक ऋषि के स्तोत्रों द्वारा स्तुत्य हैं।

त्यान्नु क्षत्रियाँ अव आदित्यान्याचिषामहे। सुमृळीकाँ अभिष्टये॥ (ऋग्वेद ८-६७-१)

अर्थ - अथवा हम अच्छी तरह से सुख देने वाले सूर्य के समान तेजस्वी अथवा सूर्यवंशी क्षत्रियों से अभिष्ट फल प्राप्ति के लिये अपने रक्षण की याचना करते हैं।

महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव। स्तोमैर्वत्सस्य वावृधे। ऋग्वेद ८-६-१

अर्थ- जिस प्रकार जल से परिपूर्ण मेघ वृष्टि के द्वारा सभी वस्तुऐं सर्वाधिक होती हैं उसी प्रकार महान् बलवान् इन्द्र पुत्र स्थानीय वत्स ऋषि की स्तुतियों से प्रवृद्ध होती है।

स्वतवान्पायौ। (८-३-११)। रुर्वा। भुवस्तस्य स्वतवाँः पायुरग्ने।

छन्दसि वाऽप्राम्रेडितयोः। (८-३-४९)

विसर्गस्य सो वा स्यात्, कुप्वोः प्रशब्दमाम्रेडितं च वर्जयित्वा। अने त्रातर्ऋतस्कविः। गिरिर्न विश्वतस्पृथुः। नेह, वसुनः पूर्व्यस्पतिः। अप्रेत्यादि किम् - अग्निः प्र विद्वान्। परुषः परुषः।

---

शाङ्करी- अत्रस्वतवान् इति लुप्तषष्ठ्यन्तं पदम्। (ऋग्वेद ४.२.६)

"नश्छव्यप्रशान्" ८-३-७ इत्यतो नः इति षष्ठ्यन्तम् "मतुवसो रु सम्बुद्धौ छन्दसि" ८-३-१। इत्यतो रु इति चानुवर्तते। अतः सूत्रार्थः - स्वतवान् इत्येतस्य नकारस्य रुर्वा भवति। स्वतवाँ पायुरग्ने। वृद्ध्यर्थकात् सौत्रातुधातोरसुन् प्रत्ययः अनुबन्धलोपः प्रत्ययस्यार्धधातुकसंज्ञायां धातोरुकारस्य "सार्वधातुकाध-'धातुकयोरि"त्यनेन गुणेऽवादेशः स्वं तवो यस्यासौ स्वतवान्। स्वतवस् शब्दात् "दृक् स्ववः स्वतवसां छन्दसि" ७-१-८३। इति सूत्रेण नुमागमः अनुबन्धलोपः स्वतवन्स शब्दात् प्रातिपदिकत्वात् सु हल्ङ्यादिनातस्य लोपः प्रथमसकारस्य संयोगान्तलोपः "अत्वसन्तस्यचाधातोरि"त्यनेनोपधा अकारस्य दीर्घः।

तीर्था तु शाङ्करी व्याख्ययैव गतार्था।

छन्दसीति - अत्र "विसर्जनीयस्य सः" (८-३-३४) इति, "कुप्वोः ᳲकᳲपौ च" (८-३-३७) इत्यतः कुप्वोः इति, "तयोर्य्वा वचि संहितायाम्" (८-२-१०८) इत्यतः संहितायाम् इति चानुवर्तते। अत आह मूले वृत्तौ - विसर्गस्य सो वा इत्यादिः अग्नें तातर्ऋतस्कविः। ऋतः कविः इत्यवस्थायां ककारे परे प्रकृत सूत्रेण विसर्गस्य सत्वम्। इत्थमेव पकारे परे गिगिर्न विश्वतस्पृथुः इत्यादाविति। अत्र वाशब्दो व्यवस्थित विभाषार्थकः। अतो यत्र सत्वं भवति तत्र नित्यमेव भवति। यत्र च न भवति तत्र नैव भवति, यथा नेह वसुनः पूर्व्यपतिः। एकस्मिन्नेव प्रयोगे विकल्पो न भवतीत्यर्थः।

तीर्था तु शाङ्करी व्याख्ययैव गतार्था।

---

विमर्श- यस्त इध्मं जभरत्सिष्विदानो मूर्धानं वा ततपते त्वा या।

भुवस्तस्यस्वतवाँः पायुरग्नेविश्वस्मात्सी मघायत उरुष्य॥ ६॥

अर्थ - हे अग्नि? जो मनुष्य तुम्हारे लिये पसीने युक्त होकर (ऋग्वेद ४-२-६) लकड़ियों को ढोताहै, जो तुम्हें प्राप्त करने की इच्छा से अपने मस्तक को काष्ठभार से बोझिल और उतप्त करता है उसे तुम धनवान् बनाते हो और उसका

कः करत्करतिकृधिकृतेष्वनदितेः। (८-३-५०)

विसर्गस्य सः स्यात्। प्रदिवो अपस्कः। यथा नो वस्यसस्करत्। सुपेशस्करति। उरुणस्कृधि। सोमं न चारु मघवत्सु नस्कृतम्। अनदितेरिति किम् - यथा नो अदितिः करत्।

---

**शाङ्करी**- कः करति - इह छन्दसि वा प्रामेडितयोः। ८-३-५९। इत्यतः छन्दसीति, विसर्जनीयस्य सः (८-३-३४) इति, "तयोर्य्वावचि संहितायाम्" (८-२-१०८) इत्यतः संहितायाम् इति चानुवर्तते। अतः सूत्रार्थः -अदिति - शब्दाद् भिन्नशब्दात्परस्य विसर्गस्य सत्वं भवतियदि ततः परे कःकरत् करति कृधि कृतशब्दाः स्युः। सूत्रे कः इति कृ धातोर्लुङ् प्रथमपुरुषैकवचने तिबादेशः मध्ये च्लि तस्य "मन्त्रेघसह्वरणश्०" इत्यादिना लोपः, यद्यप्यत्र "लुङ्लङ्०" इत्यादिना अडागमः प्राप्तः तस्य बहुलं छन्दस्य माङ्योगेऽपि इत्यनेन निषेधः ऋकारस्य गुणे रपरे तकारस्य हल्ङ्यादि लोपः रेफस्य विसर्गः। करत्- कृञ एव लुङ् प्रथमपुरुषैकवचने "कृमृदृरुहिभ्यश्छन्दसि" इत्यनेन च्लेरङ् "ऋदृशोऽङिगुणः" इत्यनेन ऋकारस्यगुणः अडागमः तिबादेशः इतश्चेत्यनेनेकारलोपः। करति- कृ धातोर्लट् "तनादिकृञ्भ्यः उः" इत्यनेन उप्रत्यये प्राप्ते व्यत्ययेन शप्। कृधि- कृञो लोट् तस्य स्थाने मध्यमपुरुषैकवचने सिप् तस्य स्थाने "सेर्ह्यपिच्च" इत्यनेन ह्यादेशे तस्य "श्रुशृणुपृकृवृभ्यश्छन्दसि" इत्यनेन धि आदेशः। कृत-कृञः क्त प्रत्ययः।

---

**तीर्था**- (क) अपस्कः - कृ धातोर्लुङ्लकारः तस्य स्थाने प्रथमपुरुषैकवचने तिबादेशेः अनुबन्धलोपः "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्येनाडागमे प्राप्ते तस्य "बहुलं छन्दस्यमाङ्योगेऽपि" इत्यनेन निषेधेः मध्ये "च्लिलुङि" इत्यनेन च्लि प्रत्ययः

---

पालन करते हो। जो कोई उसके अनिष्ट की कामना करता है उससे तुम उसकी रक्षा करते हो।

त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतस्कविः।
त्वा विप्रासः समिधान दीदिव आ विवा सन्ति वेधसे॥ (ऋग्वेद ८-६०-५)
एन्द्र नो गधि प्रियः सत्राजिदगोह्यः। गिरिर्न विश्वतस्पृथुः पतिर्दिवः॥ (ऋग्वेद ८-९८-४)
अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः।
मा हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम्॥ (ऋग्वेद १०-४८-१)

**तीर्था-** तस्य "मन्त्रेघसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो च्लेः" २-४-८० इत्यनेन लुक् ऋकारस्य "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे रपरे च कृते कर् त् इति स्थिते तकारस्य "हल्ङ्याभ्यो दीर्घात् सुतिस्यपृक्तं हल्" इत्यनेन लुपि रेफस्य "खरवसानयोर्विसर्जनीयः" इत्यनेन विसर्गेः तस्मिन् परे अपः शब्दविसर्गस्य कः करत् करशि इत्यादिना सत्वे अपस्कः इति साधुः।

(ख) सस्करत् - सः करत् इत्यत्र कृ धातोः लुङ् लकार तस्य प्रथमपुरुषैकवचने तिबादेशः अनुबन्धलोपः धातों"लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे प्राप्ते तस्य "बहुलं छन्दस्य माङ्योगेऽपि" इत्यनेन निषेधः मध्ये "च्लि लुङि" इत्यनेन च्लिः तस्य "कृमृदृरुहिभ्यश्छन्दसि" इत्यनेन अङादेशः ऋकारस्य "ऋदृशोऽङि गुणः" इत्यनेन गुणे रपरे करत् इति साधुः। एतस्मिन् परेसः शब्दावयवस्य विसर्गस्य कः करत्करति कृधि कृतेष्वनदितेः इत्यनेन सत्वे सस्करत् इति साधुः।

(ग) सुपेशस्करति - कृ धातोर्लट्लकारः तस्य प्रथमपुरुषैकवचने तिबादेशोऽनुबन्धलोपः मध्ये "तनादिकृञ्भ्यः उः" इत्यनेन उ विकरणे प्राप्ते तं प्रबाध्य "व्यत्ययो बहुलम्" इत्यनेन शप् विकरणेऽनुबन्धलोपे ऋकारस्य "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे रपरे करति इति साधु। एतस्मिन् सुपेशः घटक विसर्गस्य "कः करत् करति कृधिकृतेष्वनदितेः" इत्यनेन सत्वे सुपेशस्करति इति साधुः।

(घ) उरुणस्कृधि - कृधातोर्लोट् लकारः तस्य स्थाने मध्यमपुरुषस्यैकवचने सिप्प्रत्यये मध्ये शप् विकरणे तस्य "बहुलं छन्दसि" इत्यनेन लुक् "सेर्ह्यपिच्च" इत्यनेन सेर्हि आदेशः तस्य "श्रुश्रृणुपृकृवृभ्यश्छन्दसि" इत्यनेन धि आदेशः कृधि इति साधुः। तस्मिन् परे उरुणः घटक विसर्गस्य "कः करत्करतिकृधिकृतेष्वदितेः" इति सूत्रेण सत्वे उरुणस्कृधि इति साधु।

(ङ) नस्कृतम् - कृधातोः क्त प्रत्ययेऽनुबन्धलोपे प्रथमाया एकवचने सौ तस्य क्लीबेऽमादेशः कृतम् इति साधु। तस्मिन् परे नः घटक विसर्गस्य "कः करत्करतिकृधिकृतेष्वनदितेः" इत्यनेन सत्वे नस्कृतम् इति साधु।

---

**विमर्श-** अपस्कः -

अस्मै वयं यद्वावान तद्विविष्म इन्द्राय योर्नः प्रदिवो अपस्कः।
सुते सोमें स्तुमसि शंसदुक्थेन्द्राय ब्रह्म वर्धनं यथासत्॥ (ऋग्वेद ६-२३-५)

अर्थ- हम लोगों की पोषणादिकार्य करने वाले उन्हीं प्रसिद्ध इन्द्र के सोम से अभिषुत होने पर उनका प्रिय स्तोत्रादि के द्वारा स्तुति करते हैं। हमलोग उक्थों का

पञ्चम्याः परावध्यर्थे। (८-३-५१)

पञ्चमीविसर्गस्य सः स्यादुपरिभवार्थे परिशब्दे परतः। दिवस्परि प्रथमं यज्ञे। अध्यर्थे किम् – दिवस्पृथिव्याः पर्योजः।

**शाङ्करी**–पञ्चम्येति – अत्र "छन्दसि वाऽप्राम्रेडितयोः" (८-३-४९) इत्यतः छन्दसीति, "सोऽपदादौ" (८-३-३८) इत्यतः सः इति, "तयोर्य्वावचि संहितायाम्" (८-२-१०८) इत्यतः संहितायाम्, इति चानुवर्तते। अतः अध्यर्थे उपरि भवार्थे परिशब्दे परतः पञ्चम्याः विसर्गस्य सः स्यात् संहितायां छन्दसि। दिवस्परि – स्वर्गादुपरि इत्यर्थः। अत्र "व्यत्ययो बहुलम्" इत्यनेन षष्ठ्याः स्थाने पञ्चमीत्यर्थः। अत्र पञ्चमार्थे विद्यमानस्य विसर्गस्य पञ्चम्या इत्यादि सूत्रेण सत्वमिति भावः।

**विमर्श**–उच्चारण करते हुए हविर्लक्षण अन्न उस प्रकार देते हैं जिससे उनका संबर्द्धन हो।

सुपेशस्करति –

उपेमसृक्षिवाजयुर्वचस्यां चनो दधीत नाद्यो गिरो मे।

अपां नपादाशुहेमा कुवित्स सुपेशसस्करति जोषिषद्धि॥ (ऋग्वेद २-३५-१)

अर्थ– मैं अन्न की इच्छा से इस स्तुति को कर रहा हूँ। शीघ्रकर्ता और शीघ्रगन्ता जल के पौत्र अग्नि नामक देवता हमें प्रचुर अन्न और सुन्दर रूप दें। मैं उनकी स्तुति करता हूँ। वे हमारी स्तुति को पसन्द करते हैं।

उरुणस्कृधि –

कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम्। उरुकृदुरुणस्कृधि। (ऋग्वेद ८-७५-११)

अर्थ – हे अग्नि तुम हमें गायों की वृद्धि की इच्छा को पूर्ण करने के लिये बहुत धन प्राप्त कराओ। हमें महान् बनाओ।

नस्कृतम् –

चोदयतं सूनृताः पिन्वतं धिय उत्पुरंधीरीरयतं तदुश्मसि।

यशसं भागं कृणुतं नो अश्विना सोमं न चारुं मघवत्सु नस्कृतम्॥ (ऋग्वेद १०-३९-२)

अर्थ – हे अश्विनीकुमारों! हमें मधुर वाक्य उच्चारण करने में प्रवृत्त करो। बुद्धि से सम्पन्न होने वाले हमारे कर्मों को पूर्ण करो। हमारी बुद्धि को और अधिक प्रखर बनाओ। हमें और अधिक प्रशस्त धन दो। जैसे सोमरस प्रीतिप्रद होता है वैसे ही हमें धनवान् यजमानों का प्रियपात्र बनाओ।

पातौ च बहुलम्। ८-३-५२। पञ्चम्या इत्येव।

सूर्यो न दिवस्पातु। ऋग्वेद १०-१५८-१

---

**शाङ्करी**- पाताविति - अत्र "पञ्चम्याः परावध्यर्थे" इत्यतः पञ्चम्याः इति "छन्दसि वाऽप्राम्रेडितयोः" ८-३-४९। इत्यतः छन्दसि इति, "सोऽपदादौ" ८-३-३८। इत्यतः सः इति, "तयोर्य्वावचि संहितायाम" ८-२-१८। संहितायाम् इति चानुवर्तते। अतः पञ्चम्यर्थे विद्यमानस्य विसर्गस्य बहुलं सत्वं भवति पाधातौ परतः छन्दसि संहितायाम्। सूर्यो नो दिवस्पातु - अत्र दिवः इत्यत्र पञ्चम्यर्थे विद्यमानस्य विसर्गस्य पातौ परे सत्वं भवति।

अत्र तीर्था तु शाङ्करी व्याख्ययैवाव गन्तव्याः।

---

**विमर्श**- दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परिजातवेदाः।

तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः॥ (ऋग्वेद १०-४५-१)

अर्थ - अग्नि ने प्रथम स्वर्गलोक से उपर आदित्य के रूप में जन्म ग्रहण किया। उनका द्वितीय जन्म जातवेदा (ज्ञानी) के रूप में मनुष्यों के अन्दर (हृदय) में हुआ। तृतीय जन्म जल में विद्युत् के रूप में एवं आकाश में हुआ। इस प्रकार निरन्तर प्रज्वलित अग्नि का जो अच्छी तरह ध्यान करना जानते हैं वे उनकी स्तुति करते हैं।

दिवस्पृथिव्याः - (ऋग्वेद ६-४७-२७)

दिवस्पृथिव्याः पर्योज उद्भृतं वनस्पतिभ्यः पर्याभृतं सहः।

अपायोज्यमानं परि गोभिरावृतमिन्द्रस्य वज्रं हविषा रथं यज॥ (ऋग्वेद ६-४७-२७)

अर्थ - स्वर्ग और पृथिवी के सारभूत वनस्पतियाँ हैं, वे आकाशीय जल से प्रवृद्ध हुई हैं। इन वनस्पतियों के सार अंश से निर्मित यह रथ जल के वेग के समान वेगवान है। और गोचर्म से ढका हुआ इन्द्र के वज्र का अवयवरूप है।

सूर्यो नो दिवस्पातु वातो अन्तरिक्षात्। अग्निर्नः पार्थिवेभ्यः। ऋग्वेद १०-१५८-१

मन्त्रार्थ - स्वर्गीय उपद्रव से सूर्य, आकाशीय उपद्रव से वायु और पृथिवी के उपद्रव से अग्नि हमारी रक्षा करें।

षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु। (८-३-५३)

वाचस्पतिं विश्वकर्माणम्। दिवस्पुत्राय सूर्याय। दिवस्पृष्ठं भन्दमानः। तमसस्पारमस्य। परिवीत इलस्पदे। दिवस्पयो दिधिषाणाः। रायस्पोषं यजमानेषु।

---

**शाङ्करी**- षष्ठ्या इति-अत्र "छन्दसि वाऽप्राम्रेडितयोः" ८-३-४९ इत्यतः छन्दसीति, "सोऽपदादौ" ८-३-३८ इत्यतः सः इति, "तयोर्य्वावचि संहितायाम्" ८-२-१०८ इत्यतः संहितायाम् इतिचानुवर्तते। अतः पतिपुत्रादिशब्देषु परेषु षष्ठ्यर्थे विद्यमानस्य विसर्गस्य सः भवति छन्दसि संहितायाम्। वाचस्पतिं विश्वकर्माणम्। वाचः पतिम्, अत्र षष्ठ्यर्थेऽस्ति विसर्गः अतस्तस्य सत्वम्। दिवः पुत्राय, अत्रापि षष्ठ्यर्थे विसर्गः। एवमेव दिवः पृष्ठम्, तमसः पारम्, इलः पदे, दिवः पयो, रायः पोषम् इत्येतेष्वपि षष्ठ्यर्थे सन्ति विसर्गाः इति बोध्यम्। अत्र वाचस्पतिमित्यादौ तत्पुरुषसमासे सति "तत्पुरुषे कृति बहुलम्" ६-६-१४ इत्यत्र बहुल ग्रहणात् पत्यादि शब्देषु कृदन्तत्वाभावेऽपि अलुग् बोध्यम्।

तीर्था तु शाङ्करी व्याख्ययैवावगन्तव्या।

---

**विमर्श**- वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजेअद्या हुवेम।
स नो विश्वानि हवनानि जोषद्विश्वशंभूरवसे साधुकर्मा॥ (ऋग्वेद १०-८१-७)

अर्थ - इस यज्ञ में मन के समान गति वाले मन्त्रात्मक वाणी के स्वामी वाचस्पति का हम आह्वान करते हैं वे हमारे सम्पूर्ण हवनों का सेवन करें। क्यों कि वे हमारे रक्षक एवं विश्व के सुखदाता और साधुकर्मकर्ता हैं।

दिवस्पुत्राय सूर्याय। ऋग्वेद १०-३७-१।

नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत।
दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत॥ ऋग्वेद १०-३७-१।

मन्त्रार्थ - हे पुरोहितों जो सूर्य, मित्र और वरुण को देखते हैं जिनकी दृष्टि अतीव उज्वल है, जो दूर से ही सारी वस्तुओं को देखने में समर्थ हैं, जिन्होंने देवों के वंश में देवों के हितार्थ जन्म लिया है जो विश्व के प्रकाशक के पुत्र हैं उनकी स्तुति करके उनके तृप्त्यर्थ किये गये यज्ञ कर्म उनको समर्पित करें।

दिवस्पृष्ठं भन्दमानः -

वैश्वानरः प्रत्नथा नाकमारुहद् दिवस्पृष्ठं भन्दमानः सुमन्मभिः।
स पूर्ववज्जनयञ्जन्तवे धनं समानमज्मं पर्येति जागृविः॥ ऋग्वेद ३-२-१२

**विमर्श-** मन्त्रार्थ - स्तोताओं द्वारा स्तूयमान वैश्वानर अग्नि प्राचीनकाल की तरह अन्तिरिक्ष की पीठ स्वर्ग पर अपने प्रकाश के द्वारा चढ़ रहे हैं। प्राचीन ऋषियों के समान स्तुति करने वाले यजमान को धन देते हुए जागरूक होकर देवों के साधारण भाग आकाश पर सूर्य रूप से भ्रमण करते हैं।

तमसस्पारमस्य

अतारिष्म तमसस्पारमस्योषा उच्छन्ती वयुना कृणोति।

श्रिये छन्दो न स्मयते विभाती सुप्रतीका सौमनसायाजीगः॥ ऋग्वेद १-९२-६

मन्त्रार्थ - हम रात्रि के अन्धकार को पार कर चुके हैं। उषाएँ मानो समस्त प्राणियों के ज्ञान का निमार्ण कर रही हैं। जिस प्रकार दूसरे को अपने वश में करने में समर्थ व्यक्ति धन प्राप्त करने के लिये किसी समृद्ध व्यक्ति के समक्ष हंसता है, उसी प्रकार उषाएं अपना विशिष्ट प्रकाश प्रसारित करती हुई मानो हँस रही हैं, और मानो सभी प्राणियों में सौमनस्य का संचार करने के लिए अन्धकार को खा गई हैं।

इलस्पदे मिध्यसे (ऋग्वेद १०-१९-१)

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ। इलस्पदे समिध्यसे स नो वसून्या भर।

मन्त्रार्थ - हे कामनाओं के पूर्ण करने वाले अग्निदेव! सभी देवताओं में तुम्हीं एक देव हो जो सम्पूर्ण प्राणियों वैश्वानर के रूप में व्याप्त है। भगवद्गीता में भगवान ने स्वयं कहा 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्। अध्याय ५ श्लोक १४। तुम पृथ्वी पर निर्मित यज्ञवेदी पर ऋत्विकों द्वारा प्रज्वलित किये जाते हो। इन विशेषताओं अग्नि तुम हमें धन दो।

दिवस्पयो दिधिषाणाः -

धर्मा समन्ता त्रिवृत्तं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम।

दिवस्पयो दिधिषाणा अवेषन्विदुर्देवाः सहसामानमर्कम्॥ ऋग्वेद १०-११४-१

मन्त्रार्थ - सूर्य और अग्निनामक दो देवता प्रदीप्त होकर तीनों लोकों में व्याप्त हो गये हैं। अन्तरिक्ष में स्थित वायु देवता इन दोनों के प्रीतिभाजन बने। जिस समय देवों ने साममन्त्र और सूर्य को प्राप्त किया उस समय वे लोग त्रिभुवन की रक्षा के लिये आकाशीय जल की सृष्टि की।

रायस्पोषं यजमानेषु - (ऋग्वेद १०-१२२-८)

नि त्वा वसिष्ठा अह्वन्त वाजिनं गृणन्तो अग्ने विदथेषु वेधसः।

रायस्पोषं यजमानेषु धारय यूयं पात स्वस्तिभिः सदा नः॥ ऋग्वेद १०-१२२-८

मन्त्रार्थ - हे अग्नि! यज्ञों में महर्षि वशिष्ठ के पुत्र ऋषि गण आपकी स्तुति

इडाया वा। ८-३-३४।

पतिपुत्रादिषु परेषु। इळायास्पुत्रः। इलायाः पुत्रः। इळायास्पदे। इलायाः पदे। निसस्तपतावनासेवने। ८-३-१०२। निसः सकारस्य मूर्धन्यः स्यात्। निष्टप्तं रक्षो निष्टप्ता अरातयः। अनासेवने किम् - निस्तपति। पुनः पुनस्तपतीत्यर्थः।

---

शाङ्करी-इडाया वोति - अत्र षष्ठ्याः पति पुत्रेत्यादि ८-३-५३ सूत्रम्, "छन्दसि वाऽप्राम्रेडितयोः" इत्यत छन्दसि इति, "सोऽपदादौ" ८-३-३८। इत्यतः सः, "तयोर्य्वावचि संहितायाम्" ८-२-१०८ इत्यतः संहितायाम् इति चानुवर्तते। अतः सूत्रार्थः पतिपुत्र पृष्ठपारपद पयस् पोष शब्देषु परेषु षष्ठ्यन्त इडायाः विसर्गस्य विकल्पेन सकारादेशो भवति छन्दसि संहितायाम्। षष्ठ्यापतिपुत्रेत्यादिना नित्ये सत्वे प्राप्ते विकल्पार्थमिदम्। न चारम्भसामर्थ्यादेव विकल्पे सिद्धे वा ग्रहणं व्यर्थमिति वाच्यम् इह वाग्रहणेन पूर्वो विधिर्नित्यः इति ज्ञाप्यते, अन्यथा पातौ च बहुलम् ८-३-५२। इत्यतः बहुल ग्रहणानुवृत्तौ पूर्वसूत्रस्यापि पतिपुत्रादिषु विकल्पेन प्रवृत्तिः स्यात्।

निसस्तपताविति - सूत्रेऽस्मिन् "अपदान्तस्य मूर्धन्यः ८-३-५५। इत्यस्याधिकारोऽस्ति। आसेवनम् - पुनः पुनः क्रियायाः करणम् ततोऽन्यत्र इत्यर्थः। अतो निसः सकारस्य मूर्धन्यादेशः स्यान्तपतावनासेवने। निष्टप्तं रक्षो निष्टप्ता अरातयः शु०यजुर्वेद अध्याय १-७।

तीर्था तु शाङ्करी व्याख्ययैवावगन्तव्या।

---

विमर्श-किये और अन्नबल से युक्त आप को बुलाए। तुम हमारे यजमानों को पर्याप्त धन दो। तुम सर्वदा कल्याण के द्वारा हमारी रक्षा करो।

उत्तानायाभव भरा चिकि -

उत्तानायामव भरा चिकित्वान्त्सद्यः प्रवीता वृषणं जजान।

अरुषस्तूपो रुशदस्य पाज इळायास्पुत्रो वयुनेऽजनिष्ट॥ (ऋग्वेद ३-२९-२)

इडायास्पदम् - शु० यजुर्वेद वा० संहिता ४-२२

आदित्यास्त्वा मूर्धन्नाजिघर्मि देवयजने पृथिव्या इडायास्पदमसि घृतवत् स्वाहा।

अस्मे रमस्वास्मे ते बन्धुस्त्वे रायो मे रायो मा वयथं रायस्पोषेण वायोष्म तोतो रायः॥

मन्त्रार्थ - अखण्डित पृथिवी के शिरस्वरूप हे घृत! देवताओं के यज्ञ योग्य स्थान में तुमको टपकाता हूँ। हे स्थान तुम गौ के चरणचिन्ह हो, यहाँ मैं घृत की

युष्मत्तत्ततक्षुष्वन्तः पादम्। ८-३-१०३।

पादमध्यस्थस्य सस्य मूर्धन्यः स्यात्तकादिषु परेषु। युष्मदादेशाः त्वं त्वा ते तवाः। त्रिभिष्ट्वं देव सवितः। ऋग्वेद ९-६७-२६। तेभिष्ट्वा। आभिष्टे। अप्स्वग्ने सधिष्टव। ऋग्वेद ८-४३-९। अग्निष्टद्विश्वम्। ऋग्वेद १०-२-४। द्यावा पृथिवी निष्टतक्षुः। ऋग्वेद १०-३१-७। अन्तः पादं किम् - तदग्निस्तदर्यमा। यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः। अत्राग्निरिति पूर्वपादस्यान्तो न तु मध्यः।

---

शाङ्करी- युष्मत् च तत् च ततक्षुस् च् इतरेतर योगद्वन्द्व, इति युष्मत्तत्त तक्षवः तेषु "युष्मत्तत्ततक्षष्वन्तः पादम्"। अत्र ततक्षुषु इत्यत्र ततक्षुः इति भ्वादिगणपठित तनूकरणार्थक तक्षू धातोर्लिट्लकारस्य प्रथमपुरुषबहूवचने रूपम्। ततः परे सुपः सकारस्य नुम् विसर्जनीय शर्व्यवायेऽपि इत्यनेन षत्वम्। अत्र "ह्रस्वात्तादौ तद्धिते" ८-३-९९। इत्यतः तादाविति इण्कोः ८-३-५७ इति अपदान्तस्य मूर्धन्यः ८-३-५५ इति, सहे साडः सः ८-३-५६ इत्यतः सः इति चानुवर्तते। युष्मच्छब्दस्तदादेशपरः। अतो युष्मदादेशेषु तादिषु त्वं त्वा ते तव इत्येतेषु तत् ततक्षुः षु वा परेषु इणः परस्य पूर्वसकारस्य मूर्धन्यादेशः स्यात् स चेत् सकारः पादमध्यस्थश्चेत्। विभिष्ट्वं देव सवितः। अत्र त्रिभिस्त्वम् इत्यवस्थायां भिसः सकारस्य प्रकृतसूत्रेण षकारः तकारस्य च ष्टुत्वम्। एवमेव तेभिष्ट्वा, आभिष्टे, सधिष्टव इत्येतेषु क्रमेण तेभिस्त्वा, आभिस्ते साधिस्तव इत्यवस्थायां क्रमेण षत्वष्टुत्वे भवतः। अग्निस्तद् विश्वम्, निस्ततक्षुः इत्यवस्थायामपि क्रमेण सकारयोरनेन सूत्रेण षत्वे "ष्टुना ष्टुः" इत्यनेन ष्टुत्वे च सति अग्निष्टद् विश्वम्, निष्टतक्षुः इति च सिध्यतः। सूत्रेऽन्तः पादमिति कथनेन तदग्निस्तदर्यमा इत्यत्र तदग्निस् इति पादस्यान्तेऽस्तीति षत्वाभावः। एवमेव यन्म आत्मनो इत्यादौ अग्निः शब्दः पूर्वपदस्यान्तेऽस्ति न तु मध्ये अतो नास्ति षत्वम्।

तीर्था तु शाङ्करी व्याख्ययैवावगन्तव्या।

---

आहुति देता हूँ। हे गो पद तुम हमें सुख पहुँचाओ। हम तुम्हारे बन्धुरूप है। हे यजमान तुममें इस पदरूप में स्थित हो। ये मेरे धन और पशु है। हम धन की पुष्टि से न वियुक्त हों। ब्रह्मा विष्णु महेश पत्नी सहित यजमान को धन और पशुओं को सम्पन्न करें। यजमान सोमक्रयणी के पीछे छः पग चलकर जहाँ सातवाँ पग पड़ कर खुर का चिह्न बनें, उसमें सोने का टुकड़ा डालकर उस पर घी की आहुति देता हुआ इस मन्त्र का उच्चारण करता है।

**विमर्श-** त्रिभिष्ट्वं देव सवितः। ऋग्वेद ९-६७-२६।

त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोमधामभिः। अग्ने दक्षैः पुनीहि नः।

अर्थ - हे स्तुत्य देव सब को अपने अपने कर्म में प्रवृत्त होने के प्रेरक सविता, हे सोम पवित्र करने वाले गुण से विशिष्ट हे अग्नि वृद्धतम और सामर्थ्य विशिष्ट तीन (अग्नि, वायु , सूर्य के) शरीरों से हमें तुम शुद्ध करो।

तेभिष्ट्वा। ऋग्वेद १०-१५५-१। अरायि काणे विकटे गिरिं गच्छ सदान्वे।

शिरिं विंष्ठस्य सत्वभिस्तेभिष्ट्वा चातयामसि। ऋग्वेद १०-१५५-१

अर्थ - हे दानविरोधिनी अलक्ष्मी तुम सदा कुत्सित शब्द करने वाली विकृत आकृति वाली सदा क्रोध करने वाली दुर्भिक्ष की अधिदेवता हो, इसलिये पर्वत पर जाओ हमें मत सताओ। हम आकाश में स्थित मेघ में रहने वाले जल से तुम्हारा विनाश करेंगे। अर्थात् अवर्षण जन्य दुर्भिक्ष को वर्षाजन्य जल के द्वारा सुभिक्ष के रूप में परिवर्तित करेंगे।

आभिष्टे अद्य (ऋग्वेद ४-१०-४)

आभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम। प्रते दिवो न स्तनयन्ति शुष्माः।

अर्थ - हे अग्नि आज हम ऋत्विग् वचनों द्वारा तुम्हारी स्तुति करके हव्य प्रदान करेंगे। सूर्य की रश्मि की तरह शोषक ज्वाला शब्द करती है। अथवा मेघ की तरह शब्द करती है।

अप्स्वग्ने सधिष्टवः - (ऋग्वेद ८-४३-९)

अप्स्वग्ने सधिष्टवः सौषधीरनु रुध्यसे। गर्भे सञ्जायसे पुनः॥

हे अग्नि! जल के बीच में तुम्हारे प्रविष्ट होने का स्थान है जहाँ तुम औषधियों को रोकते हो और पुनः भूमि में स्थित जल में प्रवेश करके जन्म ग्रहण करते हो।

अग्निष्टद्विश्वम्। (ऋग्वेद १०-२-४)

यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः।

अग्निष्टद् विश्वमा पृणाति विद्वान् येभिर्देवाँ ऋतुभिः कल्पयाति॥ ऋग्वेद १०-२-४

मन्त्रार्थ - हे देवों! हम अत्यन्त अज्ञानी है। कुछ विद्वान् आप लोगों के नित्य नैमित्तिक कर्मों को जानते हुए भी उसकी उपेक्षा करके विलुप्त कर दिये। यह सब जानने वालों विद्वान् अग्नि उचित ऋतु एवं काल से देवों को कल्पित करके याग योग्य कालों से सम्पूर्ण कर्मों को सम्पादित करें।

यजुष्येकेषाम्। ८-३-१०४।

युष्मत्तत्तक्षुषु परतः। सस्य मूर्धन्यो वा। अर्चिभिष्ट्वम्। अग्निष्टे अग्रम्। अर्चिभिष्टतक्षुः। पक्षे अर्चिभिस्त्वमित्यादि।

स्तुतस्तोमयोश्छन्दसि। ८-३-१०५।

नृभिष्टुतस्य नृभिः स्तुतस्य। गोष्टोमम् - गोस्तोमम्। पूर्वपदादित्येव सिद्धे प्रपञ्चार्थमिदम्।

---

शाङ्करी- यजुष्येकेषाम् इति - अत्र "युष्मत्तत्ततक्षुष्वन्तः पादम्" इति ८-३-१०३ इति "ह्रस्वात्तादौ तद्धिते" ८-३-१०१। इत्यतस्मादाविति "सहेः साडः सः" ८-३-५ इत्यतः सः इति, "इण्कोः" ८-३-५७। "अपदान्तस्य मूर्धन्यः" ८-३-५५ इत्यतः मूर्धन्यः इति चानुवर्तते। सूत्रे एकेषामिति पदेन विकल्प रूपोऽर्थो लब्धः। अतः तादिषु युष्मत्तत्ततक्षुषु परतः इणः परस्य सस्य मूर्धनयादेशो वा स्यात् यजुर्वेदे। यजुर्वेदे गद्यप्राधान्यादत्र अन्तः पादम् विशेषणं नानुवृत्तम् इति ज्ञेयम्। अनेन सूत्रेण विकल्पेन षत्वविधानात् अर्चिभिष्ट्वम् अर्चिभिस्त्वम्। अग्निष्टे अग्रम्, अग्निस्ते अग्रम्। अर्चिभिष्टतक्षुः - अर्चिभिस्ततक्षुः इति द्विधा रूपाणि निष्पद्यन्ते।

स्तुतस्तोमयोरिति - अत्र "इण्कोः" (८-३-५७) इति, "अपदान्तस्य मूर्धन्यः" इत्यतः मूर्धन्यः इति, "सहेः साडः सः" (८-३-५६)। इत्यतः सः इति "यजुष्येकेषाम्" (८-३-१०४) इत्यत एकेषामिति चानुवर्तते। अतः इण्कवर्गाभ्यां परयोः स्तुतस्तामयोः सकारस्य मूर्धन्यादेशो वा भवति छन्दसि। नृभिष्टुतस्य अत्र नृभिः स्तुतस्य इत्यत्र प्रकृत सूत्रे पूर्वसूत्रादेकेषामित्यस्यानुवृत्ते विकल्परूपार्थस्य लाभात् पक्षान्तरेषत्वाभावः। एवमेव गोष्टोमम् गोस्तोमम् इत्यत्रापि बोध्यम्। "पूर्वपदादि"८-३-१०६ इति - पूर्वपदादिति संक्षिप्तोऽर्थः अस्ति पूर्वपदस्थात् निमित्तात् परस्य सस्य षो वा स्यात् इति। स्वीकृते चास्मिन्नर्थे प्रकृतसूत्रोदाहरणयोरपि विकल्पेन षत्वसि सिद्धाविदं सूत्रं प्रपञ्चार्थम् - ग्रन्थ विस्तारार्थमिति बोध्यम्। पूर्वपदात् इत्यत्र पूर्वपदमिति सामान्यतया समास-वाक्योभयावयवो गृह्यत इति मतं कैयटनागशोभयसम्मतम् इति बोध्यम्।

---

द्यावा पृथि॒वी निष्ट॑त॒क्षुः। (ऋग्वेद १०-३१-७)

किं स्वि॒द्वनं॒ क उ॒ स वृक्ष॒ आस॒ यतो॒ द्यावापृथि॒वी निष्टत॒क्षुः।

सं॒त॒स्था॒ने अ॒जरे॑ इ॒त ऊती अहा॑नि पू॒र्वीरु॒षसो॑ जरन्त॥

मन्त्रार्थ - वह कौन सा किस प्रकार का वन और वृक्ष था जिसकी सहायता से द्युलोक और भूलोक का निर्माण किया गया है, जो जरा और जीर्णता से रहित एक

**तीर्था-** नृभिष्टुतस्य – नृभिस् स्तुतस्य इत्यवस्थायां भिसः सकारस्य "ससजुषो रुः" इत्यनेन रुत्वे रेफस्य "खरवसानयोर्विसर्जनीयः" इत्यनेन विसर्गः तस्य खर्परे शरि वा विसर्ग लोपो वक्तव्यः (वार्तिक) इति वार्तिकेन लोपो नृभि स्तुतस्य इति स्थितौ "स्तुतस्तोभ्योश्छन्दसि" इत्यनेन स्तुतघटकसकारस्य षत्वे तकास्य ष्टुत्वे नृभिष्टुतस्य इति साधु। षत्वाभावे नृभिः स्तुतस्य इति साधु।

गोष्टोमम् – गोस् स्तोमम् इत्यवस्थायां गोसः सकारस्य "ससजुषो रुः" इत्यनेन रुत्वे "खरवसानयोर्विसर्जनीयः" इत्यनेन विसर्गेः तस्य खर्परे शरि वा विसर्ग लोपो वक्तव्यः इति वार्तिकेन लोपे गोस्तोमम् इत्यवस्थायां "स्तुतस्तोभयोश्छन्दसि" इत्यनेन स्तोमघटक सकारस्य षत्वे ततः परस्य तकारस्य ष्टुत्वे गोष्टोमम् इति साधु। विसर्गस्य लोपाभावे तस्य "विसर्जनीयस्य सः" इत्यनेन सत्वे स्तोमघटक सकारस्य "झलो झलि" इत्यनेन लोपे गोस्तोमम् इति साधु।

---

रूप में स्थित है। जब कि प्राचीन सभी दिन और ऊषाएँ जीर्ण हो गये।

गोष्टोमम् –

ज्योतिष्टोमम्- तैत्तिरीयसंहिता ७-४-११-१ पृष्ठ ३१६

ज्योतिंष्टोमं प्रथममुपं यन्त्यस्मिन्नेव तेनं लोके प्रतिं तिष्ठन्ति गोष्टोंमं।

द्वितीयमुपै यन्त्यन्तरिंक्ष एव तेन तिष्ठन्त्यायुष्टोमम्.....

गोस्तोमम् आपस्तम्ब श्रौत २३-१२-१८

**विशिष्ट विमर्शः** – स्तुतस्तोमयोश्छन्दसि ८-३-१०५। इस सूत्र की सिद्धान्तकौमुदी में कोई वृत्ति नहीं है। काशिका में – स्तुतस्तोम इत्येतयोः सकारस्य छन्दसि विषये मूर्धन्यादेशो भवति एकेषामचार्याणां मतेन। इस वृत्ति की उक्त व्याख्या से सुस्पष्ट है कि काशिका के मत में स्तुतस्तोमयोः षष्ठ्यन्त ही है, सप्तम्यन्त नहीं। काशिका के व्याख्याकार आचार्य जिनेन्द्रबुद्धि भी न्यास में इसी मत का समर्थन करते हैं – सात्पदाद्यो ८-३-१११। इति प्रतिषेधे प्राप्तेऽयमारम्भ ८-३-१०५। पदादि को षत्व षष्ठ्यन्त पक्ष में प्राप्त होगा जिसका प्रतिषेध करने के लिये "सात्पदाद्योः" प्रवृत्त होगा, और इसका निषेध कर षत्व विधान के लिये स्तुतस्तामयोश्छन्दसि" ८-३-१०५। सूत्र बनाया गया। षष्ठ्यन्त पक्ष में भाष्य काशिका महाभाष्य की व्याख्या प्रदीप, उद्योत, सिद्धान्तकौमुदी न्यास, पदमञ्जरी इत्यादि सर्वसम्मत पूर्वपदात् इत्येव सिद्धे की भी सहमति है। क्योंकि काशिका और सिद्धान्त कौमुदी दोनों ने पूर्वपदात् ८-३-१० ६की व्याख्या पूर्वपदस्थात् निमित्तात्परस्य सस्य षो वा की है। यह व्याख्या युक्तियुक्त भी है। क्योंकि पूर्वपदात् पञ्चम्यन्त है अतः तस्मादित्युत्तरस्य १-

पूर्वपदात्। ८-३-१०६।

पूर्वपदस्थान्निमित्तात् परस्य सस्य षो वा। यदिन्द्राग्नी दि॒विष्ठः (ऋग्वेद १-१०८-११)। युवं हि स्वर्पतो। (ऋग्वेद ९-१९-२)।

---

**शाङ्करी**- पूर्वपदादिति - अत्र "स्तुतस्तोमयोश्छन्दसि" ८-३-१०५। इत्यतश्छन्दसीति "यजुष्येकेषाम्" ८-३-१०४। इत्यतः एकेषाम् इति, "सहेः साडः सः" ८-३-५६। इत्यतः सः इति, "अपदान्तस्य मूर्धन्यः" ८-३-५५। इति सूत्रञ्चानुवर्तते। अतः पूर्वपदस्थान्निमित्तात् इणः कवर्गात् वा परस्य अपदान्तस्य सस्य मूर्धन्यो षो वा स्यात् संहितायाम्। दिविष्ठः दिवि तिष्ठतीति दिविष्ठः, अत्र यद्यपिअलुक् समासे समासत्वात् समुदायस्य प्रातिपदिक संज्ञायां ततः सौ समुदायस्य सत्यप्येकपदत्वे पूर्वपदविभक्तेरलुकि दिवि इत्यत्र ब्राह्मणवशिष्ठ न्यायेन स्वातन्त्र्येणापि पूर्वपदत्वमस्त्येव। युवं हि स्थः इत्यत्र हि इत्यस्य स्थेन सह नास्ति पदत्वेन कश्चन अन्तरङ्गः सम्बन्धः।

---

**तीर्था**- दिविष्ठः- दिवि तिष्ठतीति विग्रहे दिवि इति सुबन्ते उपपदे स्था धातोः "सुपि स्थः" इति सूत्रेण कप्रत्ययः ककारस्य "लशक्वतद्धिते" इत्यनेन इत्संज्ञायां लोपे च धातोराकारस्य "आतो लोप इटि च" इत्यनेन लोपः अलुक्समासत्वात् दिवि इत्यत्र सप्तम्या अलुकि दिविस्थः इति स्थितौ पूर्वपदात् इत्यनेन सकारस्य षत्वे ततः परस्य थकारस्य ष्टुत्वेन ठकारे दिविष्ठः इति साधु।

---

**विमर्श**- १-६७। के निर्देशानुसार षत्व उत्तरपद के आदि स्तुत एवं स्तोम के सकार को ही होगा, नृभिष्टुतस्य में भिस् के सकार को या गोष्टोमम् में गोस् सकार को कथमपि नहीं होगा, क्योंकि ये पदान्त है। तथा ये सूत्र अपदान्तस्य मूर्धन्यः। ८-३-५५। के अधिकार में आते हैं। किन्तु सिद्धान्तकौमुदी की सुबोधिनी व्याख्याकारः जयकृष्णभट्ट भी एतयोः परतः सस्य षत्व स्यात् कर रहे हैं तथा कुछ आधुनिक व्याख्याकार डॉ० उमाशङ्कर ऋषि, एवं दामोदर महतो स्तुतस्तोमयोः को सप्तम्यन्त मानते हैं जो उक्त युक्तियों के विरुद्ध होने के कारण उचित नहीं है। जब हम स्तुतस्तोमयोश्छन्दसि ८-३-१०५। के स्थान में पूर्वपदात् ८-३-१०६। से षत्व करते समय उक्त युक्तियों के बल पर स्तुतस्तयोमयोश्छन्दसी" को षष्ठ्यन्त मानने के लिये विवश है तो फलैक्यै प्रत्याख्यानं न तु फलभेदे की युक्ति बल पर "स्तुतस्तोमयोश्छन्दसि" से षत्व करते समय भी इनको षष्ठ्यन्त ही मानना उचित है।

यदिं द्राग्नी दि॒विष्ठो यत्पृ॑थि॒व्यां यत्पर्व॑ते॒ष्वोषधीष्व॒प्सु।

सुञः। ८-३-१०७।

पूर्वपदस्थान्निमित्तात्परस्य सुञो निपातस्य सस्य षः। ऊर्ध्वं ऊषु णः। ऋग्वेद १-३६-१। अभीषु णः। ऋग्वेद ४-३१-३।

---

शाङ्करी- सुञ इति। अत्र "पूर्वपदात्" ८-३-१०६। इति, "सहेः साडः सः" इत्यतः सः इति, "इण्कोः" इति चानुवर्तते। पूर्वपदम् इति अत्र पूर्वपदस्थे लाक्षणिकम्। अतः पूर्वपदस्थानिमित्तात् इणः कवर्गात् वा परस्य सुञो निपातस्य सस्य षः स्यात् च्छन्दसि। ऊर्ध्व ऊषु णः। अभीषु णः।

---

तीर्था- ऊषुणः - ऊ सु नः इति स्थितौ "इकः सुञि" ६-३-१३४। इति सूत्रेण सु परे पूर्व उकारस्य दीर्घः "सुञः" इति सूत्रेण षत्वे ऊ षु णः इति साधु।

अभीषु णः इत्यत्र अभि सु न : इति स्थितौ सुञि परे उपसर्गस्थ इकारस्य "इकः सुञि" इति सूत्रेण दीर्घः सकारस्य "सुञः" इति सूत्रेण षत्वं नकारस्य "नश्चधातुस्थो रुषुभ्यः" इत्यनेन णत्वे अभी षु णः इति साधु।

---

विमर्श- अतः परि वृषणा वा हि यातमथा सोमस्य पिबतं सुतस्य॥ ऋग्वेद १-१०८-११
युवं हि स्थः-
युवं हि स्थः स्वर्पती इन्द्रश्च सोम गोपती। ईशाना पिप्यतं धियः॥ ऋग्वेद ९-१९-२
ऊर्ध्व ऊ षु णं ऊतये तिष्ठा देवो न सविता।
ऊर्ध्वो वाजस्य सविता यदं जिभिर्वाधद्भिर्विह्वयामहे॥
अभी षु णः सखीनाभविता जरितॄर्णाम्। शतं भवास्यूतिभिः॥ ऋग्वेद ४-३१-३।

प्रश्न - जब प्रकृत सूत्र में पूर्वपदात्। ८-३-१०६। सूत्र की अनुवृत्ति करके पूर्वपदस्थातिभितात् परस्य यही अर्थ किया जाता है तो इस सूत्र के सभी उदाहरणों ऊर्ध्व ऊषु णः अमी षु णः में षत्व पूर्वपदात् सूत्र से ही हो जायेगा यह सूत्र प्रपञ्चार्थ है ऐसा प्रतीत होता है। न्यासकार को। प्रश्न - सुञः सूत्र में सु से स्वादिगण पठित अभिषनार्थक सुञ् धातु तथ ा सु निपात उपसर्ग भी है तो यहाँ निपात का ही ग्रहण क्यों किया गया। समाधान महर्षि पाणिनी की यह शैली है कि जहाँ भी धातु का निर्देश करना रहता है वहाँ इक अथवा श्तिप् का निर्देश करते हैं। यथा उपसर्गात् सुनोति इत्यादि सूत्रों में। यहाँ श्तिपा निर्देश नहीं होने के कारण निपात का ग्रणह किया गया। इसी से न्यासकार जिनेन्द्र बुद्धि के पूर्वपदात् सूत्र से ही यहाँ भी षत्व सिद्ध या सूत्र प्रपञ्चार्थ है इस आक्षेप का भी समाधान हो गया। क्योंकि यदि

सनोतेरनः। ८-३-१०८।

गोषा इन्द्रो नृषा असि। अनः किम् - गोसनिः।

---

शाङ्करी-सनोते - अत्र "पूर्वपदात्" ८-३-१०६। इति सूत्रम्, "स्तुस्तोमयोः छन्दसि" ८-३-१०५। इति सूत्राच्छन्दसि इति, "सहेः साडः सः" ८-३-५६। इत्यतः सः इति "अपदान्तस्य मूर्धन्यः" ८-३-५५। इति सूत्रञ्चानुवर्तते। सूत्रे अनः इत्यस्य अविद्यमानो नकारो यस्यासौ अन्। अतः सूत्रार्थः पूर्वपदस्थात् इणः कवर्गात् वा परस्य अनकारान्तस्य अपदान्तस्य सनः सकारस्य मूर्धन्यादेशः स्याच्छन्दसि। गोषा तनादिगणपठित दानार्थक सन् (षणु) धातोः "जनसनखनक्रमगमो विट्" ३-२-६७। इति सूत्रेण विट् प्रत्यये तस्य सर्वोपहार लोपः "विड्वनोरनुनासिकस्यात्" इत्यनेन नकारस्य आत्वं नृषा इति।

---

तीर्था- गोषा - गाः सनोति इति विग्रहे द्वितीयान्त गो उपपदपूर्वकात् तनादिगणपठित दानार्थकात् सन् (षण्) धातोः "जनसनखनक्रमगमो विट्" इत्यनेन विट् प्रत्ययः तस्य सर्वापहारलोपः "विड्वनोरनुनासिकस्याऽऽत्" इत्यनेन नकारस्यात्वे सकारस्य "सनोतेरनः" इत्यनेन षत्वे गोषा इत्यस्य कृदन्तत्वात् प्रातिपदिकसंज्ञायां सु विभक्तौ सकारस्य "भो भगोअघोऽपूर्वस्य योऽशि" इत्यनेन यत्वे "लोपः शाकल्यस्य" इत्यनेन यकारस्य लोपे गोषा इति साधुः।

नृषा - नरं सनोति इति विग्रहे द्वितीयान्त इति उपपदात् तनादिगणपठित् दानार्थकात् सन् (षण्) धातो "जनसनखनक्रमगमो विट्" इत्यनेन विट् प्रत्ययः तस्य सर्वापहारलोपे "विड्वनोरनुनासिकस्याऽऽत्" इत्यनेन तकारस्यात्वं सकारस्य "सनोतेरनः" इत्यनेन षत्वं नृणा इत्यस्य कृदन्तत्वात् प्रातिपदिकसंज्ञायाम् सु विभक्तौ सकारस्य "भो भगो अपूर्वस्य योऽशि" इत्यनेन यत्वे तस्य "लोपः शाकल्यस्य" इत्यनेन लोपे नृषा इति साधु।

---

विमर्श-"सुञः" सूत्र पृथक् नहीं होता तो पूर्वपदात् सूत्र से धातु एवं निपात दोनों के सकार को षत्व हो जाता किन्तु आचार्य पाणिनि केवल निपात के ही सकार को षत्व करना चाहते हैं, धातु के सकार को नहीं यह अभिप्राय "सुञः" यह पृथक् सूत्र करने पर ही सिद्ध होगा। सूत्र में श्तिपा निर्देश नहीं होने के कारण धातु का ग्रहण नहीं किया गया है।

गोषा इन्द्रो नृषा अस्यश्वसा वाजसा उत। आत्मा यज्ञस्य पूर्व्यः। ऋग्वेद ९-२-१०।

मन्त्रार्थ - हे सोम! तुम यज्ञ की पुरानी आत्मा हो। तुम हमें गौ पुत्र अन्न

सहेः पृतनर्ताभ्यां च। ८-३-१०९।

पृतनाषाहम्। ऋताषाहम्। चात् ऋतीषाहम्।

---

शाङ्करी-सहेः पृत - पृतना च ऋतञ्च पृतनर्ते ताभ्यां पृतनर्ताभ्याम्। अत्र "पूर्वपदात्" ८-३-१०६। इति, स्तुतस्तोमयोश्छन्दसि ८-३-१०५। इत्यतश्छन्दसि, "सहे साडः सः" ८-३-५६। इत्यतः सः इति, "अपदान्तस्य मूर्धन्यः" ८-३-५५। संहितायाम् इति चानुवर्तते। अतः पूर्वपदस्थात् पृतनाशब्दात् ऋत शब्दाच्च परस्य सहेः सस्य मूर्धन्यादेशः स्यात् संहितायाम् छन्दसि। पृतनाषाहम् - छन्दसि सहः इत्यनेन ण्विः "अन्येषामपि दृश्यते इत्यनेन दीर्घः। ऋतीषहम् - ऋतेरिकारस्य नहि वृत्तिवृषि व्यधिरुचिसहितनिषु क्वौ -३-११। इत्यनेन दीर्घः।

---

तीर्था- पृतनाषाहम् - पृतनां सहते इति विग्रहे "छन्दसि सहः" इति सूत्रेण ण्वि प्रत्यये तस्य सर्वापहारलोपः "अन्येषामपि दृश्यते" इत्यनेन दीर्घः "सहेः पृतनर्ताभ्यां च" इत्यनेन षत्वे कृदन्तत्वात् प्रातिपदिक संज्ञायाम् अम् विभक्तौ पृतनाषाहम् इति साधु।

ऋताषाहम् - ऋतां सहते इति विग्रहे सह धातोः "छन्दसि सहः" इति सूत्रेण ण्वि प्रत्यये तस्य सर्वापहारलोपः "सहे पृतनर्ताभ्यां च" इत्यनेन सहेः सकारस्य षत्वे ऋतमकारस्य "अन्येषामपि दृश्यते" इत्यनेन दीर्घः ण्विप्रत्ययस्य णित्वात् "अत उपधायाः" सहेरकारस्य वृद्धौ कृदन्तत्वात् प्रातिपदिकसंज्ञायाम् अम् विभक्तो ऋताषाहम् इति साधु।

ऋतीषाहम् - ऋति सहते इति विग्रहे "छन्दसि सहः" इति सूत्रेण ण्वि प्रत्यये तस्य सर्वापहारलोपः ऋति शब्द इकारस्य "अन्येषामपि दृश्यते" इत्यनेन दीर्घः "सहे पृतनर्ताभ्यां च" इत्यनेन षत्वे सहेरकारस्य "अत उपधायाः" इत्यनेन वृद्धौ कृदन्तत्वात् अम् विभक्तौ "अमि पूर्वः" इत्यनेन पूर्वरूपे ऋतीषाहम् इति साधु।

---

विमर्श-और अश्व प्रदान करो।

अ॒ग्निर॒प्सामृ॑तीष॒हं वी॒रं द॑दाति॒ सत्प॑तिम्।

यस्य॒ त्रस॑न्ति॒ शव॑सः सं॒चक्षि॒ शत्र॑वो भि॒या॥ ऋग्वेद ६-१४-४।

विशेषः- सिद्धान्तकौमुद्याः ऋतीषाहम् इति पाठश्चिन्त्यः ऋक्सुक्त विरुद्धत्वात्।

मन्त्रार्थः - ये अग्नि स्तोताओं को सुन्दर कार्य करने वाला शत्रु पर विजय प्राप्त करने वाला और साधु जनोचित कार्यों का पालनकर्ता पुत्र प्रदान करते हैं, जिसे

निव्यभिभ्योऽड्व्यवाये वा छन्दसि। ८-३-११९।

सस्य मूर्द्धन्यः। न्यषीदत्। न्यसीदत्। व्यषीदत्। व्यसीदत्। अभ्यष्टौत्। अभ्यस्तौत्।

छन्दस्यृदवग्रहात्। ८-४-२६।

ऋकारान्तादवग्रहात् परस्य नस्य णः। नृमणाः। पितृयाणम्।

---

**शाङ्करी**- निव्यभिभ्योऽड्व्यवाये वा छन्दसि निश्च विश्च अभिश्च निव्यभयः इतरेतर योग द्वन्द्वः। अत्र "सहे साडः सः" इत्यतः सः इति, "इण्कोः" इति, अपदान्तस्य मूर्धन्यः इति, तयोर्व्वावचि संहितायाम् इति चानुवर्तते। अतः निवि अभि उपसर्गेभ्यः परेऽड्व्यवायेऽपि विकल्पेन सस्य मूर्धन्यादेशो भवति संहितायाम् छन्दसि। न्यषीदत् इत्यत्र प्राक्सितादड्व्यवायेऽपि इत्यनेन नित्यं षत्वे प्राप्तेऽनेन छन्दसि विकल्पेन षत्वं विधीयते। अभ्यष्टौत्। अत्रापि प्राक्सितादड्व्यवायेऽपि इत्यनेन नित्यं षत्व प्राप्तौ छन्दसि विकल्पार्थमिदम्।

छन्दसीति -

अत्र अट्कुप्वाङ्नुम्व्यवायेऽपि ८-४-२ इति सूत्रम्, रषाभ्यां नो णः समानपदे

---

**तीर्था**- न्यषीदत् - नि उपसर्गपूर्वकात् भ्वादिगणपठित विशरणाद्यर्थकात् षद्(लृ) धातोः लुङ्लकारः तस्य स्थाने तिबादेशः धातोः "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमः अनुबन्धलोपः तिपः "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायाम् "कर्तरि शप्" इत्यनेन शप् प्रत्ययः अनुबन्धलोपः नि अस द् अत् इति स्थितौ धातोः सदः "पाघ्राध्मास्था०" इत्यादि सूत्रेण सीदादेशः "प्राक् सितादड्व्यवायेऽपि" इत्यनेन नित्यं षत्वं प्राप्तौ निव्यभिभ्योऽड्व्यवाये वा छन्दसि इत्यनेन छन्दसि विकल्पेन षत्वे न्यषीदत् न्यसीदत् इति प्रयोग द्वय सिद्धिः।

अभ्यष्टौत् - अभ्यस्तौत् - इति अभिपूर्वक उपसर्गपूर्वकात् अदादिगणपठित स्तुत्यर्थकात् ष्टुञ् धातोः लङ्लकारः "धात्वादेः ष सः" इत्यनेन षकारस्य सकारे लङ् लकारस्य तिबादेशः अनुबन्धलोपः इतश्च इत्यनेनेकारलोपः "लुङ्लङ्लृङ्स्वडुदात्तः" इत्यनेन धातोः अडागमः अनुबन्धलोपः अभि अस्तुत् इति स्थितौ तिपः सार्वधातुकसंज्ञायाम् "कर्तरिशप्" इत्यनेन शपि "अदि प्रभृतभ्यः शपः" इत्यनेन तस्य लुकि उकारस्य "उतोवृद्धिर्लुकि हलि" इत्यनेन वृद्धिः सकारस्य "प्राक्सितादड्व्यवायेऽपि" इत्यनेन नित्यं षत्व प्राप्तौ "निव्यभिभ्योऽड्व्यवाये वा छन्दसि" इत्यनेन विकल्पेन षत्वे अभ्यष्टौत् तदभावे अभ्यस्तौत इति साधु।

नश्च धातुस्थोरुषुभ्यः। ८-४-२७।

धातुस्थात्। अ॒ग्ने रक्षा णः। शिक्षा णो अ॒स्मिन्। उ॒रु णस्कृधि। अ॒भीषु णः। मो षु णः।

---

८-४-१। इत्यतः रषाभ्यां नो णः इति, तयोर्य्वावचि संहितायाम् ८-२-१०८। संहितायाम् इति, पूर्वपदात् संहितायामागः इत्यतः पूर्वपदादिति चानुवर्तते। अवगृह्यते विछिद्य पठ्यते इत्यवग्रहः। ऋच्चासौ अवग्रहश्च ऋदवग्रहः तस्मात् ऋदवग्रहात् अवग्रहयोग्यादिति। अतः छन्दसि अवगृह्यमाणं पूर्वपदस्थात् ऋकारान्तात् परस्य नकारस्य णकारो भवति संहितायाम् अवग्रहयोग्यतायाम्।

नृमणाः- नृषु - नेतृषु मननवती, अथवा मनुष्येषु वृष्टिप्रदानमनो युक्ताः। अत्र पदपाठे नृऽमना इति। संहितायाम् - नृमणा इति। एवमेव पितृऽयामन् पितृयाणम्।

नश्च धातुस्थोरुषुभ्यः - इति सूत्रे नश्च इत्यत्र नस् इति अस्मद् शब्दस्य षष्ठ्याः बहुवचने, बहुवचनस्य वस्नसौ (८-१-२१) इत्यनेन नस् आदेशो गृह्यते न तु नासिका शब्दस्य पदन्नोमास् इत्यादि सूत्रेण नस् आदेशो गृह्यते व्याख्यानात्। धातौ तिष्ठतीति धातुस्व (र ष ऋ) णत्व निमित्त इत्यर्थः। धातुस्थश्च उरु च षु च इति धातुस्थोरुषचः तेभ्यः। अत्र छन्दस्यृदवग्रहाद् (८-४-२६) इत्यतः छन्दसि इति, अट्कुप्वाङ्नुम्व्यवायेऽपि (८-४-२) इति रषाभ्यां नो णः समानपदे ८-४-१ इत्यतः रषाभ्यां नो णः इति तयोर्य्वावाचि सहितायाम् ८-२-१०८ इत्यतः संहितायाम् इति चानुवर्तते। इत्थं सूत्रार्थः धातुस्थात् रेफार षकारात् ऋकारात् वा निमित्तात् परस्य उरुशब्दात् कृतषत्वस्य षुञ् धातोर्वा परस्य नसः नकारस्य णकारादेशो भवति।

---

**विमर्श-** देखकर ही शत्रुगण उसके बल से भयाक्रान्त होकर कम्पित होने लगते हैं।

ओष॒द्यदीमसुर्यां स॒च ध्यै॒ विषितस्तुका रोद॒सी नृमणाः।
आ सूर्येव विध॒तो रथं गात्त्वे॒ष प्रतीका॒ नर्भसो॒ नेत्या॥ ऋग्वेद १-१६७-५
यं त्वा॒ द्यावा पृथि॒वी यं त्वाप स्त्वष्टा यं त्वा सुजनिमा ज॒जान।
पन्था॒मनु प्रविद्वान्पितृयाणं द्युमदग्ने समिधा॒नो वि भाहि॥ ऋग्वेद १०-२-७

मन्त्रार्थ - हे अग्नि स्वर्ग पृथिवी और अन्तरिक्ष इन तीन लोकों ने तथा प्रजापति ने तुम्हें पैदा किया। तुम पितृ मार्ग के जानकार और समिध्यमान हो। दीप्तियुक्त होकर विराजते हो।

(क) अग्ने॒ रक्षाणो॒ अंहस॒ः प्रति ष्म देव॒ रीषतः। तविष्ठैर॒जरो दह॥ ऋग्वेद ७-१५-१३।

**विमर्श-** मन्त्रार्थ – हे अग्नि! हमें पाप से बचावो। हे द्योतमान अजरदेव तुम हिंसकों को अत्यन्त तापक तेज द्वारा जलाओ।

(ख) इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा।
शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशी महि॥ ऋग्वेद ७-३२-२६

मन्त्रार्थ – हे इन्द्र! तुम हमारे लिये प्रज्ञान (प्रकृष्ट ज्ञान) लाओ और जैसे पिता पुत्र को जैसे धन देता है वैसे ही तुम हमें धन दो। हे बहुतों से आहूत होने वाले! हम यज्ञ के जीव है। हम प्रतिदिन सूर्य को प्राप्त करें।

(ग) कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिं। उरुं कृदुरुणस्कृधि॥ ऋग्वेद ८-७५-११।

मन्त्रार्थ – हे अग्नि! हम कृषकों को गौवों के संरक्षण हेतु धन प्राप्त करावो। महान् (श्रेष्ठ) कार्य करने वाले तुम हम लोगों के प्रति अपनी महानता का व्यवहार करो।

(घ) अभी षु णः सखीनामविता जरितृणाम्। शतं भवास्यूतिभिः॥

मन्त्रार्थ – हे इन्द्र! तुम सखा स्वरूप स्तुति करने वालों के संरक्षक हो। तुम बहुत प्रकार की रक्षा सामग्रियों के साथ हम लोगों की रक्षा के लिए हमलोगों के सम्मुख आओ।

(ङ) भो षु णः परा परा निर्ऋति दुर्हपा वधति। यदीष्ट तृष्णया सह॥ ऋग्वेद १-३८-६

हे मरुत्! निर्ऋति (रक्षजाति की देवता) अत्यन्त बलशालनी है। उसका किसी भी प्रकार से विनाश नहीं किया जा सकता। वह हमारा बधन करे और हमारी तृष्णा के साथ विलुप्त हो जाय।

॥ इति अष्टमोऽध्यायः॥

॥ इति सिद्धान्तकौमुद्यां वैदिकी प्रक्रिया॥